श्रीः

॥ श्री मध्वेश हयवदन पाहि ॥



परमपूज्य पण्डितराज

श्री जालिहाळ श्रीनिवासाचार्याणामन्तेवासिना

श्री द्वारकानाथाचार्येण विरचिता

# गोमञ्जरी

(रघुनाथसूरिकृतमाणिक्यमन्जरी इत्याख्य अद्वैत ग्रन्थस्य खण्डनात्मिका)

श्री गुरुभ्योनमः

# गोमञ्जरी

परमपूज्य पण्डितराज श्रीजालिहाळश्रीनिवासाचार्याणां
प्रियन्तेवासिना

## पं० श्रीद्वारकानाथाचार्येण विरचिता

(माणिक्यमञ्जरी खण्डनात्मिका)

संशोधकः
पं श्रीनिवासाचार्यः ताम्रपर्णी

23-7-04

बनशङ्करी प्रकाशनम्
2004

**Gomanjarī** - authored by Śrī Dwārakānāthāchārya. A critique of the Māṇikya Manjarī of Raghunātha Sūri. Compiled and edited with a foreword in Sanskrit by Śrī Śrīnivāsāchārya Tāmraparṇī.

**Published by : Banashankari prakashana**

**First edition Jan 2004**



**Copies: 1000**

**Price : Rs. 100.00**

Copies available with :
**Shri Dwarakanathacharya**
**S-39, Kirloskar Colony**
**Basaveshwaranagar**
**Bangalore - 560 079**

**Typesetting : This work has been typeset using the Frans Velthius Font, Devanag transliteration software and LaTeX typesetting software on a Linux desktop.**

**Printed at: Sashri Printers, Bangalore**

# ग्रन्थकारस्य वाणी

यथा कंटकस्पर्शमात्रेण हस्तस्य तन्निरासार्थं प्रवृत्तिः तथा श्रीमध्वस्य चारित्र्यविषये दोषोद्घटने माणिक्यमञ्जरीनामके ग्रन्थे, स्वभावतः प्रवृत्तिः भवति तदुक्तदोषाणां निराकरणे ।

*निन्दां भगवतः शृण्वन् तत्परस्य जनस्य वा* इत्यादिवचनसमूहात् श्रीमदान्दतीर्थस्य निन्दाश्रवणेन बहुदुःखिताः वयं अस्मद्गुरुवर्याणां प्रेरणया च कार्येऽस्मिन् प्रवृत्ताः ।

अस्मद्गुरुवर्याः प्रतिवादिनां निराकरणे दीक्षिताः, सिद्धान्तस्थापने बद्धादराः, सनातनधर्मानुष्ठाने सदासक्ताः, सर्वत्र सच्छास्त्रविमर्शकाः, न्यायामृतार्णवादिबहुशास्त्रग्रन्थप्रणेतारः, शिष्याणां ज्ञानदाने सिद्धहस्ताः, स्वगुरुःप्रातःस्मरणीय श्रीसत्यध्यानतीर्थानां आज्ञां, श्रीमुख्यप्राणः श्रीहरेराज्ञामिव धारणे सदासन्नद्धाः, भागवतधर्माचारचरणशीलाः, जालिहाळोपाह्व श्रीश्रीनिवासाचार्याः । ते च गुरवः मां अल्पे काले स्वामृतवाण्याभिषेकेन पुनीतं कृत्वा, सच्छास्त्रमुपदिश्य स्वरूपोद्धारं अकुर्वन् ।

तेषामेवानुग्रहेण, मुख्यप्राणस्य तथा श्रीहयवदनस्य प्रेरणया कार्येऽस्मिन्प्रवृत्ता वयं, तेषां सर्वेषां तथा स्वोत्तमानां सकलगुरुवर्याणां अनुग्रहं प्रार्थयामहे । मातृस्थानीया परमपुज्याया मातृश्रियो **वैनिमहोदयायाः** नमःशतं समर्प्य अनुग्रहं याचयामहे । तथा पूज्यपित्रोरपि अनुग्रहं आशास्महे ।

अस्यग्रन्थस्य प्रत्यक्षरस्य संशोधनं कृत्वा भूमिकाविलेख-

नेन च कृतसप्रेमसहायानां, सतीर्थानां **प० श्रीताम्रपर्णी श्रीनिवासाचार्याणां**, उपकारस्मरणं कृत्वा तेषां च श्रीहयवदनः अत्याधिकज्ञानभक्तिवैराग्यादिसाधनजातं वितरत्विति अस्मदुपास्यं हयग्रीवं प्रार्थयामः ।

अक्षराणां संमेलने बह्वासक्तियुक्तस्य सच्छास्त्राध्ययने बद्धादरस्य अस्माकं शिष्यवर्यस्य **चि० श्रीरघुनन्दनस्यापि** ज्ञानादिकं ददातु श्रीहयवदन इति प्रार्थयामः ।

अस्य प्रकाशने प्रवृत्ताया **बनशङ्करी प्रकाशन** संस्थायाः अधिकारिणां च श्रेयोभिवृद्धिं आशास्य विस्तरात् विरमामः सर्वे सज्जनाः अस्मिन् कार्ये प्रवृत्तानां अनुग्रहं कुर्वन्तु इति च विज्ञापयामः ।

इति विद्वदनुचरः
*श्रीद्वारकानाथाचार्यः*



स्वभानुसंवत्सरे
अक्ष्योभ्यतीर्थानां
पुण्यदिने
14 - 12 - 2003

श्रीः
श्री गुरुभ्यो नमः
श्री परमगुरुभ्यो नमः

# भूमिका

आपादमौळिपर्यन्तं गुरुणां आकृतिं स्मरेत् ।
तेन विघ्नाः प्रणश्यन्ति सिद्ध्यन्ति च मनोरथाः ॥
करोतु मम कल्याणं हरिर्हयमुखाभिधः ।
गुरुश्च मध्वनामा मे वरदोऽस्तु निरन्तरम् ॥
यत्पादाब्जविनिस्सृता सुरनदी न्यूनाऽपि मूर्ध्न्यादृता ।
यन्मूर्तेरनुचिन्तनाय च जटाधारी शिवो दीक्षितः ॥
यत्प्रीत्यै शिरसा धृतः स्वसहजचन्द्रः श्रियः सोदरः ।
तं वन्दे गिरिजाधवेन सततं ध्यातं परं श्रीहरिम् ॥

अपश्चिममिदं विपश्चित्प्रवराणामपक्षपातिनां यत् दुःष्पक्षक्षपणमपेक्षितमपेक्षितमर्पयति सुक्षेमं सक्षमं सत्पक्षरक्षणदीक्षाणामिति ॥ इदं च न तिरोहितं हितमतिरोहितमतितरां तिरोभवति सुजनानां दुर्मतभञ्जनमञ्जः मुदञ्जनयन्न यावदुदयञ्जयद्यातीति ॥ महदिदं प्रमोदस्थानं यद्वैज्ञानिकव्याप्ततमसि प्राचीनप्राज्ञवैदिकविज्ञानभास्करेऽस्तंगते अद्यत्वेऽपि शास्त्रीयपरिलोचनापूर्वकं निर्मीयन्ते कृतय इति ॥ तादृशेष्वन्यतमेयं गोमञ्जरी वेदशास्त्रेभ्य संरचितगवां दुर्मतपर्वतभेदनार्थं प्रवृत्तस्कुलिशानां मालरूपा, पवित्रमणिमञ्जरीमण्डनपरा माणिक्यमञ्जरीसंच्छेदिका वैदिकभास्करप्रखरकिरणप्रकरैः सुशोभं प्रकाशमाना धेनुरिव सुजनपूज्या आप एव आस्वाद्या पण्डितवर्यैः परमपूज्यजालिहाळश्रीश्रीनिवासाचार्याणां प्रियान्तेवासिभिः नित्यपाठ-

प्रवचनरतैः सदाचारदीक्षादक्षैः श्रीद्वारकानाथाचार्यैः रचिता विराजते इतीयं महती स्वानन्दभूमिः ।

## गोमञ्जरी

विदितं भवेत् विदुषां **माणिक्यमञ्जरी** नाम शङ्कराचार्यचरित्रवर्णनव्याजेन श्रीमणिमञ्जर्युक्तदोषोद्धरणायास्थितप्रयत्नः श्रीमध्वमतसिद्धान्तदूषणोद्देशः ग्रन्थ एकः स्वोपज्ञभावदीपिकेति व्याख्यायुतः रघुनाथसूरिणा अपरिचितपूर्वेण केनचित् विरचित इति । स च प्राकाश्यं नीतो गतवर्षे (चित्रभानु संवत्सरे) महिषूरपुरवासि हित्लळ्ळी सूर्यनारायणभट्टाख्येन पण्डितेनेति च । अत्र हि भूमिकायां प्रकाशकेन ग्रन्थे च व्याख्याने बहुशः शांकरचरित्रनिर्दुष्टतायै अद्वैतसिद्धान्तमण्डनाय श्रीमध्वाचार्यस्य यथाकथंचित् दोषित्वप्रतिपादनाय, द्वैतमतदूषणाय च महान्प्रयत्नः कृत इति नापूर्वं तद्ग्रन्थावलोकनावकाशजुषाम् विदुषाम् तत्प्रयत्नस्य वैफल्य आफलयितुं प्रवृत्तेयं **गोमञ्जरी** नाम्नैव माणिक्यभेदनक्षमवज्रमञ्जरीं, दुर्वादनिराकरणचणवैदिकाभियुक्तपूर्वाचार्यवाङ्मञ्जरीं, मिथ्याज्ञानाज्ञानतमोनिवर्तकसौरप्रभामञ्जरीं स्वां च निरूपयन्ती, वेदप्रतिपाद्यस्य मुख्यप्राणावतारस्य श्रीमन्मध्वाचार्यस्य निरतिशयं महिमानं प्रतिपादयन्ती, सज्जनमनसि उल्लासं अवश्यं जनयेदिति नाश्चर्यमेतत् । तदवलोकनसौभाग्यं अस्मासु विधाय बहूपकृतमेभिः विद्वद्वरैरिति आवेदयितुं नितरां सन्तुष्यति नोमनः ।

प्रथमं माणिक्यमञ्जरी भूमिकां विचारयामः ।

1) प्रथमं मङ्गलाचरणं विशदतया निरूपितम् । आद्यपद्यस्य अयं सारः इति च वर्णितम् ॥ सकलजगदुन्मूलनप्रवृत्तगङ्गानदीनिरोधेन दुष्टनिबर्हणत्वं, फाललोचनग्रहणेन परमदयालुतां,

मुनिजनलक्षणजटाधरत्वेन सत्वसंपत्तिं पार्थप्रहारवत्वेन भक्तापराधसोढृत्वं भक्तजनशाश्वतकीर्तिसंपादनदीक्षितत्त्वं चाभिप्रेत्य गङ्गाधरत्व, भाल(फाल)लोचनत्व, जटाधरत्व, पार्थप्रहारित्वानि अभिव्यञ्जयति इति । तदिदमसारम् गङ्गाधरत्वं यदि तन्निरोधेन दुष्टनिबर्हणत्वमभिव्यञ्जयति तर्हि गङ्गाया दुष्टत्वं उक्तं स्यात् । तथा च तद्धारित्वमपि दोषः आपद्येत । न हि कश्चित्स्वस्थात्मा शत्रुं दुष्टं स्वशिरसि धारयेत् ।

2) सांसारिकदुःखमनुभवतः जगतः शाश्वतमोक्षं अप्रदाय केवलं किञ्चित्कालं सुषुप्त्यापादनार्थं स्वलोचनवह्निना दहन् फाललोचनः कथं परमदयालुः संपन्नः ? इति न ज्ञायते । यदि तस्य च परमदयालुतास्वभावः निमित्तान्तरेण व्यज्येत तर्हि-किमनेन ?

3) मुनिजनलक्षणजटाधरत्वेन सत्वसंपत्त्या स्वोत्तमोपासकत्वं चाभिव्यज्यते इति न विस्मर्तव्यम् ।

4) भक्तापराधसहिष्णुत्वं तु अक्षतत्त्वव्याप्यमिति क्षतिरियं पार्थप्रहारत्वरूपा निर्दुःखत्वक्षतिकरा इति विभावनीयम् ।

5) भक्तजनशाश्वतकीर्तिसंपादनदीक्षितत्वादेः किं अभिव्यञ्जकमिति न स्फुटम् आहत्य हेतूकरणं तु असङ्गतदुष्टम् ॥

अतः गुणस्तुतिरेव विधेया परमवैष्णवस्य महादेवस्य तुष्ट्यर्थं इति एषा दिक् ॥

गङ्गायामिव लोचनाग्नितपनाच्छौष्क्यं गतायां जटा-
वल्ल्यै गाण्डिवभेदनिम्नमिषतो निर्माय तोयाशयम् ।
सेक्तुं तां शिरसीव यस्य निहितश्चन्द्रः पृथासूनुना
प्रज्ञानेन्दुकलावतंसितशिराः श्रेयांसि दद्यात् स नः । 1 । इति
परस्य प्रथमःश्लोकः ।

अयमत्र परमङ्गलाचरण श्लोकस्थदोषदूषणपरः श्लोकः -
गङ्गाचेद्यदि शुष्कतां परिगता गङ्गाधरत्वं च्युतं ।
कुन्तीपुत्र निखातता यदि शिवे भुतस्तदा स व्रणी ॥
सेकार्थं शिरसीह तस्य निहितः चन्द्रस्तदा दुःखिता ।
ह्यापाद्येत परैः परस्य यदि ते स्तोत्रं शिवस्येदृशम् ॥

ततो व्याख्यायां अर्थसङ्ग्रहः दृश्यते । एकैकशः पश्यामः -
1) महाप्रलयस्यैव स्मशानत्वेन परवस्तुनि तदुररीकर्तव्यमिति समाधानमिति ॥ नेदं तेनापि समाहितं । यतः स्वकीयाः स्मशानं पवित्रं मन्यन्ते नापि तत्र वसन्ति, तथा वसितुमिच्छन्ति वा यदि महालयस्यैव स्मशानस्यादोषत्वं, न प्रसिद्धस्य तर्हि प्रसिद्धस्मशाने शिवो न वसतीति किं न ब्रूषे ? अधिकस्य वैय्यर्थ्यात् । संसारकालीनस्मशानवासित्वस्यैव पुराणादिषुक्तेः । नोपपद्यते च तथावचनमपि ।
2) शिवस्य स्मशानवासः परमदयालुताबोधकः इति । समर्थः खलु स्वयं दोषभागभूत्वा लोकाननुजिघृक्षति ततश्च परमदयालुर्भवति । यद्यन्यार्थं स्वयं दोषवान् भूत्वा अन्यान् रिरक्षिषति तस्यासामर्थ्यं किल भवति । अतः नेदं समाधान प्रत्याययति ।
3) *शिवानुचाराणां भुतादीनां शिवांशत्वमिति कूर्मपुराणानुसारेण समाधानम् ।* इति ॥ किं भूतादीनां शिवांशत्वेन शिवाभे-

दस्तवेष्टः ? भिन्नत्वेऽपि तदाविष्टत्वमात्रं इष्टं इति पृच्छामः ? नाद्यः । सर्वस्यापि शिवाभिन्नत्वेन तथात्वे, विशिष्य पिशाचादिमात्रस्य शिवांशत्वकथनवैय्यर्थ्यात् । तन्मात्रस्य शिवाभेदे गुणोत्कर्षप्रदर्शकरूपग्रहणं विहाय क्षुल्लकरूपग्रहणानौचित्यात् । अनुचरत्वानुपपत्तेश्च । न द्वितीयः तथासति दोषः स्फुटः । अद्वैतहानेः । कूर्मवचनानुदाहरणाच्च दुष्टोयं पक्षः ।

4) *सदाशिवस्य अनन्तकल्पीयब्रह्मकपालमालाधारणं परमोत्तमताख्यापकमिति प्रतिवचनम्* इति नीरसम् प्रतिवचनम् । एककपालधारित्वस्य अपवित्रतापादकत्वे शङ्किते अनन्तकल्पीयब्रह्मकपालानां धारणोक्तेरनुत्तरत्वात् । नितरां दोषित्वापत्तेः । प्राक्कल्पीय ब्रह्मकपालानां प्राकृतत्वेन प्रलीनत्वावश्यंभावात् उत्तरकल्पेषु तद्धारणायोगाच्च । स्वाङ्गुलिसंलग्नस्य ब्रह्म कपालस्य मोक्षार्थं कृतभूरिपरिश्रमस्य तप आचरणादिवृत्तेः श्रवणाच्च । न हि राजा कश्चनास्थितात्मा मृगायायां स्वहतमृगकपालमालाधारी भवति । यदि भवेत्तादृशः कश्चित् जनैरादृतः न भवेदिति ॥

5) "शिवस्य ब्रह्मादिनिग्रहकर्तृत्वेन क्रूरतेति पूर्वपक्षे दुष्टानां नियन्तुरयं धर्म इति प्रतिक्षेपः" इति । अहो देव द्रोहकरी दुर्बुद्धिरस्य ! एकत्र त्रिमूर्तिनां अभेदं वदन् अपरत्र ब्रह्मादीनां दौष्ट्यं प्रलपति । तेषां दुष्टत्वाङ्गीकारे तदभेदो वा वक्ष्यमाण परस्परस्मात् प्रादुर्भावो वा कथं घटेत ? ततश्चोपजीव्यविरोधस्वव्याघातादिः शिवस्य स्यादिति अत्यन्तनीरसमिदम् ॥

6) "शिवस्य ब्रह्मपुत्रतेति परेषां वचनं परस्परस्माद् ब्रह्मादेः प्रादुर्भावादकिङ्चित्करम् " इति । तदसत् ब्रह्मणः क्वचिच्छिवपुत्रत्वेऽपि शिवस्य ब्रह्मपुत्रत्वस्यावर्जनीयत्वेन ब्रह्मणः स्वपितुः कपालच्छेदे पितृद्रोहादिदोषस्य अपरिहार्यत्वापत्तेः ।

7)“सर्वलोकनियन्तुः शिवस्य रोदनकर्तृत्वकथनं न न्याय्यम् । इति । नेदमुत्तरम् । किञ्च स्वाधमसर्वलोकनियन्तृत्वेऽपि शिवस्य अस्वातन्त्र्यापूर्णत्वादीनां दोषाणां सद्भावात् रोदनस्यापि न्याय्यत्वात् । सर्वलोकजेतुरपि परमवीरस्यार्जुनस्याभिमन्युमरणादौ रोदनदर्शनात् । न च विष्ण्वतारस्य कृष्णस्य बाल्ये रोदनं दृष्टमिति वाच्यम् । तस्यादोषत्वात् । दुर्जनमोहनार्थं विडंबनत्वात् ॥ न च वयमपि तथैव ब्रूम इति वाच्यम् । त्वन्मते सर्वस्य ब्रह्मत्वेन मोहनानर्हत्वात् ।

8)“पुराणादि सम्यक् परिशीलयन्तु” इति । इदं तु स्वेन स्वं प्रत्येव वक्तव्यम् । तथा च सङ्ग्रहः ।

ब्रह्मस्वाङ्गविनाशनं शिवकृतं नैवं तदस्मन्मतं ।
स्यादिष्टं सुतभावतोऽत्र जगतामेवं तु यद्याग्रहः ॥
स्वाङ्गस्यापि न भेदनं सुरवरैरच्छेद्यचापच्छिदौ
शक्तिर्युक्ततमाद्य बाणसमरे रुद्राद्यशक्ये हरेः ॥
जीर्णता यदि रौद्रस्य धनुषस्तव संमता ।
रौद्रे वस्तुनि विश्वासः कथमास्थीयते त्वया ?
श्रीचक्रादंबरीषस्य भीतो यो भुवनत्रयम् ।
परिक्रम्यापि रक्षां न लेभे शक्तः कथं नु सः ?
भस्मतो वृकमनश्चैव भीतो विष्णुपदाश्रयी
रक्षितो वचनात्स्वस्य समर्थः स कथं हरः ?

9)“गङ्गायाः विष्णुपादाज्जातायाः शिवशिरसि धृताया हैमवत्याश्च भेदाज्ञानेन भ्रान्ताः तथा च सङ्ग्रहः” इति ॥ तदयुक्तम् । तथाहि - त्वद्रीत्या भेदज्ञानिनः किल भ्रान्ताः । तत्कथमद्यभेदज्ञानिनः भ्रान्ताः संपन्नाः । गङ्गाया अप्यवरां हैमवतीं धृतवतो रुद्रस्य दोषानिस्तारात् । भक्षिते लशुनेति न्यायमनुसरति ॥

तथा च तत्खण्डनसङ्ग्रहः -

भूलोके यदिचेत्त्रिविक्रमपदाङ्गुष्ठोद्भवा निमग्नगा
वर्तेत स्वपितॄन् भगीरथमहीपालस्तयैवोद्धरेत्
तद्यत्नादनुमीयते भुवि न सेत्युर्वीशसंपादितां
गङ्गां विष्णुपदीं दधार शिरसा शंभुःस्वपावित्र्यदाम्

गङ्गा विष्णुपदी शिवेन विधृतेत्युक्तं महाभारते
श्रीमद्भागवते शिवस्य शिवता तत्पादनीरोद्भवा ।
कौर्मे नाम परं सुरेशसरितोह्यनुक्तं विरोधो न ही
त्येवं तत्क्रमशो भुवं प्रतिगता गङ्गा धृता शंभुना ॥

10) शिवस्य तामसत्वं नास्माभिरभिहतमिति अनुक्तोपालंभनं इदम् ।

11) एतद्विषये वक्तव्यं तद्ग्रन्थपर्यालोचनवेलायां वक्ष्यते ।

*माणिक्यमञ्जरी* । इयमत्र छलजात्यादि बहुदोषपूरिता पुंश्चलीव साधून्निन्दन्ती स्वैरं चरति इति तत्र तत्र प्रदर्शयिष्यामः ।

1) तत्र मङ्गलाचरणविषय भूमिकादूषणावसरे दूषितः - शिवं निर्दुष्टं, विष्णुं च दोषिणमुपपादयितुं अयं स्कान्दे केदारखण्डे इत्यारभ्य (पृ॰ 23) श्रीरामकथां वर्णयति । तस्यायं आशयः । अकृततपसः देवा रावणं रुद्रानुग्रहपात्रं जेतुमक्षमाः विष्णुबोधिताः रुद्रं प्रसादयितुं गताः । रुद्रोऽपि विना तपः न दृश्य इत्युक्त्वा नन्दिकेश्वरेण प्रत्यावार्तिताः । ते च देवा पुनः

विष्णुं प्रति जग्मुः । तत्र हि विष्णुना देवानामीप्सितं कार्यं रावणस्य तपोवीर्यभ्रंशमत्यन्तानुचितसीतानुरागमोहानुवृत्ति संपादनेन कारयित्वा निबर्हणीयमिति तदुपायोपदेशेन समाश्वासिताः । तदर्थं विष्णुः सीतारूपया विद्यया सह अवनौ अवतीर्णश्चेति ० ० ० इत्याह । अस्याहो मौर्ख्यस्य पराकाष्ठता ! रामकथां प्रसिद्धरामायणादनवलोक्य स्कान्दादवगन्तुं प्रयतते । अस्तु वा यत्किञ्चित् स्कान्दे । तव प्रियः रुद्रप्रियः रावणः किमिति सीतायां मुमोह ? किमिति लोककण्टको बभूव ? किमिति सर्वर्षिभिः दुष्ट इति प्रत्याख्यातः ? यां यां पश्यति स्त्रियं तत्र तत्र मुह्यमानं कामुकप्रवरं खलु ब्रह्मा शशाप यत् बलात्कारोऽपि चेत् यां यां काञ्चन स्त्रियं तव शिरःशतधा भिद्यतामिति । विष्णुभक्तप्रह्लादादिवधाय प्रार्थयन्तो हि देवा रावणवधं काङ्क्षामासुः । अनेन जानीमः रुद्रशिष्योऽयं सर्वदूष्योऽपि भवादृशमात्रप्रियः कथं सञ्जात इति । किञ्चेह शमयोग्यं स्वयशोनाशकं त्रैलोक्यरावणं रावणं किमिति महादेवः न सदुपदिदेश ? किमिति वा नशशास ? किमिति स दौष्ट्यान्न परावर्तयामास ? अहो दुष्टपक्षपातः अद्वैतिनां अन्यस्याः कस्या अपि मोहेन अभ्रष्टतपः किमिति सीतानुरागात् बभ्रष्टं ? विशिष्टरुद्रतपः पूतं परदाराभिमर्शनात्कथं न निरुरोध तद्गुरुर्महादेवः ? ॥

अनेन कंसबकजरासन्धतृणावर्तबाणशंबरकीचकहिडिंबमणिमल्लातापील्वलहंसडिबिकसाल्वेन्द्रजित्वृकभस्मशकटप्रभृतयः किमिति रुद्रशिष्याः अभूवन्निति स्फुटं प्रतिपद्यन्तां बुधाः । विभावयन्तु च किमिति तत्पक्षपातिनः ईदृशान् अद्वैतिनः दैत्यानवदत् श्रीमदाचार्य इति ।

2) यच्चोक्तं (पृ 24) "*किञ्च विष्णुनिग्रहेणाप्युत्तमत्वं मन्यामहे । तस्य नियन्तृधर्मत्वात् । तन्निग्रहश्च पुराणेष्वभिहितः । तथाहि स्कान्दे "यस्य हस्ते ब्रह्मशिरः यस्य हस्ते हरेः शवः यस्य हारे कूर्मपृष्टं तस्य कोऽधिकः समः* " इत्यादि । तदत्यन्तं अयुक्तं । यतो हि त्वयैव उत्तरत्र (पृ 34 ) -

"यो विष्णु स स्वयं ब्रह्मा यो ब्रह्मा सोऽहमेव च ।
वेदत्रयं च यज्ञाश्च पण्डितेष्वेव निश्चयः " इति वाराहे ।

यस्तं वेत्ति स मां वेत्ति योऽनु तं स हि मामनु ।
रुद्रो नारायणश्चेति तत्वमेकं त्रिधा कृतम् ॥ इति भारते ॥

इत्युक्त्वा शिवस्य विष्ण्वभिन्नत्वं, तथा विष्णुभक्तानां शिवाविरोधित्वं च किल प्रतिपिपादयिषितम् । इदानीं तन्निग्रहवचनं व्याहतम् स्वस्यापि शिवाभेदमभिलषतः तवोचितं चेदम् ॥ स्वाभिन्नमपि विष्णुं यदि शिवो निगृह्णाति तर्हि त्वामपि तथाविधं निगृह्णीयादेव । किञ्च विष्णोः कं दोषमालक्ष्य तं शिवो निजिगृक्षति ? न दुष्टानां रावणादीनां हननादिं । तस्यादोषत्वात् । न शास्त्रविरुद्धव्यापारादिं । तस्मिन्तस्याभावात् । स्याच्चेत् तदिदमित्थं इति निर्वक्तव्यम् । अतस्तदभावात् दोषोऽपिनास्तीति निश्चीयते । प्रत्युतानिग्राह्यस्य निग्रहस्यैव दोषत्वात् । शिवस्य दुष्टाभेदायोगाच्च । स्वस्यैव दुष्टत्वापत्तेश्च । अतो यत् पुराणादि उदाहृतं तदप्रमाणम् । अतदर्थं वा ।तथाहि - यस्य हस्ते ब्रह्मशिरः=वेदानां शिरस्थानीयां उपनिषत्, यः उपनिषदं सम्यग्जानाति इत्यर्थः, हरेः शवः=शं सुखं तत्प्रदं

वः ज्ञानं=हरिगुणविषयकं सुखप्रदं ज्ञानं यस्य हस्ते यद्वश-गमित्यर्थः । यस्य यत्संबन्धिकूर्मपृष्टं समाध्यादिसाधनमासनं हारे= हरेः अयं हारः हरिसंबन्धिनि भक्ते साधनतयाऽस्तीत्यर्थः तस्येदृशस्य वेदज्ञानिनः हरिगुणाप्रतिपादकस्य को वा अधिकः समो वा = मनुष्यादिषु इत्यर्थः तथा च साधकेषु अयमुत्तम इत्यर्थः । इति दिक् । विष्ण्वाधिक्यविरोधीनि यानि वेदवाचांस्यपि तानि योज्यान्यानुकूल्यादिषु अभियुक्तोक्तेः ।

ननु शिवः भस्मासुराद्भीतो न पालायितवान् किन्तु भस्मासुरवधार्थं विष्णुध्रियमाण मोहिनी रूपे भैरवोत्पादनाय भस्मासुरस्य विष्णुसमीपप्रापणार्थं एक एवं कृतवान् । उक्तं चेदं स्कान्दे -

ततो नारायणी भीरू रुद्रं प्राप्य जगाद तत् ।

नारायणीं समालिङ्ग्य भुजाभ्यां साधुसाध्विति ॥

इति चेन्मैवम् । वृकासुरभियापलायितस्य उपपत्त्यन्तराभावात् । भैरवोत्पादनार्थं एवं कृतमित्यत्र प्रमाणाभावाच्च । उदाहृत श्लोकस्यतदर्थत्वाभावात् । किञ्च भैरवोत्पादनस्य भस्मासुरवधस्य च कः संबन्धः ? भैरवोत्पादनार्थं स्वस्य नारायणी समीपगमनेनैवालं इति । स्थितौ । भस्मासुरस्य विष्णुसमीपप्रापणं व्यर्थम् । नारायणीमेव भस्मासुर समीपप्रापणेनापितद्वधस्य शक्यत्वे भियापलायनं अवश्यं तु उद्देशे शङ्कां जनयति । यच्च भविष्यत्पुराणं प्रमाणवचनत्वेनोदाहृतम् न तदस्त्याकरे कुत्रापि । अप्पय्यदीक्षितग्रन्थोदाहरणं तु स्वव्यूहमात्ररमणीयम् ॥ किञ्च नारायणस्य नृसिंहाद्यवतारेषु कृत दौष्ट्यशिक्षणं शिवे न कृतमित्यङ्गीकारः श्रीहरिनिन्दापर्यवसायीति एतत्स्वोदाहरिष्यमाणप्रमाण (पृ 36) विरुद्धम् । तथा हि त्वदुदाहृतम् -

अवमत्य हृषीकेशं मां यजन् मां विनिन्द्य च - इति

यच्च शिवस्य माध्वैः तामसत्वमुक्तमिति भ्रान्त्या तत्खण्डनाय प्रवृत्तं तदसङ्गतम् कुत्रापि श्रीमदाचार्यैः तदनुयायिभिर्वा शिवनिन्दाया वा तस्य तामसत्वस्य वा अकथितत्वात् ॥

यत्तु ब्रह्मविष्णुमहेश्वराणां अभेदमभिप्रेत्य तदनुकूलतया अनेकपुराणवाक्यान्युदाहृत्यान्ते - "एतेन शिवान्नारायणोऽधिक इति केषांछ्रिदुक्तिः परास्ता अभेदस्य व्यक्तत्वेन न्यूनाधिकभावनाया अयुक्तत्वात् खद्योतो यदि चण्डभानुसदृशस्तुल्यो हरिः शम्भुना किंपाको यदि चन्दनेन सदृशस्तुल्योऽहमीशेन तु अज्ञानं यदि वेदनेन सदृशं देवेन तुल्या जनाः किं वक्ष्ये सुरपुङ्गवा अहमहो मोहस्य दुष्चेष्टितम् ॥ इति स्कान्दगतब्रह्मगीतावचनेन विष्णुसाम्यस्यैव निषेधे आधिक्यनिषेधस्य कैमुतिकन्यायसिद्धत्वात् ।" इति तन्नीरसम् । तथाहि - किं हरस्य हर्यपेक्षयाऽऽधिक्यं अभ्युपगम्य साम्यं इहनिषिद्धं मन्यसे ? उत तयोरभेदं ? अथवा साम्यनिषेधव्यापकत्वं आधिक्यनिषेधस्य अभ्युपैषि ? ॥ नाद्यः ॥ "अभेदस्य व्यक्तत्वेने"त्यादिना शिवस्यापि आधिक्यस्य त्वयैव खण्डनात् ॥ न द्वितीयः अभेदस्य साम्यव्याप्यत्वात्॥ नान्त्यः ॥ सत्याधिक्ये साम्यनिषेधावश्यंभावात् ॥ त्वयैव "शिवाधिक्यस्य कण्ठतः प्रतिपादनादि"त्युक्तेश्च ॥

## शंकरचरित्रविचारः

अत्र माणिक्यमञ्जर्यां स्वीयद्वितीयश्लोकं तद्व्याख्यानं चारभ्य शाङ्करचरित्रं शुद्धं वर्णयितुं प्रयतितं तत्कृति कृता। अत्र शङ्क-

रस्य श्रीशङ्करावतारत्वनिरूपणाय चानेक प्रमाणान्यन्विष्टानि । तथा तस्य मणिमन्नामकदैत्यावतारत्वं निरूपयन्त्याः श्रीमन्नारायणपण्डिताचार्यप्रणीताया मणिमञ्जर्याः निरासाय च प्रयतितम् । तत्सन्दर्भे अवाच्यशब्दप्रयोगान्, तथा श्रीमध्वस्य दैत्यत्वकथनं च प्रतिबन्धितया, तत्र चानेक तामसपुराणमोहकवाक्योदाहरणं चायं वादी करोति तत्र प्रथमं शङ्कराचार्यस्वरूपविषये परस्परं विरुद्धतयोपलब्धानि पुराणवाक्यानि तथाऽन्यवाक्यानि च अवलोकयामः ।

| शङ्करस्य दैत्यत्वं पद्मपुराणे | शङ्करावतारत्वं भविष्यपुराणे |
|---|---|
| मायावादमसच्छास्त्रं प्रच्छन्नम् बौद्धमुच्यते । | चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति । |
| मणिमान्निहतः पूर्वं भीमेन शुभबुद्धिना । | गुरुरद्वैतविद्याया उपदेष्टा शिवस्ततः ॥ |
| सञ्जातो ब्राह्मणकुले तपसा मां प्रसाद्य वै । | कलौ रुद्रो महादेवः शङ्करो नीललोहितः । |
| मिथ्यावादमसच्छास्त्रं चकार स तु सङ्करः ॥ | लिङ्गे कल्यब्धौ मज्जमानां तान् दृष्ट्वानुक्रोशतोऽंबिके ॥ |
| शास्त्राणीमानि गिरिजे तामसानि स्कान्दे च । | ममांशभूतं देवेशि कलोवपितपोधनम् । |
| मणिमत्पूर्वका दुष्टा दैत्या आसन् कलौ युगे ॥ | केरलेषु तदा विप्रं जनयामि महेश्वरी ॥ |
| कृष्णे भीमे च विद्वेषं कुर्वन् भूमावजायत । | भविष्यति महादेवि शङ्कराख्योऽथ मस्करी । |
| कालटी ग्रामतो रुद्रवराल्-लोकान् प्रतारयन् । | इति स्कान्दे । |

| | |
|---|---|
| श्रीसुमध्वविजये -<br>यो भूरिवैरो मणिमान्मृतः प्रा-<br>ग्वाग्मी बुभुषुः परितोपितेशः।<br>स सङ्कराख्योऽङ्घ्रितलेषु जज्ञे<br>स्पृधा परेऽप्यासुरिहासुरेन्द्राः॥ | ईशोप्यभूत्समदविद्वदभेद्यदर्प<br>सर्पाहितुण्डिकविदग्धस-<br>हस्र सेव्ये विद्याधिपत्य<br>परनाम्नि कुले शिवाख्या<br><br>दार्यापतेरविसहस्ररुचिः<br>कुमारः<br>(प्राचीनशंकरविजये 3-85)<br>ततः सर्वात्मको देवः<br>चिदंबरपुराश्रितः<br>—- आनन्दगिरीय |
| मणिमञ्जर्यां -<br>तमेव समयं दैत्यो<br>मणिमानप्यजायत।<br>मनोरथेन महता<br>ब्राह्मण्यां जारतः खलात् ॥ | ततो महेश किलकेरलेषु<br>श्रीमदृषाद्रौ करुणासमुद्रः ।<br>पूर्णानदी पुण्यतटे स्वयं भू-<br>लिङ्गात्मनाऽनङ्गधगा-<br>विरासीत् ॥<br>(विद्यारण्यीय शं वि)<br>(2-1) |

"देवो वा दानवो वा स्यात् भाष्यकारो न मानवः " इ-त्यभियुक्तवचनं अनुस्मृत्यान्यतरनिश्चयार्थं तत्प्रमाण्येव किञ्चि-दालोचयामः । शिवावतारत्वमभ्युपगच्छतां तावत् स्पष्टं त-द्दैत्यत्वपरपुराणविरोधः । परमस्य शिवस्य दैत्यत्वायोगात् तदप्रामाण्यकथनं विना नास्ति गत्यन्तरम् शंकराचार्यस्य दै-त्यत्ववादिनां तु तस्य प्राग्भवे सुचिरं चीर्णतपस्तुष्टस्य शूलिनः अनुग्रहरूपशिवांशत्वाङ्गीकारात् शिवावतारत्वपरप्रमाणाविरो-

धः सुशकः । अत एव स्कान्दे "ममांशभूतं केरलेषु विप्रं जनयामि " इत्युक्तं अन्यथा "अवतरिष्यामि" इत्यवक्ष्यत् । प्रायः सर्वदैत्यानामपि शिवानुग्रहतो लब्धबलत्वं पुराणप्रसिद्ध-मिति नेदमसंभवि ।

1) किञ्च शंकराचार्य चरित्रपर्यालोचनमपि तत्र बहूपका-रि इति तदपि किञ्चित्कुर्मः ॥ तत्र श्रीमणिमञ्जरीकाराः एनं विधवासुतं, जारत उत्पन्नं वर्णयन्ति तदुक्तं - "उत्पन्नः सङ्क-रात्मायं", "ब्राह्मण्यां जारतः खलात्", "विश्वस्ता सासुतं दृष्ट्वा" इत्यादि (6-6,7,8) । इदं चाङ्गीकृतं शङ्करविजयेष्वेव । तथाहि -

"इत्यालोच्य तदा स्नात्वा कालटीक्षेत्रमाविशत् ।<br>
तदानीं शान्तयतिनं दृष्ट्वैव गतभर्तृका ॥" (1-15)

देवपूजापरं नित्यं शिवभक्तिपरायणा ।<br>
प्रातः स्नानार्थं आयान्ती भिक्षुरूपधरं शिवम् ॥ (1-16)<br>
प्रणिपत्यार्थं पप्रच्छ कस्माद्देशात्समागतः ? ईश्वरः -<br>
आगतोऽहं महाभागे कैलासाधिपतिः शिवः ।<br>
आविर्भविष्यामि चात्रैव सेवां कर्तुमिहार्हसि ॥ (1-18)<br>
इत्युक्त्वा खलु कूष्माण्डबीजमेकं प्रदाय च ।<br>
तद्रक्षणाय यत्नेन स्तंबमूले प्रणिक्षिप ॥<br>
जलमासिञ्च तन्मूले वल्लीं पुष्पं फलं तथा ॥<br>
मा छेदय फलं पक्कं स्वयमेव पतिष्यति ।<br>
इत्युक्त्वान्तर्दधे शंभुः कैलासमगमत्क्षणात् ॥

द्वितीयाध्यायः

सा बीजं च ततः सम्यक् सांबमूले निधाय च ।

जलमासिच्य यत्नेन ररक्ष सुचिरं मुदा ॥ 2-1 ॥
फलमेकं तदा पक्षं स्तंभाग्रान्निपपातह ।
फले च पतिते तत्र महापुरुषमीश्वरम् ॥ 2-2 ॥
दृष्ट्वा बालकमादाय संररक्ष प्रयत्नतः ।
तदानीं बालरुदितं श्रुत्वा तत्राखिला जनाः ॥2-3 ॥
आगत्य तद्गृहं शीघ्रं सबालां तामथाब्रुवन् ।
अपुत्रायास्तव कथं बाल एष समागतः ॥2-4 ॥
इत्थं जनोदितं श्रुत्वा साऽब्रवीत् भयविह्वला ।
इहागत्य यतिः कश्चित्बीजमेकं प्रदत्तवान् ॥2-5 ॥
रक्षेइत्यवोचन्मह्यं तद्रक्षितं च मयादरात् ।
तत्र जातात् फलात्तद्वत् पतितादेष बालकः ॥
लब्धश्चान्यन्न जानेऽहं इति श्रुत्वा च ते जनाः ॥ 2-6 ॥
नारीं निर्भत्स्य कोपेन सर्वेऽपि स्वगृहं ययुः ।
ततः सा बालकं सम्यक् अतिहर्षादपालयत् ॥ 2-7 ॥

अत्रेमे प्रश्नाः संभवन्ति । अवतितीर्क्षतः शंभोः अप्रसिद्धविधवावरनं किमर्थं ? दूर्वासशुकाश्वत्थामावतारेषु इव किमिह निष्कलङ्कजन्मक्रमो नादृतः ? अलौकिकबीजकथा किंप्रयोजना ? निःशेषतया तत्पाक्रश्च जनानां कथमस्यां अविश्वासः ? निर्दुष्टत्वेऽपि *भयविह्वला* इति कथं ? यद्यधुनातनी काचित् बाला अकुतःप्राप्तबाला एवं जातीयकां कथां कथयन्ती किं जनैः विश्वस्यते ? लोकनुग्रहार्थं अवताररूपेण भूमिं जिगमिषतः शंभोः कोऽयं निगूढतया अवतरणक्रमः यः स्वमातुरपि कलङ्कितां आविष्करोति, स्वक्षेत्रीयजननिन्द्यत्वमावर्धयति ? अस्तु वा किमपि फलं यद्ययमपवादः किमिति महादेवेनानेन यावज्जीवं स अपरिहृतः ? इत्यादयः । अत्रायं विशेषः

आगच्छन्यतिः जारः इति शङ्करविजये शब्दतः नोक्तः । स चार्थतः प्राप्त इति मणिमञ्जरी शब्दतो वदति ॥

किञ्चानन्दगिरीये प्राचीनतमे पूर्वोक्त जातीयो वाद उररीकृतः । तथाहि -

प्रददौ विश्वजिन्नाम्ने सर्वज्ञोऽस्याः पिता स्वयम् ।
सा सदा पतिमद्वैतं ध्यात्वाकाशात्मकं शिवम् ।
अस्याराधनमत्युग्रमाचकार विवेकिनी ।
तादृशीमपि संत्यक्त्वा ययौ विश्वणिजिदद्भुतम् ।
अरण्ये तपसे कृत्वा मनोनिश्चयतां गतः ।
तदा प्रभृति सा नारी चिदंबरमहेश्वरं ।
पूजयामास पूजाभिः ध्यानैरात्मगतैः सदा ।
स देवःसर्वपूर्णोऽपि तस्याः वदनपंकजम् ।
प्रविश्य विस्मितान् कुर्वन् जनानन्यान्समागतान् ।
महोग्रतेजसा जुष्टा विशिष्टाऽभूत् धृढांबिका ।
अतीते मासि गर्भस्य वृद्धिरासीद्दिने दिने ।
चिदंबरेश्वरं कृत्वा यजमानं द्विजोत्तमाः ।
इत्यादि ० ० ० ॥

अत्रापि विशिष्टानाम्न्याः पत्यौ विश्वजिति तपसे वनं गते तदभावकाले गर्भधारणं स्पष्टमुक्तम् । इयमस्वाभाविककथेति केवल कवेः कल्पना इति अद्वैतिभिरेव दूरिकृतमित्यन्यदेतत् । अत्रापि प्रायः प्राकृतप्रश्नाः समीचीनोत्तरहीना अनुवर्तन्त एव ।

अस्यानन्दगिरीय शंकरविजयस्यैकव्याख्यानामपि आत्म-

बोधनामकेनरचितं इति श्रूयते । नाम्ना गुरुरत्नमालिकेति । तत्रेमे सङ्ग्रहश्लोक उपलब्धः ।

निजतातमृतेः परं प्रकाशे । गजगर्भे त्रिशरद्विपञ्च कोशे ।
गमयन्तमिवोल्ववासशेषं गणये विश्वाजितः सुतं विशेषात् ॥

परिवादभयात्प्रसूविसृष्टं विपिने व्याघ्रवधूभिरेव पुष्टम् ।
नवशङ्करमादिमाच्च धृष्टं नममादृयं दिनिनैवबाल्यशिहम् ।

अत्र हि पत्युर्मरणानन्तरं वर्षत्रयात्पश्चात् उत्पन्नस्य शिशोः पितृविषयकलोकशङ्काभियो तं विपिने परितत्यज सा विशिष्टा । तत्र व्याघ्रैः परिरक्षितोऽयं शिशुः कालक्रमेण शङ्कराचार्यो बभूवेति निरूपितम् ॥ इहापि अनेके परिवादा भवितुमर्हन्ति । पत्युः सञ्जातगर्भस्य अतिदैर्घ्ये प्रत्यक्षतो ज्ञाते कथं बन्धुजनाः परिवदेयुरिति तथा शङ्कितं ? तदनुगुणं परित्यजनमपि उपायं सा अभनुत ? गजगर्भोऽस्वाभाविकोऽपि कुत संपन्नः ? यदि उल्बवासशेषं गमयितुं इति तर्हि गर्भवासदुःख तत्कारणकर्मवशीभूतस्य अस्य शिशोः कथं देवोत्तमत्वं ?

आङ्ग्लभाषामयग्रन्थे नाम्ना Shankaracharya - His Life and times प्रसिद्धे श्री C.N.Krishnaswamy Iyer नामकेनैकेनाद्वैतिना रचिते केरळीयैतिह्य विषय एवं लिखितम् । (तस्य अनुवादः) -

> कालडिग्रामे तदानीं एका बालविधवा स्वसखीभिः साकं शिवालयं प्रति गता । तत्र तासु काश्चन बालिकाः पुत्रार्थं श्री सिवं प्रार्थयामासुः । तथैवानया

बालविधवयाऽपि प्रार्थितम् तत्फलत्वेन गर्भं धृत्वा कालान्तरे शङ्कराचार्यमभूत इति (पृ-14)

अद्यापि तत्रत्याः *नंबूद्री* ब्राह्मणाः शङ्कराचार्यकालमारभ्य ऐतिह्यानुसारं आचारं पालयन्तः सन्ति । ते अद्यापि स्वकीयानां मरणे स्वस्वगृहस्य पृष्टप्रदेषे एव दहनादिकुर्वते प्रत्येकं श्मशानादिषु स्थलं नास्ति तेषां तत्कारणपरिप्रश्ने तु एवं वदन्ति "*पतिमरणानन्तरं बहोःकालादनपत्या ततो गर्भवती भूत्वा शङ्कराचार्यं सुषुवे । तदा तदीया जना तां बहिष्कृतवन्तः । अयं च बहिष्कारः विधवाया मरण पर्यन्तं तदुत्तरं चासित् । अत एव ते तस्याः मृतेरनन्तरं देहनाद्यर्थमपि नैवोदयुञ्जत । सन्यस्तोऽपि शंकराचार्यः तत्काले स्वक्षेत्रमागत्य स्वगृहस्य पृष्टभागे एव स्वमातुः कलेवरं एकाकीवोढुमक्षमः बहुधा छित्वा ददाह । दहानार्थं काष्टाद्यलाभे सीदाजातिसंभूताः कदली पट्टिकाः ददुः । अत एवाद्यापि सीदियन् जाति संभवैः पुरुषे दन्तकदली पट्टिका आदायैव दहनादि कुर्मः । वयं नंबुद्रयः शंकराचार्य विषये परंपरागत ऐतिह्यमवलंब्य एभिः कारणैः वयं शंकर विरोधिनः* इति ।

माधवीयशङ्करविजयोऽपि इदमनुमादते । तथाहि -

स्वयमेव चिकीर्षुरेष मातुः चरमं कर्म समाजुहाव बन्धून् ।<br>किमिहास्ति यते तवाधिकारः कितवेत्येनममी विनिन्दुरुच्चैः ॥<br>14-46 ॥

अनलं बहुधाऽर्थितोऽपि तस्मै बतनादत्त च बन्धुना तदीया ।<br>अथ कोपपरीवृतान्तरोऽसौ अखिलान् तानशपच्च निर्ममेन्द्रः ॥<br>14-47 ॥

संचित्य काष्टानि सुशुष्कवन्ति गृहोपकण्टे धृततोयपात्रः ।<br>स दक्षिणे दोष्णि ममन्थ वह्निं ददाह तां तेन च संयतात्मा ॥

14-48 ॥
न याचिता वह्निमदुर्यदस्मै शशाप तान् स्वीयजनान्सरोषः ।
इतः परं वेदबहिष्कृतास्ते द्विजा यतीनां न भवेच्च भिक्षा ॥
14-49 ॥
गृहोपकण्ठेषु च वः श्मशानमद्यप्रभृत्यस्त्विति ताञ्शशाप ।
अद्यापि तद्देशभवा न वेदानधीयते नो यमिनां च भिक्षा ॥
14-50 ॥

अत्र डिण्डिमव्याख्याने - *हे यते कितव वञ्चक । इत्युक्तम् ॥* अत्रायं विचारः । हे यते तवाधिकारः नास्तीत्येतावता पूर्तौ किमिति वञ्चकेति विशेषणम् । तेन ज्ञायते ते सर्वे प्रागेव कुपिता इति ।

तथा च श्रीमणिमञ्जरीसुमध्वविजयकृद्भिः श्रीमन्नारायणपण्डिताचार्यैः सङ्करजन्मविषये न किमपि काल्पितं, सर्वं अद्वैतिप्रवरैः शङ्करजन्मविषये शङ्करविजयकारैरुक्त एव दोषः विशदीकृत इति सिद्धम् ।

ननु इमे शङ्करविजयाः न प्रमाणानि आचार्यकलंककारित्वादिति चेत् । न । तस्य सञ्करस्य शुद्धत्वेऽपि प्रमाणाभावात् यदवलंब्येमानि अप्रमाणानि ब्रूषे ॥ न हि खलु शाङ्करकालसमीपकालीनानन्दगिरीयापेक्षया प्रायः 550 वर्षानन्तरभाविनः कल्पितबहलस्य माधवीयादेः प्रामाण्यं अभ्युपगमार्हम् । अत एवाद्यापि अद्वैतिभिः नैकोऽपि शङ्करविजयः आद्रियते ॥ किञ्चित्परिगृहीतोऽपि माधवीयः न कलङ्कपङ्कलङ्घने जङ्घालः ॥ न हि तत्कालीनैः कृताक्षेपः अद्यतनीनैरनुपलब्धप्रमाणैरपवदितुं

शक्यः । तथा च अशुद्धजन्मकळङ्किनः शङ्करस्य न शङ्करावतारत्वं युज्यते इति सिद्धम् ।

2) अन्तकाले शरीरत्यागक्रमेणापि सामान्यतो जीवस्य उत्तमत्वं वा अधमत्वं वा शक्यं निश्चेतुम् ॥ अस्मिन्विषये मणिमञ्जरी -

दक्षिणाशां ततो गत्वा दग्ध्वा मातुः कलेवरम् ।
आगत्य स्वमठं प्राप्तः सङ्करो रोगपीडितः ॥ 7-16 ॥
ततः काले समायाते श्वासत्वरभगंद(ध)रैः ।
दुःखाद्यै ० ० ० इति

अद्वैतिभिः माननीयत्वेन परिगृहीतो विद्यारण्योऽप्येवमाह -

अथ यदा जित्वान्यतिशेखरोऽभिनवगुप्तमनुत्तममान्त्रिकम् ।
स तु तदाऽपजितो यतिगोचरं हतमनाः कृतवानपगोरणम् ॥
स ततोऽभिचचार मूढबुद्धिः यतिशार्दूलममुं प्ररूढरोषः ।
अचिकित्स्यतमोभिषाग्भिरस्मादजनिष्टास्य भगंदराख्यरोगः ॥
अचिकित्स्यभगंदराख्यरोगप्रसरच्छोणितपङ्किलस्वशाट्याः ।
अजुगुप्सविशोधनादिरूपां परिचर्यां अकृतास्यतोटार्यः ॥ 2 ॥

भगंदरव्याधिनिपीडितं गुरुं निरीक्ष्य शिष्याः समबाधयञ्शनैः । नोपेक्षणीयो ० ० ०

इत्यादि उक्त्वा तत्र कारणादिचिन्ता कृता दृश्यते। तथाहि-

व्याधिर्हिजन्मान्तरपापपाको भोगेन न तस्मात्क्षपणीय एषः ।

अभुज्यमानः पुरुषं न मुञ्चेज्जन्मान्तरेऽपीति हि शास्त्रवादः ॥
व्याधिर्द्विधाऽसौ कथितो हि विद्भिः कर्मोद्भवो धातुकृतस्तथेति।
आद्यक्षयः कर्मण एव लीनाच्चिकित्सया स्याच्चरमोदितस्य ॥
संक्षीयतां कर्मणैव संक्षयाद्व्याधिः प्रवृत्तो न चिकित्स्यते मया।
पतेत्शरीरं यदिं तन्निमित्ततः पतत्ववश्यं न बि भेमि किञ्चन
इति ॥ (शं वि 16-1)

केवल द्वात्रिंशद्वर्षे अचिकित्स्यघोरभगन्दररोगनिमित्तं, स च रोगः पापकर्मफलं इत्युक्त्वा शरीरत्यागार्थं सिद्धः अद्वैताचार्यो मरणमाप इत्येष विषयः न सामान्यः नोपेक्ष्यःश्च । साक्षाद्रुद्रावतारस्य कोऽयं नीचतरो रोगः यः जुगुप्साकररक्तस्रावपङ्कनिमग्नं कृत्वा अश्विन्यादिभिश्चाचिकित्स्यः ? किं तज्जन्मान्तरकृतं पापं यत्फलं भोगमात्रपरिक्षय्यम् ? अदृष्टकारणकमपि किञ्चित्दृष्टकारणकमेवेति तत्किं दृष्टकारणं ? सरस्वतीमपि बद्धुं मन्त्रेण क्षमोऽसौ किमिति आभिचारित्रकं निरोद्धुं नाशकत् ? इदृशाशक्तः कथं पुरहरहरावतारः यं अद्वैतिनः परमपुरुषं मन्यन्ते ? यश्च स्वयं पापरोगान्मृतः स कथं स्वानुयायिनः मायावादिनः मृत्योर्बन्धाद्विमोचयेत् ? कथं वा तद्भक्ताः एतादृशस्य सिद्धान्तमवलंब्य स्वं परमात्मानं मत्वा संभाव्यमानदेवद्रोहात्पापादभीता स्युः ? यत्सविधे साक्षादेवाधीतविद्याः शिष्या एव गुरुमीदृशदुःखस्थं दृष्ट्वा भृशदुःखिता किं केवल परोक्षमात्रभागिनोऽसन्निहिताः इदानींतनास्ताच्छित्याकुर्युः । कथं वा परमतीयाः नेदृशं जुगुप्सेयुः ? ॥

किञ्च काचन किंवदन्ती अपि अस्ति । *नेपालटिबेट्देशे एवमेवैकं बौद्धं पराजेतुकामः संङ्करस्तत्र गतः । यः पराभ-*

*वमेष्यति तमेकस्मिन् कटाहे निक्षिप्य मारयन्ति स्म तदानीं तनाः पणरूपेण वादे पराजितः सङ्करस्तत्रैव मारितः । अद्यापि तत्स्थानं "शङ्करकटाह" इत्येव नाम्ना प्रसिद्धम्* इति एक लामकः (बौद्धः) तान्त्रिकप्रयोगेण एनं सञ्जहारेति च॥

अतोस्य मरणादपि अद्वैतिभिरङ्गीकृतक्रमात् अयं न महादेव किन्तु पूर्वदेव इति निश्चेतुं अलम् । यतो अदेवस्य भाष्यकारस्य दानवत्वं परिशिष्यते ।

अस्तु जननमरणवृत्तान्तः यः कश्चित् सामान्यतः स्वावशः ॥ स्वजीवितावधौ निर्दुष्टजीवनं खलु महतां बुद्धिमतां विशेषतः मतस्थापकस्य तत्रापि षण्मतस्थापकस्य आवश्यकम् । अन्यथा न कोऽपि स्वस्थात्मा तन्मतमङ्गीकुर्यात् । मण्डनेन अथवा विश्वरूपेण सह वादे मध्यस्थत्वेन तत्पत्न्या निवेशः अन्योन्यशिष्यत्वपणग्रहणं, पराजितेन स्वाश्रमपरित्यागप्रतिज्ञा, इत्येवं बहवः सन्ति विवादविषयाः । भिक्षार्थं आह्वयतः विश्वरूपात् वादभिक्षायाचने नास्ति कृत्यम् ॥ प्रवर्तितजल्पकथायां अवश्यंपतिपक्षपातिन्याः तत्पत्न्याः मध्यस्थत्वेनाङ्गीकारः प्राक्परिचितं विना न विश्वासार्हः ॥ प्रबलधर्मशास्त्रविरोधमप्यविगणय्य सन्यासं परित्यज्य श्वेतवस्त्रधारणं पणत्वेन स्वीकरणं किं महत्तरं फलं साधयति ? ।

बाढं जये यदि पराजयभागहं स्याम् ।
सन्यासमङ्ग परिहृत्य कषायचैलम् ॥
शुक्लं वसीय वसनं द्वयभारती यं ।
वादे जयाजयफलप्रतिदीपिकास्तु ॥ 8-62 ॥

तदुक्तं शं विजये - "*जेतुः पराजित इहाश्रममाददीतेत्येतौ मिथः कृतपणौ यतिविश्वरूपौ*" इति मण्डनसन्यासस्वीकारस्य दोषत्वभावेऽपि, अद्वैतभाष्यकारस्य सन्यासत्यागस्य प्रतिज्ञामात्रेणापि महादोषत्वात् । अपि च तत्पत्न्या मध्यस्थत्वं स्वयं शंकराचार्यसूचितमिति चित्रमेतत् ॥

किञ्च केयं उभयभारती ? दुर्वाससशापात् भूमौ कृतावतारा सरस्वती इति कतिचिच्छङ्करविजयेषु निरूपितम् । इदं तावत् बाणभट्टस्य कादंबरी काव्यं अनुसरति ॥ खण्डितं चेदं गुरुरत्नमालिका व्याख्याकृता आत्मबोधेन "*दुर्वासः शापतो भूमौ जातां वाणीं इत्यादयः श्लोकाः, ते न क्वापि शिवरहस्य प्रचीनमातृकासु उपलभ्यन्ते इत्यप्रामाणिका एव इति सर्वं शिवम्* इति ॥ ब्रह्मसरस्वत्योरवताराभावः पुराणप्रसिद्धः कथमुपपादनीयः ? ॥ यदि कथंचित्शाप कथया योजना तर्हि तद्विदित्वा शापान्मोचयितुमागतेन शङ्करेण सर्वज्ञेन, मुक्ता दिवं गच्छन्त्या मन्त्रप्रभावेन बन्धनं किमर्थं विहितम् ? ततश्च तां वादार्थं आरूह्य परकायप्रवेशादिदुष्कलङ्कभाग्भवनं कथमौचित्यमावहेत् । उत्तरत्र सर्वज्ञपीठमधिरोढुं गते स्वयमनया परकायप्रवेशकालीनपापादिं आशङ्क्य निराक्रियमाणे, अशास्त्रीयोत्तरप्रसङ्गः कथं सज्जनहृदयं प्रसादयेत् ? यद्यनुचरा अपि ऐक्यज्ञानिना मम कर्मनिबन्धो वा निर्बन्धो व क्वास्ति ? इति पृष्ट्वा स्वैरिणः स्युः तदा धर्माधर्मव्यवस्थाया का गतिः ? अतः एतन्निमित्तमादाय सङ्करः परकायप्रवेशविद्यामुपयुञ्जन् अमरुकस्य बहुपत्नीः भुक्त्वा अनन्तरं शिष्यैस्स्मारितस्वीयस्थितिः विश्वरूपपत्नीमेव वशीचकारेत्युक्तम् अद्वैतिप्रवरविरचिते चिद्विलासीये तदुक्तं तस्यासीद्रतिलोलता त्रिपुरजित्पूर्णाकृतेरप्यहो ।

तद्वाणीं प्रविजित्य तां वशयितुं नेतुं पुरीं स्वामपि ॥ 19-52 ॥

इदं च भारतीवशीकरणं शृङ्गगिर्यां तस्याःप्रतिष्ठापनार्थं कश्चित् ब्रूयात् । स मतमदान्धः ॥ शापग्रस्तायाः प्रतिष्ठापने प्रयोजनाभावात् । सन्यासिनं परपुरुषं प्रति भाषणादि एव कलङ्कः, तेन च वादः तत्रापि कामकलां पृच्छति इत्येतत् तु कळंकपङ्कतमः तां दुष्टां अनुमापयति । "*पुमानन्यः कान्तात् विधुरिव चतुर्थीसमुदितः*" इति किल नीतिः । पश्यन्तु बुधाः निर्लज्जप्रश्नापसदं - दुष्ट्या विश्वरूपपत्न्या कृतम् -

कलाः कियन्त्यो वद पुष्पधन्वनः ।
किमात्मिकाः किं च पदं समाश्रिताः ॥
पूर्वेचपक्षे किं कथमन्यथा स्थितिः ।
कथं युवत्यां कथमेव पूरुषे ॥ 9-69 ॥ इति शंकरविजये ।

*न दिवा न निश्यपि च वादकथा विरराम* इति तु हासं जनयति । तां नीतिसामान्यविधुरां निश्चाययति ।

अत एव इदमुक्तं मणिमञ्जर्यां -
ततः स विश्वरूपस्य गृहं वव्राज सङ्करः ।
किमप्यबोध्यतापाङ्गवीक्षया तत्प्रियामुना ॥
बृहत्तमोत्तमाङ्गेन स्फारस्फिङ्गमसृणत्वचा ।
तेन दुर्भिक्षुणोतुङ्गजघनस्तन्या तयाऽरमि ॥
ततः पर्यव्रजद्विप्रः तया रेमे स सङ्करः ॥ इति

अयमेवार्थः गुरुरत्नमालिकायां अद्वैतिप्रमुखविरचितायां निरूपितः । तथाहि -

परकीयवपुः प्रवेश शैल्या
    स्मरतन्त्राणि विदन्वशी न लौल्यात् ।
अकृतातनुभारतीं वशे यः
    सुकृतं मे सुतरां गुरुः स जीयात् - इति ॥

अहो सुकृतं एतस्य ग्रन्थकारस्य यत्परपत्नीरुपंभुञ्जन् व्यभिचारिसन्यासीस्वगुरुरिति मनः पूर्वं अभ्युपैति ।

इदं च विमर्शनीयं सुधीभिः । पत्युः पराजयमुद्घोष्य आश्रमान्तरप्राप्त्यै अनुमोदयन्ती उभौ अपि भिक्षार्थमाह्वयन्ती सोभयभारती शापादिमुक्ता दिवमारुहन्ती शंकरेण मन्त्रबद्धा वादायाहूता सर्वासु इतरविद्यासु शंकरेण पराजिता तं जेतुकामा कामशास्त्रमधिकृत्य प्रश्नं चकार तदुत्तरदानाय मासमेकं अवधिमयाचत शंकरः । ततः एकस्यां गुहायां वृक्षस्य कोटरे स्वकलेबरं निवेश्य, पद्मपादादिभिः बहुधा निरुद्धोऽपि मृतस्यामरुकनामकराज्ञः शवं प्रविश्य तत्पत्नीः बहुकालं बुभुजे ॥ पूर्वाननुभुतातिशयितसौरतसुखं संवीक्ष्य ता मृगाक्ष्यः *प्रायः केनापि महापुरुषेण अस्मत्पतिशवः प्रविष्ट* इति निश्चित्य तन्मूलदेहं नाशयितुं भृत्यान् प्रेषयामासुः । अतीते मासषट्के पद्मपादादिभिः गानरूपेण द्वन्द्वार्थवचनैः बहुधा बोधितः अमरुकशरिरं त्यक्त्वा स्वशरीरमेव ददह्यमानमेव प्रविश्य नरसिंहस्तुत्या दाहतापं शमयामासेति हि कथा माधवीयादि शंकरविजयेषु निरूपितः ॥

तत्र अद्वैतिभिरेवेमे प्रश्नाः स्वीयग्रन्थेषु उद्घाटिताः । एवं अभिप्रेतं च । तथाहि - कार्नाटक्यां

ಈ ಪ್ರಸಂಗವು ನಡೆಯಿತೆ ? ಎಂಬುದೇ ವಾದಗ್ರಸ್ತವಾಗಿದೆ ಎಂದು ಆಗಲೆ ಹೇಳಿರುತ್ತೇವೆ. ಒಂದುವೇಳೆ ನಡೆದಿದ್ದರೂ ವಾದವು ಎಷ್ಟು ದಿನಗಳವರೆಗೆ ನಡೆಯಿತು ಎಂಬುದಕ್ಕೆ ಶಂಕರವಿಜಯಗಳಲ್ಲಿ ಏಕಮತ್ಯವಿಲ್ಲ. ಆಚಾರ್ಯರು ಭಾರತಿಯನ್ನು ಪ್ರಸಂಗಕ್ಕೆ ಕರೆದರೆಂಬುದು ಅಸಂಗತ, ವೇದಾಂತಸಿದ್ಧಾಂತದ ನಿರೂಪಣೆಗೆ ಹೊರಟ ಆಚಾರ್ಯರು ಸಕಲಶಾಸ್ತ್ರಗಳ ವಿಷಯದಲ್ಲಿಯೂ ವಿವಾದ ಮಾಡುವದಕ್ಕೆ ಹೊರಟರೆಂಬುದು ಇನ್ನೂ ಅಸಂಗತ. ಸರಸ್ವತಿಯ ಅವತಾರವೆಂದು ಪ್ರಸಿದ್ಧಳಾಗಿದ್ದ ಭಾರತಿಯು ಅಥವಾ ಸರಸವಾಣಿಯು ಪ್ರಕೃತಚರ್ಚೆಗೆ ಸಂಬಂಧ ಪಡದ ಕಾಮಶಾಸ್ತ್ರವನ್ನು ಕುರಿತು ಪ್ರಶ್ನೆಯನ್ನು ಪರಪುರುಷನೊಬ್ಬನಿಗೆ ಹಾಕಿ ದಳೆಂಬುದಂತೂ ಅಸಂಗತವು ಮಾತ್ರವೇ ಅಲ್ಲ, ಆಕೆಯ ಯೋಗ್ಯತೆಗೂ ಕಳಂಕ ವನ್ನು ಹಚ್ಚುವಂಥದ್ದು. ಆಚಾರ್ಯರಾಗಲಿ ಸಭಿಕರಾಗಲಿ ಇಂಥ ಅಯೋಗ್ಯ ಪ್ರಶ್ನೆಯನ್ನು ಹಾಕತಕ್ಕದ್ದಲ್ಲವೆಂದು ಏಕೆ ಹೇಳಲಿಲ್ಲವೆಂಬುದೂ ಗೊತ್ತಾಗುವದಿಲ್ಲ. ಆಚಾರ್ಯರು ತಾವು ಸರ್ವಜ್ಞರೆಂಬುದನ್ನು ತೋರ್ಪಡಿಸಿಕೊಳ್ಳುವದಕ್ಕಾಗಿ ಕಾಮ ಶಾಸ್ತ್ರಪರಿಚಯಕ್ಕೆ ಒಂದು ತಿಂಗಳ ಅಥವಾ ಆರುತಿಂಗಳ ಅವಧಿಯನ್ನು ಕೇಳಿ ದರೆಂದು ಕಲ್ಪಿಸುವದು ಅವರು ದುರಭಿಮಾನವುಳ್ಳವರೆಂದೂ, ಪವಿತ್ರಚರಿತ್ರರಲ್ಲ ವೆಂದೂ ಹೊರಪಡಿಸುವದಕ್ಕೆ ಸಾಧನವಾದೀತೇ ಹೊರತು ಅವರ ಯೋಗ್ಯತೆಗೆ ತಕ್ಕ ದ್ದಾಗಿಲ್ಲ. ಈ ಕಲ್ಪಿತಕಥೆಯು ಸ್ವಮತದವರಿಗೆ ಆಚಾರ್ಯರ [illegible] ಪ್ರಕಟಿಸುವದಕ್ಕೊಂದು ಅವಕಾಶವನ್ನು ಮಾಡಿಕೊಟ್ಟಿತೇ ಹೊರತು ಇದರಿಂದ

ಉಭಯಭಾರತಿಯೊಡನೆ ವಾದ ೧೪೬

ಆ ಮಹನೀಯರ ಯೋಗ್ಯತೆಯ ಪ್ರದರ್ಶನಕ್ಕೆ ಎಳ್ಳಷ್ಟೂ ಸಹಾಯವಾಗಲಿಲ್ಲ.

किञ्च अयमपि संशयो भवति । किमियं कथा सङ्करस्य सार्वज्ञ्यं संपादयति उत न ? यदि संपादयति तत्कथमिति पृच्छामः । न हि भारतीप्रश्नसमनन्तरमेवोत्तरं दत्तं येन सार्वज्ञ्यं सिद्ध्येत् किन्तु कालावकाशः याचितः तेनैव ज्ञायते नायं सर्वज्ञः । कालावकाशस्य दत्तस्य समाप्तावपि उत्तरदानानांतरमेव किल सार्वज्ञ्यंसिद्धिः । अतः प्रथमं सन्यासधर्मपरिरक्षणाय नोत्तरमभिहितमिति प्रतारणमात्रम् । यदि कामशास्त्रं नाधीतं प्राक् तर्हि परकायमप्रविश्याप्यधीहि प्रविष्टोपि केवलमध्ययन-

मविधाय किमर्थं कामभोगे रतः । किमिति वा उपदेशतः पूर्वं स्वकर्तव्यं न जज्ञौ । तस्मात्सर्वमिदं प्रकरणं सभ्यानां मनसि अवश्यं शंकरविषये शंकरविजये च जुगुप्सां जनयति नाद्वैति-नामपि गौरवम् । एतादृशः कथं देवावतारः स्यात् ? कथंतरां च रुद्रावतारः स्यात् इति सुधियो विभावयन्तु ॥

अत्र विमर्शकानां सौकर्याय एतत्प्रकरणस्था कतिचन श्लोकाः उदाहरिष्यन्ते ॥

अथ पुरोहितमन्त्रिपुरःसरैर्नरपतिः
 कृतशान्तिककर्मभिः ।
विहितमाङ्गलिकः स यथोचितं
 नगरमास्थितभद्रगजो ययौ ॥ 10-1 ॥

तदयं गुणवारिधिर्यथा
 प्रतिपद्येत न पूर्वकं वपुः ।
करवाम तथेति निश्चयं
 कृतवन्तः सचिवाः परस्परम् ॥ 10-9 ॥

मधुमदकलं मन्दस्विन्नं मनोहरभाषणं
 निभृतपुलकं सीत्काराढ्यं सरोरुहसौरभम् ।
दरमुकुलिताक्षीषल्लज्जं विस्रत्वरमन्मथं
 प्रचरदलकं कान्तावक्त्रं निपीय कृती नृपः ॥ 10-14 ॥

मनसिजकलातत्त्वाभिज्ञो मनोज्ञविचेष्टितः
 सकलविषयव्यावृत्ताक्षः सदानुसृतोत्तमः ।

कृतकुचगुरूपास्त्याऽत्यन्तम् सुनिर्वृतमानसो
निधुवनवरब्रह्मानन्दं निरर्गलमन्वभूत् ॥ 10-16 ॥

पुरेव भोगान्बुभुजे महीभृत्स
भोगिनीभिः सहितोऽप्यरंस्त ।
कंदर्पशास्त्रानुगतह् प्रवीणैः
वात्स्यायने तच्च निरैक्षताद्धा ॥ 10-17 ॥

गुरुणा करुणानिधिना ह्यधुना
यदि नो निहिता विहितास्त्यजिताः ।
जगति क्क गतिर्भजतां त्यजतां
स्वपदं विपदन्तकरं तदिदम् ॥ 10-22 ॥

मृत्वा पुनरप्युत्थितमेनं
श्रुत्वा वैन्यदिलीपसमानम् ।
त्यक्त्वा विरहजदैन्यममन्दं
मत्वाऽऽचार्यं धैर्यमविन्दन् ॥ 10-39 ॥

ते च ज्ञात्वा गानविलोलं
तरुणीसक्तं धरणीपालम् ।
विविशुः स्विकृतगायकवेषा
नगरं विदितसमस्तविशेषाः ॥ इति ॥

ननु मणिमञ्जर्यां विश्वरूपपत्न्यां (उभयभारत्यां) शङ्कराचार्यो रेमे इत्यादिरीत्या अवाच्यवादः प्रवृत्तः तन्निष्प्रमाणः । यदि आचार्यः भोगासक्तः विश्वरूपपत्नींवशीकरणार्थमेव वा-

दादि चकारेत्युच्यते, तर्हि किमर्थं परकायप्रवेशादिकं कृतं ? साक्षादेव कामशास्त्रीय प्रश्नानं उत्तरं अदास्यत् । अतः अयुक्तमिदं महति आचार्ये ईदृशापवादकरणमिति चेत् ।

स्यादेतत् यदि विश्वरूपजयार्थं गतेन त्वदाचार्येण मध्यस्थान्तरवरणं कृतस्यात् । उभयोराश्रमत्यागपणः न कृतःस्यात् । यतो जये पराजये वा शंकरस्यैवोपयोगो भवति ॥ यदि च मण्डनं मुण्डिनं विधायानन्तरं तत्पत्न्या सहवादार्थमनवतीर्णः स्यात् । कामशास्त्रविचारे आरब्धे सार्वज्ञ्यस्य स्थापनायाकृतप्रयत्नः स्यात् । तदर्थं परकायप्रवेशं तथा तत्र स्त्रीभोगं वा यदि नाकरिष्यत् ॥

किञ्च यो रोगविशेषः शंकरः प्राप्तः सो शङ्करविश्वरूपपत्न्योः संबन्ध निरूपणे क्षमोभवति । "*अचिकित्स्यतमो भिषग्भिरस्मादजनिष्टास्य भगंदराख्यरोगः*" *इति रोगनाम* ॥ 16-2 ॥ तथा *अचिकित्स्य भगंदराख्यरोगप्रसरच्छोणित पङ्किलस्वशास्त्याः । अजुगुप्स विशोधनादिरूपां परिचर्यां अकृतास्य तोटकार्यः* ॥16-3 ॥ इति रोगलक्षणं तस्य अचिकित्स्यत्वं चाभिधाय *नोपेक्षणीयं गुरुदुःखदृश्वभिः दुःखं विनेयैः* इति अतिदुःखं शङ्करेण अनुभूतमिति, उक्त्वा *निगदिते मुनिनेति भिषग्वरा ब्रिदधिरे बहुधा गदसत्क्रियाः । न शशाम गदो बहुतापदो विमनसः पटवो भिषजोऽभवन्* इति अतितापदत्वं कृत चिकित्साया वैय्यर्थ्यं चोक्तम् । अयं रोगः बहोःकलादस्यासीदिति स्वयं शंकरेणैवोक्तमिति चोक्तम् । तथाहि *चिरमुपेक्षितवानहमेकं दुरितजोऽयं इति प्रतिभातिमे* (19) इति ॥ इदं च शंकरविजये स्पष्टमुक्तं *गुरुवरो गुरुदुःखमसोढ सः* (27) इति । अन्ततः देहं

तत्याजेति - शङ्करविजयादौ उक्तम् ॥

सामान्यतः अद्वैतिनां लोके *अयं महारोगोऽपि काले काले आहारनिद्राद्यभावेन*, *देहायासेन*, *बुद्धिक्षोभाणामाधिक्येन मलबन्धादिना भवति*, *स एव आचार्याणां अपि सञ्जातः इति* प्रथाऽस्ति । स्वाभाविकीयं प्रवृत्तिः तेषां ये यस्य गुरुत्वं, भगवत्पादशब्दभण्यत्वं परमपूज्यत्वं साक्षाच्छिवावतारत्वं चाभ्युपगच्छन्ति, तस्येदृशमहारोगप्राप्तौ तस्य महत्वाविघातकतयोपपादनार्थम् ॥ परन्तु परे किं वदन्ति इत्यपि आलोचनीयं ये एनं दैत्यं वञ्चकं मन्यन्ते ॥ अतितापोऽनेन अनुभूतं, अस्य मूलं महापापं इत्यादि तु स्वयं अद्वैतिभिरेवाङ्गीकृतम् ॥

सामान्यतो मलबन्धौष्ण्यादिना संभाव्यः अल्पीयान् गुदव्रणकारी भगन्दरः न मरणान्तिको भवति । नायमचिकित्स्यः तत्रापि भिषग्वरैरश्विनीदेवैः ॥ *गुदस्य द्वयङ्गुले क्षेत्रे पार्श्वतः पिंडकार्तिकृत् भिन्नो भगन्दरो ज्ञेयः स च पञ्चविधो मतः* इत्युक्तेः पञ्चविधः भगन्दरः अस्ति । सच वेदनातिशयकार्यपि नाचिकित्स्यः । नापि तेन मरणादि फलं भवति । यदि अचिकित्सितः; बहुरक्तवातमुत्रपुरीषं क्रिमिशुक्रस्रावः स्यात् तदा भगन्दरात् स्रन्वन्तस्ते नाशयन्ति । अतः अतिशीघ्रं (द्वात्रिंशत्तमे) वर्षे अल्पीयसीवयसि संभूतं मरणं भगन्दरविशेषं कल्पयति । *भ जन्त्यनेनेति भगं मेहनम् । भ जन्त्यस्मिन्निति भगं योनिः । अत्र भगशब्देन द्वयमपि कथ्यते* इति शब्दकल्पद्रुमे (पृ 468) इत्युक्तोपदंशतुल्यः कश्चन रोगः अस्याभूत् इति ऊह्यते ॥ उक्तं च माधवीयनिदाने *सञ्जातमात्रे न करोति मूढः । क्रियां नरो यो विषये प्रसक्तः । कालेन शोथक्रिमिदा-*

*हपाकैर्विशीर्णशिश्नः म्रियते स तेन* इति ।

अतो विविधापाचारैः प्रयुक्तमरणान्तिकाचिकित्स्यरोगवान् शंकरः पञ्चत्वमापेति भाति । तदुक्तं "*हस्तापधातान्नखदन्तपानात् अधावनाद्रत्यतिसेवनाद्वा योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशां विविधापचारैः*" इति माधवीय निदाने ।

यद्यपि शङ्करशिष्याः स्वाचार्यस्य यथाकथंचित् शुद्धिं उपपादयितुं सामान्यभगन्दरमङ्गीकृत्य समाहितमनस्का भवन्ति, तथापि तं दैत्यं दुष्टं व्यभिचारिणं वञ्चकं मन्वानाः परे तु दुराचारहैतुकं जुगुप्सितरोगमेव तन्मरणकारणं वदन्तीति नाश्चर्यम्।

अन्ततो माणिक्यमञ्जरीकृतं प्रति इदं वदामः । यदि ते गुरुः शुद्धः इति मन्यसे तर्हि रोगसामान्यराहित्यमेव त्वदीयैर्वक्तव्यम् यावन्तो सत्यंवक्तव्यं तथापि नोक्तम् । अद्वैतिप्रवरैः त्वत्प्राचीनैः स्वस्वशंकरविजयेष्वेव उक्तवतो दोषाः स्पष्टं अभिहिताः मणिमञ्जर्याम् । अतः खण्डनं कर्तव्यं अभिप्रैषि तर्हि त्वदीय शंकरविजयादि एव खण्ड्यम् । अपसिद्धान्तभाक् च भवेः ॥ देवत्वपरपुराणादि तु अन्यथायोज्यम् ॥ तस्मात् साधूक्तं मणिमञ्जरीग्रन्थे शङ्करस्य दुष्टत्वादि इत्यलं अपहसनीयचरित्रविमर्शनायासेन ॥

इदानीं श्रीमध्वविषये माणिक्यमञ्जरीग्रन्थे उद्भावितविवादं किञ्चिदिवालोचयामः ।

| श्रीमध्वस्य मुख्यप्राणत्वं | तस्य दैत्यत्वं |
|---|---|
| गोमञ्जर्यां आकरे चोदाहृताः परःशतं श्रुतयः | नामनैकाऽपि श्रुतिः |
| द्वैपायनस्य सेवार्थं बदर्यां च कलौ युगे । यतिरूपधरो वायुः भविष्यति न संशयः - हरिवंशे | नैकमपि पुराणवाक्यं *मध्व* पदयुक्तं श्रीमध्वस्य दैत्यत्वापादकं अनेन मा-मं कारेणोदाहृतम् । |
| पूतनाक्षयकारी च द्वितीयस्तु तृतीयकः । पूर्णप्रज्ञः तथा तथाऽऽन्दतीर्थनामा प्रकीर्तितः दशेति पूर्णमुद्दिष्टं सर्वं पूर्णमिहोच्यते । प्रज्ञा प्रमिति रुद्दिष्टा पूर्णप्रज्ञस्तु संस्मृतः । स्कान्दे - प्रादुरासीद्द्विप्रकुलेक्षेत्र भार्गवसंज्ञके । | लिङ्गतो माध्वदूषण परश्लोकाः उदाहृताः तत्वं संसार इत्येव न बाध्य सत्य एव हि - वदत्यतस्तत्त्ववादी मायावादी स उच्यते मिथ्याभूतः प्रपञ्चोऽयं मायानिर्मित उच्यते मायावादिन इत्येते वस्तुतः तत्त्ववादिनः |
| आनन्दतिर्थनामेति गुरुणा ख्यापितो भुवि वायुः स यतिरूपेण भविष्यति कलौ युगे । स दशप्रमतिर्भूत्वा कलौ धर्मान् वदिष्यति | मधुनामा ततः प्राप्य शापं तं दुष्टबुद्धिमान् । मध्वाचार्यस्ततो भूत्वा दक्षिणात्यो महाकलौ बादरायणसूत्राणां व्याख्यानं सकरिष्यति । मधुनामवहन्नेव व्याससूत्राणि केवलम् । द्वैतमार्गानुसारेण व्याख्या-स्यति स मूढधीः । |

| | |
|---|---|
| हनुमद्भीममध्वाख्यास्त्रयो<br>वायुसुता इमे ॥ | तप्तचक्राङ्कितान् विप्रान्<br>करिष्यति च भूतले |
| तं मध्वं मारुतं सर्वे<br>परिवारतया सदा<br>तस्याज्ञया महाबाहुः<br>वायुः सर्वसुरोत्तमः ।<br>रौप्यपीठे मध्यगेहे<br>निविकारेऽयजायत सयोगि<br>मातरिश्वांशो मध्वो ध्वस्त<br>दुरागमः । | दीपाश्वत्थदलाकारतिलकादीन्<br>करिष्यति ।<br>अद्वैतनिरतं वाक्यं<br>द्वैते संस्थापयतिष्यति |
| अथासुराणां श्रुतिदूषकाणां<br>उत्सादनायार्थयतस्सुरेन्द्रान् ।<br>आनन्दयत्श्रीदयिताज्ञयेशः<br>संजीवनात्माऽवततार भूमौ ॥<br>यस्य त्रीण्युदितानि वेदवचने<br>रूपाणि दिव्यान्यलं ।<br>बट्टतद्दर्शतमित्थमेवनिहितं<br>देवस्य भर्गोमहत्<br>वायोरामवचोवयं प्रथमकं<br>पृक्षो द्वितीयं वपुः ।<br>मध्वो यत्तुतृतीयमेतदमुना<br>ग्रन्थःकृतः केशवे ॥ | इत्यादि सामान्यतो<br>मध्वलिङ्गपराणि<br>पृ 58 - 80 तः उदाहृतानि ।<br>विप्रोऽहं मधुशर्मास्मि ००० |

अत्रेदं वक्तव्यम् । सुमध्वविजये श्रीमदाचर्याणांसाक्षात् शिष्याणां श्रीत्रिविक्रमपण्डिताचार्याणां श्रीहरिवायुस्तुतिकर्तॄणां तनूजैः श्रीमन्नारायणपण्डिताचार्यैराचार्यान्प्रत्यक्षतो दृष्ट्वा तच्चरित्राणि तत्कालीनजनेषु प्रथितानि निर्विवादानि प्रसिद्धानि उल्लि-

खितानि । तेषां परोदाहृतपुराणवाक्यप्राप्तलिङ्गानां न प्रतीयते कश्चित् संबन्धः । क्वचितान्ध्रदेशीय इति क्वचित्कर्नाटीय इति, असंङ्गतं विरुद्धं चोक्तं पुराणेषु । कानिचित् तदुदाहृत श्लोकाः आकरेषु नोपलभ्यन्ते । अहो अस्य मा-मञ्जरी कविता, प्र-क्षेपक्षमता च ॥

श्रीमदाचार्यचरित्र विषये विवादः :

| सुमध्वविजये | पुराणे |
|---|---|
| 1) आचार्याणां प्रादुर्भावः पाजकक्षेत्रे (परशुरामक्षेत्रे) | 1) तदान्ध्रदेशे विकले इति आन्ध्रीयः । मधुः । |
| 2) वासुदेवः (पित्रा नामकृतं) पूर्णप्रज्ञः (सन्यासग्रहण-) वेलायां गुरुकृतं) आनन्दतीर्थः (वेदान्तसाम्राज्य अभिषेककाले गुरुकृतं) मध्वः (अकारान्तपुल्लिङ्गः) दशप्रमतिः इत्यादि नामानि वैदिकानि नामानि | 2) मधुशर्माऽसि ० ० ० मधुनाम वहन्नेव इत्यादिना मधुः इति उकारान्तं नाम-मधुनामा तु विधवायोने जारात् भविष्यति |
| 3) पिता - मध्यगेहभट्टः तौ उभौ आचार्य सन्यास वेलायां ताः ऊर्ध्वं चास्तामिति | 3) माता विधवा -विधवा ब्राह्मणीरतः (तद्वंशः मध्यगेहं) |
| 4) अच्युतप्रेक्षादाश्रमं स्वीकृत्य बदर्यां श्रीवेदव्यासादध्ययनादि कृत्वा व्यासशिष्यत्वमाप | 4) पद्मपादुकाचार्यात् विद्या प्राप्तिः |

अतः अयं मधुः न मध्वः । प्रसिद्धमध्यगेहः मद्यगेहः

कृतः इति स्पष्टं । तप्तमुद्राधारणं श्वेतमृत्नामधारणं अद्वैतविरोधित्वेन द्वैतमार्गनिरतिः इत्यादि रामानुजादिसाधारणमिति न मध्वमात्रलिङ्गम् । वेणुपत्राद्याकारनामधारणं तु अद्वैत्येकदेशिषु हस्तामलकादिषु दृष्टम् । शिवनिन्दा तु न मध्ववृत्तिरिति तदापादनं श्रीमध्वमतापरिज्ञानमूलम् । स्वकपोलकल्पितमन्यत्सर्वमिति नातिविमर्शे मनः प्रसीदति ॥

किञ्च इदमाप्यालोचनीयम् । अयोग्यत्वेन पुराणादिषु सिद्धदैत्यानां विष्णूपासकत्वं वा शिवोपासकत्वं वा इति ॥ शिवं प्रति तपश्चरणं कृत्वा लब्धवराणां अनेक दुराचार परीतानां दुष्टदैत्यानां संहारः विष्णुकृतः श्रूयते पुराणादिषु विष्णुं संसेव्य लब्धवराणां वैष्णवानां मध्ये एकोऽपि न शिवसंहृत इति । अतः वैष्णवमतानुसरणं न दैत्यलक्षणम् हिरण्यकाशिप्वादिषु अद्वैतनिरतिर्दृष्टचरैवेति सर्वं समञ्जसम् ॥

गोमञ्जरी - मणिमञ्जरीं मण्डयन्ती, दुष्कृतमाणिक्यमञ्जरीं खण्डयन्ती, श्रीवायोःश्रीमध्वावतारस्य वेदप्रतिपाद्यत्वं समर्थयन्ती, तत्वमस्यादि वाक्यार्थं पर्यालोचयन्ती, विष्णोः सर्वोत्तमत्वं, तथा शिवस्य तद्भक्तत्वं अवरत्वादि उपपादयन्ती, नितरां श्रीमध्वान्तर्यामिणः श्रीरमारमणस्य सर्वज्ञस्वतन्त्रस्य श्रीकृष्णस्य जगद्विलक्षणस्य पूजां विदधती विराजते इति अवेदयितुं मोमोत्ति नः चेतः । तत्सौष्टवे सौलक्षण्ये दुर्वादिवारणविदारण क्षमत्वे, श्रीहरिवायुप्रीतिकरत्वे तदवलोकनावकाशजुषो विमर्शका दोषज्ञाः विद्वांसः एव प्रमाणम् ।

अस्यां वेदव्याख्यानावसरे बहुटिप्पणीकाराः विशेषतः श्री-

वैश्वनाथिनारायणपण्डिताचार्याः समुपाश्रिताः इति सप्रश्रयं निवेदयामः । प्रायः तद्ग्रन्थविषया एवेहानूदिताः इति तेषु बद्धादराः स्मः ।

<u>एतद्ग्रन्थकर्तारः</u> - श्रीद्वारकानाथाचार्याः अस्मद्गुरुचरेणेषु परमपूज्य पण्डितराजेत्यादिबिरुदभूषित श्री जालिहाळ श्रीनिवासाचार्येषु पादसेवाभाग्यभाजो भूत्वा श्रीमन्न्यायसुधान्तमधीत्य कृतपरिश्रमाः सदाचारनिरताः शुद्धवर्णाश्रमधर्मसंपन्नाः कल्याणपुरीमधिवसन्ति । श्रीपरमपूज्यानां श्रीमज्जगन्नाथदासवर्याणां अनुग्रहभाजः तच्छिष्याः "*तिरुकप्पदासाः*" इति ख्याता आसन् । तत्पुत्रः गुण्डप्पदासः । तत्तनयः हनुमन्तराव् शर्मा । तत्पुत्रः श्रीनिवासमूर्तिमहोदयः । तत्सुतः हनुमन्तराव् शर्मा । लौकिक कार्यनिरतोऽभूदिति राव् उपपदभागभवत् । तत्पत्नी शान्ताबाइ महाभागा । अनयोः दम्पत्योः ज्येष्ठ पुत्रत्वेन समुद्भूता श्रीद्वारकानाथाचार्याः ग्रन्थकृत इमे एवं श्रीहरिवायुसेवारूपाणां अनेक कृतिरत्नानां रत्नाकरा भूयासुरित्याशास्महे । सातीर्थ्यं सार्थयतां एषां सौहार्दसख्यं चिरंजीयादिति एतान् अस्मद्गुरुवर्यान् विद्वद्वरेण्यांश्च प्रणम्य विरमामो विस्तरात् ।

कल्यणपुरी (बेङ्गलूरु)
22 - 12 - 2003
स्वभानु मार्ग० कृ० त्रयोदशी

सज्जनविधेयः
श्रीनिवासाचार्यः ताम्रपर्णी

# ಪ್ರಕಾಶಕರ ನುಡಿ

ಭಗವಂತನ ಪರಮಾನುಗ್ರಹಕ್ಕೆ ಪಾತ್ರರಾದ ಶ್ರೀ ವಾಯುದೇವರ ಅವತಾರರಾದ ಶ್ರೀ ಮಧ್ವಾಚಾರ್ಯರನ್ನು ವಿಕೃತವಾಗಿ ಚಿತ್ರೀಕರಿಸಿ ಅವರ ಭವ್ಯ ಚರಿತ್ರೆಯನ್ನು ಅವಹೇಳನ ಮಾಡುವುದಲ್ಲದೆ ಅವರ ಪರಂಪರೆಯಲ್ಲಿ ಬಂದ ಯತಿಗಳ ನಿಂದನೆ ಹಾಗೂ ತಪ್ತಮುದ್ರಾಧಾರಣಾದಿ ವೈಷ್ಣವ ಸಂಪ್ರದಾಯಗಳನ್ನು ಖಂಡಿಸಿರುವ, ರಘುನಾಥ ಸೂರಿ ಎಂಬ ಅದ್ವೈತ ಪಂಡಿತರಿಂದ ವ್ಯಾಖ್ಯಾನ ಸಹಿತವಾಗಿ ರಚಿತವಾಗಿರುವ "ಮಾಣಿಕ್ಯ ಮಂಜರಿ" ಎಂಬ ಗ್ರಂಥವು ಕಳೆದ ವರ್ಷ ಧಾರವಾಡದಿಂದ ಪ್ರಕಟವಾಗಿರುವ ವಿಷಯ ಎಲ್ಲ ಮಾಧ್ವ ಬಂಧುಗಳಿಗೆ ತಿಳಿದಿದೆ.

ಪ್ರಾತಃಸ್ಮರಣೀಯ ಪಂಡಿತರತ್ನ, ಪಂಡಿತರಾಜ, ಪರಮಪೂಜ್ಯ ಶ್ರೀ ಜಾಲಿಹಾಳ್ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರ ಪ್ರಿಯ ಶಿಷ್ಯರಾದ ಶ್ರೀ ದ್ವಾರಕಾನಾಥಾಚಾರ್ಯರು, ಕಾರ್ಯನಿಮಿತ್ತ ಧಾರವಾಡಕ್ಕೆ ಭೇಟಿ ನೀಡಿದಾಗ "ಮಾಣಿಕ್ಯ ಮಂಜರಿ" ಗ್ರಂಥ ಪ್ರಕಟವಾಗಿರುವುದನ್ನು ತಿಳಿದು ತಕ್ಷಣ ಅದನ್ನು ತರಿಸಿಕೊಂಡು ಆಮೂಲಾಗ್ರವಾಗಿ ಓದಿದರು. ಅಲ್ಲಿರುವ ಅಪ್ರಾಮಾಣಿಕ, ಗೂಢಾಗ್ರಹಯುಕ್ತ ವಿಕೃತ ಚಿತ್ರಣದಿಂದ ಮನ ನೊಂದು ಆ ಗ್ರಂಥಕ್ಕೆ ಖಂಡನಾತ್ಮಕ ಗ್ರಂಥ ರಚಿಸಲು ನಿಶ್ಚಯಿಸಿದರು. ಖಂಡನ ಗ್ರಂಥ ರಚನೆ ಸುಲಭ ಸಾಧ್ಯವಲ್ಲ. ಅನೇಕ ಸ್ವಮತೀಯ, ಪರಮತೀಯ ಗ್ರಂಥಗಳ ಅವಲೋಕನ, ಪ್ರಮಾಣಗಳ ಪರಿಶೀಲನೆ, ವಿದ್ವಾಂಸರೊಂದಿಗೆ ಚರ್ಚೆ, ಬಿಡುವಿಲ್ಲದ ಬರವಣಿಗೆ, ಒಂದೇ, ಎರಡೇ. ಆದರೆ ಪರಮತ ಖಂಡನ ಪೂರ್ವಕ ಸ್ವಮತ ಸ್ಥಾಪನ ದೀಕ್ಷಾ ಬದ್ಧರಾದ ಆಚಾರ್ಯರು ಧೃತಿಗೆಡಲಿಲ್ಲ. ಶಿಷ್ಯರೊಂದಿಗೆ ಮೈಸೂರಿಗೆ ತೆರಳಿ "ಮಾಣಿಕ್ಯ ಮಂಜರಿ" ಸಂಪಾದಕರನ್ನು ಭೇಟಿ ಮಾಡಿದರು. ಅವರ ಬಳಿ 2 ತಾಸುಗಳ ಕಾಲ "ಮಾಣಿಕ್ಯ ಮಂಜರಿ" ಗ್ರಂಥದ ಬಗ್ಗೆ ಚರ್ಚಿಸಿ, ಖಂಡನ ಗ್ರಂಥವನ್ನು ರಚಿಸುವ ತಮ್ಮ ನಿರ್ಧಾರವನ್ನು ಅವರಿಗೆ ತಿಳಿಸಿ ಬಂದರು.

ಶ್ರೀ ಹರಿವಾಯುಗಳ ಅನುಗ್ರಹದಿಂದ ಖಂಡನ ಗ್ರಂಥ ರಚನೆ ಪ್ರಾರಂಭವಾಯಿತು. ಪುರಾಣಗಳ ಅವಲೋಕನ, "ಮಾಣಿಕ್ಯ ಮಂಜರಿ" ಗ್ರಂಥದಲ್ಲಿ ಕೊಟ್ಟಿರುವ ಪ್ರಮಾಣಗಳ ಪರಿಶೀಲನೆ, ಮೊದಲಾದ ಹತ್ತು ಹಲವಾರು ಕೆಲಸಗಳೊಂದಿಗೆ ಬರವಣಿಗೆ ಮುಂದುವರೆದು ಖಂಡನ ವಿಷಯಗಳು ಆಚಾರ್ಯರ ಲೇಖನಿಯಿಂದ ಅವರ ಗುರುಗಳ ಅನುಗ್ರಹದಿಂದ ಹರಿದು ಬಂದವು. ಸುಮಾರು 265 ಪುಟಗಳ ದಿಟ್ಟ ಉತ್ತರ ರೂಪ ಗ್ರಂಥವೇ "ಗೋಮಂಜರಿ". "ಗೋ" ಎಂದರೆ ವಜ್ರ, "ಮಂಜರಿ" ಎಂದರೆ ಗೊಂಚಲು. ಶ್ರೀ ಹರಿವಾಯುಗಳೆಂಬ ಅಮೂಲ್ಯ ವಜ್ರಗಳ ಮಹಿಮೆಗಳೆಂಬ ಗೊಂಚಲು. "ಮಣಿಮಂಜರಿ"ಯ ಖಂಡಾನಾಭಾಸ ರೂಪ ಗ್ರಂಥ "ಮಾಣಿಕ್ಯ ಮಂಜರಿ"ಯಾದರೆ, "ಮಾಣಿಕ್ಯಮಂಜರಿ"ಯ ಖಂಡನಗ್ರಂಥ "ಗೋಮಂಜರಿ".

अतः स प्रज्ञया पूर्णो भविष्यति न संशयः ॥
अवतारत्रये वायोर्मतं भागवताभिधम् ।
स्थापनं दुष्टदमनं द्वयमेव प्रयोजनम् ॥
नान्यत्प्रयोजनं वायोस्तथा वैरोचनात्मके ।
अवतारत्रये वीन्द्र दुःखं गर्भादिसम्भवम् ॥
नास्ति नास्त्येव वायोस्तु तथा रोचनजन्मनि ।
शुक्लशोणितसंबन्धो ह्यवतारचतुष्टये ॥

इत्यादिवचनैः ज्ञायते मध्वाचार्यस्य वाय्ववतारत्वं शंकराचार्यस्य दैत्यत्वं च । एवं विप्रतिपत्तौ कथं च निर्णयः इति शंकायां वेदसंवादासंवादाभ्यामिति ब्रूमः ॥ सन्ति खलु बहूनि श्रीमध्वपराणि वेदवचांसि । तथा नैकमपि शंकरपरमित्ययं विशेषः । अभियुक्तैरुपपादितो द्रष्टव्यः । अङ्गीकृतं चैतच्छंकराचारयिरपि ।एवं उक्तं शंकराचार्यैः स्वभाष्ये - विप्रतिपत्तौ च स्मृतीनां अवश्यकर्तव्ये अन्यतरपरिग्रहेऽन्यतरपरित्यागे च श्रुत्यनुसारिण्यः स्मृतयः प्रमाणं अनपेक्ष्या इतराः ।

तदुक्तं प्रमाणलक्षणे **विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्** इति । वेदस्य हि निरपेक्षं स्वार्थे तात्पर्यं रवेरिव रूपविषये। पुरुषवचसां तु मूलान्तरापेक्षं वक्तृस्मृति व्यवहितं चेति विप्रकर्षः । तस्मात् वेदविरुद्धेविषये स्मृत्यनवकाशप्रसङ्गः न दोषः इति अभिहितम् । तेन ज्ञायते स्मृतीनां परस्परविरोधे च वेदेनैव निर्णयः कर्तव्यः । वेदानां च विष्णुविषयत्वं तथा श्रीमध्वपरत्वं च बहुमूलग्रन्थेषु निरूपितम् । तद्विरुद्धार्थबोधकानां शिव, सौरादिपुराणानां प्रामाण्यम् अंगीकर्तुं न शक्यते इति ।

वेदानां च विष्णुपरत्वं -

नामानि सर्वाणि यमाविशन्ति तंवै विष्णुं परममुदाहरन्ति ।- इति भाल्लवेयश्रुतिः ।

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि न संशयः ।

इति द्वैततत्त्वप्रदीपे निरूपितं ज्ञायते । तथा चरुद्रादिसर्वनामप्रतिपाद्यत्वाद्विष्णोरेव रुद्रादि सर्वसूक्तमुख्यप्रतिपाद्यत्वमवगन्तव्यम् ।

ननु देवा वै स्वर्गलोकमायन् इति अथर्वशिरसि रुद्रस्य सर्गाद्यकालीनत्वं अवगम्यते। एवं च शिव एव केवलः इति श्वेताश्वरवाक्यमपि शिवेतरस्य आदिकालीनवृत्तित्वं निषिध्य शिवस्य जगत्कारणत्वं प्रतिपादयत् उपपन्नं भवति । अन्यथा केवलपदवैयर्थ्यापत्तेः । एवं तैत्तिरीयेऽपि यो देवानां प्रथमं परस्ताद्विश्वाधिको यो रुद्रो महर्षिः । हिरण्यगर्भं पश्यन् जायमानम् इति वाक्यमपि सकलजगत्कारणहिरण्यगर्भस्यापि उत्पत्तिं प्रतिपादयत् रुद्रस्य जगत्कारणत्वमवगमयति । तस्मात् सर्वेषामपि वाक्यानां रुद्रपरत्वमेंव न नारायणपरत्वमिति चेन्न -

*एको ह वै नारायण आसीन्न ब्रह्म, नेशानः नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्नीषोमौ नं सूर्यः, स एकाकी न रमते तस्य ध्यानान्तस्यैका कन्या दशेन्द्रियाणि* इत्यादिना -

*अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत तस्य ध्यानान्तरस्य ललाटात् स्वेदोऽपतत् इमा आपः अण्डं अभवत् तत्र ब्रह्मा चतुर्मुखोऽजायत । अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत तस्य ध्यानान्तरस्य ललाटात् स्वेदो अ-पतत् तत्स्वेदात् बुद्बुदो अभवत् । बुद्बुदात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत* इति वाक्येन-

*अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयेति अथाप-स्ससर्ज* इति वचनेन, नारायणात् ब्रह्मो जायते, नारायणात् रुद्रो जायते, नारायणात् प्रजापतिः प्रजायते, नारायणात् इन्द्रो जायते, नारायणात् द्वादशादित्याः, रुद्राः, वसवस्सर्वे देवाः समुत्पद्यन्ते, सर्वे लोकाः, सर्वाणि च भूतानि, नारा-यणादेव समुत्पद्यन्ते, नारायणे प्रलीयन्ते, इति उपनिषद्वचने-न चतुर्मुखरुद्रादीनां असत्वम्, नारायणस्यैव सत्त्वप्रतिपादनेन तस्यैव जगत्कारणत्वावधारणात् । सर्वेषां वेदवचनानां विष्णु-परत्वमेव वक्तव्यम् ।

यो देवानां नामधा एक एव तं संप्रश्यं भुवनायन्त्यन्या । 10-82-3 ।

नारायणपरा वेदाः देवा नारायणाङ्गजाः ।
नारायणपरा लोका नारायणपरा मखाः । भाग॰ 2-5-15

वेदैश्चसर्वैरहमेववेद्यः वेदान्तकृद्वेदविदेव चाहम् - गी 15-15

इत्यादिप्रमाणैर्विष्णोः सर्वशब्दवाच्यत्वावगमात् रुद्रादिपदा-

नां अपि श्रीहरिपरतया व्याख्यानं न कल्पितम् ।

सर्वोत्कर्षे देवदेवस्यविष्णोः महातात्पर्यं नैव चान्यत्र किञ्चित्।
अवान्तरंतत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थस्ततोऽतः ।
इति पैङ्गि श्रुतिः
इत्यादिप्रमाणैः रुद्रादीनां रुद्रादिसूक्तेषु अवान्तरतात्पर्यविषयत्वावगमात्, विष्णोः मुख्यप्रतिपाद्यत्वं न विरुद्धम् ।

न च **शिव एव केवल** इत्यादिशिवमात्रपरत्ववचनानि सन्तीति वाच्यम् । तेषां **असदेव इदमग्र आसीत्** इत्यादि वचनानामिव विष्णुपरत्वं बोध्यम् । किञ्चेदमवधेयम् । यथा सर्ववेदानां सर्वनाम्नां विष्णुपरत्वं अभिदधती प्रत्यक्षश्रुतिः तथा नास्ति रुद्रपरश्रुतिरिति रुद्रादिनाम्नां विष्णुविषयकत्वेऽपि न विष्ण्वादिपदानां रुद्रपरत्वमिति । एतेनैव ब्रह्मरुद्रनारायणानां कल्पभेदेन जगत्कारणत्वमिति व्यवस्थापि न घटते । स्वरूपगतनीचोच्चायाः कालभेदेन व्यत्यासायोगात् । विष्णोरेव प्रलयकाले सत्वाङ्गिकारात् । रुद्रादिपदानां विष्णुपरत्वं च ज्ञायते -

रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः - इति सूत्रभाष्ये (1-3-1)

इत्यादि पुराणवचनबलत्वात् वक्तव्यम् । नेशानः इत्यादिशब्दैः रुद्रादीनां प्रलये अवस्थानस्य स्पष्टतया निषेधात् । तस्मात् वेदादीनां विष्णुपरत्वात् प्रलयकालस्थितत्त्वमन्यथानुपपत्या अंगीकरणीयम् । अन्यथा सर्ववेदानां विष्णुपरत्वात् तस्य च प्रलयेऽभावे मुख्यवृत्या वाच्यपदार्थाभावात् तेषां अप्रा-

माण्यापत्तेः ॥ शंकरभाष्येऽपि *गतिसामान्यात्* इति सूत्रभाष्ये *समानैव हि सर्वेषु वेदान्तेषु चेतत्कारणवगतिः* इति, चक्षुरादिनामिव रूपादिषु, भामत्यां *यथा हि सर्वेषां चक्षू रूपमेव ग्राहयति, न पुनः रसादिकं कस्यचिद्दर्शयति, कस्यचिद्रूपम्* इति सर्वेषां वचनानां एकप्रकारेण प्रतिपादकत्वं उररीकृटम् ।

**सर्वे वेदाः** युक्तयः सुप्रमाणाः ब्राह्मं ज्ञानं परमं त्वेकमेव । प्रकाशयन्ते न विरोधः कुतश्चित् वेदेषु सर्वेषु तथेतिहासे इति पैङ्गीश्रुतिवचनमपि ज्ञापयति सर्वेषां वाक्यानां अविरुद्धार्थप्रतिपादकत्वम् ।

एवं मध्वाचार्यस्य दैत्यत्वविषये उदाहृत नानापुराणवाक्यानां अपि अन्यपुराणवचनविरुद्धत्वात् श्रुतिविरुद्धत्वाच्च अप्रामाण्यं । बहूनि च अत्र वेदवाक्यानि प्रमाणानि ।

# श्रीमध्वस्य वायुत्वसमर्थनम्

1) वेदिषदे प्रियधामाय सुद्युते
धासिमिव प्र भरा योनिमग्नये ।
वस्त्रेणेव वासया मन्मना शुचिं
ज्योतीरथं शुक्रवर्णं तमोहनम् । 1-140-1 ।

पदपाठः - वेदिऽसदे । प्रियऽधामाय । सुऽद्युते । धासिम्ऽ इव । प्र । भर । योनिं । अग्नये ॥ वस्त्रेणऽ इव । वासया । मन्मना । शुचिम् । ज्योतिःऽरथम् । शुक्रऽवर्णम् । तमःऽहनम् ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे अधिकारिन् त्वमिति शेषः । वेदिषदे वेदपरिपूर्णत्वात् वेदि, वेदव्यासः, तत्समीपे सीदति गच्छतीति वेदिषत् तस्मै । वेदाः ऋगाद्याः, ते सन्ति अस्मिन्निति वेदि, तस्मिन् सीदतीति वा । वेदनं वेदाः, तत्त्वज्ञानं, तस्मिन् विद्यतेति वेदि । तस्मिन् सीदतीति वा । वेदव्यासरूपगुरुपसत्तिकर्ता इत्यर्थः । प्रियधामाय - प्रियं धाम यस्य तस्मै । छान्दसप्रयोगः । अत्यन्त प्रियं नारायणं सर्वदा स्वहृदि धारकाय, यद्वा प्रियं परमात्मानं **तदेतत्प्रियः**, इति श्रुतेः, दधातीति प्रियधा, तादृशी मा ज्ञानं यस्य तस्मै । सर्वदा भगवद्विषयकज्ञान युक्ताय । सुद्युते - सु शोभना पूर्णा द्युत् प्रज्ञा यस्य तस्मै । पूर्णप्रज्ञाय शोभनप्रकाशविशिष्टाय वा, अग्नये अंगानि प्रेरयतीति अग्निः तस्मै, सर्वदेवताप्रेरकाय, मध्वाचार्याय, योनिं तत्त्वज्ञानरूपमासनं, वेदिषदे- सोमपानार्थं यज्ञवेदिस्थिताय प्रियधामाय - यज्ञवेदिलक्षणप्रियाय, सुद्युते - शोभनद्योतनाय, अग्नये

- प्रसिद्धाग्नये, धासिमिव अन्नमिव धासिशब्दस्यान्ननामसु पाठात् । तथैव हि सायणभाष्यम् । प्रभर - संपादय । ज्योतीरथं - ज्योतिः ज्ञानमेवरथो यस्य सः तम् । शुचिं - शुद्धम्, शुक्लवर्णं परमसात्विकं ब्राह्मणवर्णं वा, तमोहनम् सकलमिथ्याज्ञाननिदानदुरागमोन्मूलनकरं, श्रीमध्वाचार्यं, वस्त्रेण इव, सूक्ष्मेण मन्मना - हरिविषयकमननादिना, वासय निवासय । आत्मनि इति शेषः । आवाहितस्य मध्वाचार्यस्य पूजादिकं कार्यं । तत्प्रकारं उपदिशति । शुचिं कृतस्नानं, स्नानादिना पूजितं इति यावत् शुक्रवर्णं परशुक्लत्रयांतरगतत्वात् परमसात्विकम् तमोहनम् मिथ्याज्ञानादिरहितम्, अन्धतमसि दैत्यान् हन्तीति वा, मन्मना मननीयेण मनोहरेण, वस्त्रेण वासय पूजय । सर्वालंकारेषु वस्त्रस्य प्राधान्यात् तस्य स्वशब्देनोपादानम् । तदुक्तं -

वस्त्रहीनमलंकारं घृतहीनं च भोजनम् ।
भावहीनं च सल्लापं न प्रशंसति पण्डिताः । इति

यथा वस्त्र्याद्युपचारैः संतोषो भवति एवमस्य मननाद्युपासनेन परितोषो भवत्येवातोऽवश्यं तत्प्रीतये तदीयमननाद्युपासनं विधेयमिति भावः ।

2) अभि द्विजन्मा त्रिवृदन्नमृज्यते
संवत्सरे वावृधे जग्धमी पुनः ।
अन्यस्यासा जिह्वया जेन्यो वृषा
न्यन्येन वनिनो मृष्ट वारणः । 1-140-2 ।

पदपाठः - अभि । द्विऽजन्मा । त्रिऽवृत् । अन्नम् । ऋज्यते । संवत्सरे । वावृधे । जग्धम् । ईमिति । पुनरिति ॥ अन्यस्य

। आसा । जिह्वया । जेन्यः । वृषा । नि । अन्येन । वनिनः । मृष्ट । वारणः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

यः वायुः द्विजन्मा ब्राह्मणरूपधारी सन्, संवत्सरे जग्धं कालेन लीनं कुसमयैः अविद्यमानमिव कृतं, त्रिवृत् त्रिषु वेदेषु तात्पर्यविषयतया वर्तमानं, अन्नं अद्यतेत्ति च भूतानि तस्मादन्नं तदुच्यत इति श्रुत्या, ब्रह्मस्वरूपं, उपलक्षणमेतत् प्राणादीनामपि, पुनः यथा पूर्वं, ववृधे - वृद्धत्वेन गुणपूर्णत्वेन व्याख्यांकृत्वा तस्य वृद्धिमकरोत् । ऋज्यते स्वबुद्धौ सदा नारायणं विषयीकरोति । *ऋज गतिस्थानार्जनोपार्जनेषु* इति धातोः व्यत्ययेन श्यन् । यद्वा अभि अभ्यर्हितः ब्राह्मणादिवर्णानां मध्ये श्रेष्ठे, ब्राह्मणजन्मनि, स यदा द्विजन्मा उपनीतः सन्, त्रिवृत् संवत्सरसन्निधानात् त्रिभिः वत्सरैः सह वर्तमानो भवति, तस्मिन् संवत्सरे वत्सरे अतीते सति, अन्नं नारायणं, ववृधे गुणपूर्णत्वेन प्रतिपादयति स्म । *अष्टवर्षं ब्राह्मणमुपनयेत्* इति वचनात् अष्टवर्षे द्विजन्मा सन् त्रिवर्षे अतीति एकादशाब्देऽतीते सति दिव्ये द्वादशाब्दस्य मध्ये इति यावत् । किं चायं मध्वः, वृषा वर्षणशीलो मेघ इव गर्जमानः, जिह्वया स्ववाग्बलेन, अन्यस्य संकरादि दुर्वादिनः, आसा आस्येन, जेन्यः जेता । दुर्वादिमुखभंगकर्तेत्यर्थः । अन्येन अनसंबन्धिना मुख्यप्राणाभिमन्यमानेन तत्त्वज्ञानेन इति यावत् । वनिनः वनं संभक्तिः तद्युक्तान् अधिकारिणः, नि मृष्ट अशोधयत् । तस्मादेव स वारणः सर्वेषां सज्जनानां संसारनिवारक इति यावत् । **स एतान् ब्रह्म गमयति** इति श्रुतिः, *श्रुतोपनिषत्कगत्यभिधानात् इति* च सूत्रम् अस्मिन् विषये प्रमाणम् । ईं इदं

निश्चितम् ।

3) कृष्णप्रुतौ वेविजे अस्य सक्षिता
उभा तरेते अभि मातरा शिशुम् ।
प्राचाजिह्वम् ध्वसयन्तं तृषुच्युतमा
साच्यं कुपयं वर्धनं पितुः । 1-140-3 ।

पदपाठः - कृष्णऽप्रुतौ । वेविजे इति । अस्य । सऽक्षितौ । उभा । तरेते इति । अभि । मातरा । शिशुम् ॥ प्राचाऽजिह्वम् । ध्यसयन्तम् । तृषुऽच्युतम् । आ । साच्यम् । कुपयम् । वर्धनम् । पितुः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

अस्य वायोः, शिशुं अवतारं, अंशभूतं, यद्वा अस्य परब्रह्मणः, अ इति ब्रह्मेति श्रुतेः । तस्य, शिशुं पुनः पुनः अतिशयेन श्वचति तदीयगुणान् जानाती, वर्धयति, वा तम् । टु ओहृश्विगतिबुद्ध्योरिति धातोः रूपम् । गत्यर्थानां च ज्ञानार्थकत्वादिति मन्तव्यम् । सर्वाधिकारिवर्गे अतिशयिताऽनवरतज्ञानिनं, तदुत्कर्षप्रतिपादकं, पूर्णप्रज्ञं, अभिलक्ष्य निमित्तीकृत्य, उभौ जीवपरमात्मानौ, मातरा मात्रा प्रकृत्या सह तरेते प्लवेते । निर्विशेषब्रह्मैक्यवादिना उन्मूलितस्वरूपत्वात् निमज्जिताविवक्तौ तौ पुनः अनेन मध्वाचार्येण पुनरुज्जीवितौ ॥

यद्वा मातृशब्दः प्रसिद्धजननीपरः । तत्समभिव्याहारात् उभावित्यनेन मातृपुत्रौ गृह्येते । तस्य स्वसंबन्धिपदार्थवाचि-

त्वात् । एवं च एनं श्रीमध्वाचार्यं निमित्तीकृत्य उभावपि तीर्णौ । यद्ययं नावतरिष्यति तर्हि उभयोरपि नरके पातो भविष्यतीति भावः ।

तथा हि - प्रपञ्चमिथ्यात्व, जीवैक्यप्रतिपादकजीवब्रह्मैक्यप्रतिपादकदुःशास्त्राभ्यसनेन परिपक्वमिथ्याज्ञानाः भूत्वा मातृभार्यादिविवेकरहितत्वात् मातर्यपि भार्याबुध्या यथेष्टोपभोगापातेन सज्जनाः नरकं प्रविशेयुः । अनेन च तस्य मतस्य निराकरणेन मातृगमनादिदोषात् सज्जनान् रक्षणं कुर्वन् उभयोरपि पापात् निवृतिं अकरोदिति । अत एव प्रकृत्यादिपदं विहाय मातृपदं गृहीतम् । अनेनैव हि भेदपंचकस्यापि सत्यत्वं सूचितं भवति । उभावित्युक्त्या जीवब्रह्मणोर्भेदस्य, मातृपुत्रयोश्च तरणोक्त्या जीवयो परस्परं, प्रकृत्या सह उभावित्युक्त्या जडेश्वरयोः, जीवजडयोः, भेदस्य चावगम्यमानत्वात्, कथं भूतौ ताविति <u>वेविजे</u> <u>सक्षितौ</u> वेविजे देहे, देहस्य प्रतिक्षणं विकारसद्भावात् चंचलत्वात् ओविजी भयकंपनयोरिति धातोः रूपम् । कंपनस्य चलनरूपत्वात् । सक्षितौ सह वसन्तौ, क्षितिनिवासगत्योरिति धातुः । **द्वासुपर्णा** ००० इति श्रुतिः अत्र प्रमाणम् । तौ काविति शृंगिग्राहकन्यायेन प्रदर्शयति <u>कृष्णप्रुतौ</u> इति । कृष्णः नारायणः *कृषिः भूवाचकः शब्दो णश्च निवृत्तिवाचकः* इति वचनात् पूर्णानंद इत्यर्थः । प्रुत् जीवः, *पुद्गलो निरयं गिरन्* इति जीवनामासु पठितस्य पुद्गलशब्दस्यौकदेशोयं पुदिति शब्दः । तस्य केवल दुःखरूपनरकवाचित्वात् । रमणापरपर्यायसुखवाचकस्य रेफस्य छांदसस्य वा पृषोदरादित्वेन वा मध्ये निवेशे प्रुदितिरूपम् । तेन सुखस्य दुःखगस्तत्त्वं सूचयति । यद्वा पॄपालनपोषणयोरिति धातोः, पिपर्ति पालयति पूरयति वेति पाः । सपालकः पूरकश्च नारायणः, स उत्

उत्कृष्टो यस्मादिति प्रुत् जीवः, तदिदं स्पृष्टं मुक्तं **द्वासुपर्णेति** श्रुतौ *अनक्षन् अन्य स्वाद्व* इत्यादिपदैः ।

ननु इदं वाक्यं व्यावहारिकभेदं परमिति । अन्यथा परेऽव्यये सर्व एकीभवंतीति श्रुतिविरोधापत्तेरित्यताह - कृष्णप्रुताविति । कृष्णस्य नारायणस्य, प्रुतौ साक्षात्कारे सत्यपि, सक्षितौ सहैव वसन्तौ न त्वैक्ष्यं प्राप्ताविति यावत् । तेन अयं भेदः न ज्ञाननिवृत्य इत्युक्तं भवति । किं लक्षणं मध्वाख्यशिशुं प्राचाजिह्वं, तृषुच्यतं, आसाच्यं ध्वसयन्तं, प्राचा प्राग्भावीयेन निमित्तेन भृशं ह्वयते स्पर्शयत स तत्तथोक्तः, पूर्वजन्मनि भीमावतारे हतत्वात् अस्मिन् युगे तत्स्पर्धार्थमुत्पन्नो मणिमान् संकर इत्यर्थः । कपयं कुमतिं कुशास्त्रकर्तारं । तृषुच्युतं तृषु क्षिप्रं, च्यावयति पदार्थजातं क्षणिकं मन्यमानः तम् । क्षणिकवादिनं, बौद्धशास्त्रकर्तारं आ समन्तात् साच्यं अवयवावयविषु, गुणगुणिषु, जातिव्यक्त्यादिषु च साचयति समवाययति समवायमाचष्टे । असौ असाच्यतं । तार्किकमतं, सच समवाय इत्यस्येदम् रूपम् । ध्वसयन्तं खण्डयन्तं शिशुमित्यन्वयः । सकलदुर्मतीयेषु मायिनश्चैवातिहीनत्वात् तस्य प्रथमं निर्देशः । तदपेक्षय बौद्धस्य क्षणिकत्वांगीकारात् किञ्चिदुत्तमत्वात् द्वितीयतया निर्देशः । तार्किकमतस्य तदपेक्षयोत्तमत्वात् तदनन्तरं निर्देशः ।

4) मुमुक्ष्वो मनवे मानवस्यते
रघुद्रुवः कृष्णसीतास ऊ जुवः ।
असमना अजिरासो रघुष्यदो
वातजूता उप युज्यन्ते आशवः । 1-140-4

।

पदपाठः - मुमुक्ष्वः । मनवे । मानवस्यते । रघुद्रुवः । कृष्णसीतासः । आऊं इति । जुवः ॥ असमनाः । अजिरासः । रघुस्यदः । वाता । जूताः । उप । युज्यन्ते । आशवः ॥

रघुद्रुवः रघुनाथं श्रीरामं प्रति द्रवंति उपगच्छन्ति तत्सेवार्थमिति भावः । सदा श्रीदिग्विजयमूलरामपूजासक्ताः । कृष्णसीतासः कृष्ण एव सीता लांगलपद्धतिः अक्षुण्णोपाय येषां ते । अथवा यथा कृषीवलस्य बीजावापस्थलं लांगलपद्धतिरेवं क्रियमाणस्य सकलसत्कर्मणः समर्पणस्थलं श्रीकृष्णः येषांते । तस्मिन् समर्पिते एवानन्तफलदं भवति ।

तपस्विनो दानपरा यशस्विनो
मनस्विनो मन्त्रविदः सुमङ्गलाः ।
न विन्दन्ति विना यदर्पणं तस्मै
सुभद्रश्रवसे नमो नमः ॥

इति भगवतोक्तेः (2-5-16) । सकलकर्मणां श्रीहरिसन्निधाने सदा अर्पणकर्तारः इति भावः । असमनाः अस्यति व्यस्यति वेदानिति असः वेदव्यासः । तस्मिन् मनो येषां ते । सुपां सुलुकिति जसः सुभावः ।

निजहृत्कमलेऽतिनिर्मले सततं साधु निशामयन्नपि।
अवलोक्य पुनः पुनर्नवं तमसौ विस्मित इत्यचिन्तयत् ॥ 7-17 ॥ इति सुमध्वविजयवचनात् । सदा श्रीव्यासमनस्का इत्य-

र्थः । जुवः ज्ञानिनः, यद्यपि जूशब्दस्य स्त्रीलिङ्गत्वं । तथापि तच्छब्दवाच्य सरस्वती तत्पति वाचकत्वात् तस्य पुंस्त्वमिति ज्ञेयम् । अजिरासः अक्षीणाः, रघुष्यदः रघु श्रीनारायणप्रति-पादकवेदव्याख्यातारः तं प्रतिस्मरणप्रवाहवन्तः । वातजूताः मूलरूपेण प्रेरिताः आशवः पूर्णसुखाः मुमुक्ष्वः मोक्षेच्छवन्तः मोक्षं तद्रूपं श्रीहरिं इच्छन्तः श्रीमध्वाचार्याः । सर्वत्र बहुव-चनम् पूजार्थं । मानवस्यते ज्ञानिप्रियाय, मनवे ज्ञानरूपाय, श्रीनारायणाय, उप युज्यन्ते समीपे मिलन्ति सेवितुं यान्ती-त्यर्थः । जसादिषु छन्दसि वा वचनमिति *मुमुक्ष्व* इत्यत्र गुणाभावः । ऊ निश्चयमेतत् । अथवा प्रमाणसम्मतत्त्वसूचनाय ऊ शब्दः ।

5) आदस्य ते ध्वसयन्तो वृथेरते
कृष्णमभ्वं महि वर्पः करिक्रतः ।
यत्सीं महीमवनिं प्राभि मर्मृशद्-
अभिश्वसन्स्तनयन्नेतिनानदत् ॥1-140-5॥

पदपाठः - आत् । अस्य । ते । ध्वसयन्तः । वृथा । ईरते । कृष्णम् । अभ्वम् । महि । वर्पः । करिक्रतः ॥ यत् । सीं । महीम् । अवनिम् । प्र । अभि । मर्मृशत् । अभिऽश्वसन् । स्तनयन् । एति । नानदत् ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

अस्य = वायोः संबन्धी अंशः, अभिश्वसन् = सर्वजीवन-हेतुः श्रीमध्वः, स्तनयन् = स्वभाष्यादिभिः वेदादि व्याख्यानं कुर्वन् सन्, नानदत् = विशेषेण शब्दं कुर्वन्, यत् = यदा

सीं = सरति जानाति सारयति ज्ञापयति इति वा सी = जीवेभ्यः भगवन्तं ज्ञापयित्रीं - तां महीं = महतीं, अवनिं = मुक्तिमार्गदर्शनेन जीवानां रक्षयित्रीं श्रुतिं, अभि= सर्वतः प्र मर्मृशन् = प्रकर्षेण विमृशन्, यदा च अभि एति = भूमौ सञ्चरति यदा चासौ करिक्रतः = गजस्थानीयान् मदान्धान् दुर्वादिनः आक्रामति तदा ते = असुराः, महि = पूज्यं, वर्पः = श्रीमध्वस्यरूपं ध्वसयन्तः = निन्दन्तः *तद्दण्डसंखण्डनसंश्रवं व्यवधादित्याद्युक्तेः* । यद्वा महि = महत्, जगद्व्यापि, वर्पः=भगवतः श्रीकृष्णस्य रूपं ध्वसयन्तः=अभ्यसूयन्तः, आत् = अनन्तरमेव कृष्णं = श्रीकृष्णपरमात्मानं, अभ्वं = अविभुं अनीश्वरं वा वृथा ईरते कथयन्ति ।

6) भूषन् न योऽधि बभ्रूषु नम्नते
वृषेव पत्नीरभ्येति रोरुवत् ।
ओजायमानस्तन्वश्च शुम्भते
भीमो न शृङ्गा दविधाव दुर्गृभिः ॥1-140-6॥

पदपाठः - भूषन् । न । यः । अधि । बभ्रुषु । नम्नते । वृषाऽ इव । पत्नीः । अभि । एति । रोरुवत् । ओजायमानः । तन्वः । च । शुम्भते । भीमः । न । शृङ्गा । दविधाव । दुःऽगृभिः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

यः मध्वाचार्यः, बभ्रूषु उपदिश्यमानग्रंथार्थग्रहणधारणपटुषु, शिष्येषु, पत्नीः भारत्यभिमन्यमानाः श्रुतीः, भूषन् न अलंकुर्वन्निव, अधि अधिकं संपूर्णं, सर्वशास्त्रमिति यावत्, नम्नते

उपदिशति । ननु श्रुतीनां अपौरेषयत्वात् स्वयं अलंकाररूपत्वात् कथमस्य उपदेशेन शोभा इति चेन्न अन्यैः मिथ्याज्ञानप्रसंजितान्यथाकारस्यैव अनेन परिहृतत्वात् न दोषः । तत्सूचयितुं न शब्दः । यो वृषा इव मेघ इव रोरुवत् गर्जमानः सन् अभि एति प्रतिवादिनिराकरणार्थं अभिमुखो भवति । यश्च ओजायमानः स्वीयसामर्थ्येनैव प्रकाशते । यच्च तन्वः स्वभक्तशरीराणि, शुम्भते शोधयति । पवित्रायति यश्च दुर्गृभिः तृतीया षष्ठ्यर्थे, दुष्टं गिरंति, वदन्ति तेषां दुर्वादीनां, शृङ्गाः शृङ्गानि, दविधाव कंपयति । दुर्वादीनां अहंकारं खण्डनं करोति इत्यर्थः । यद्वा । दुर्गृभिः दुर्वादिभिः, दुष्टानां गीर्भिः, वा मलिनीकृतानीति शेषः । शृङ्गाः वेदशिरोभागरूपोपनिषदः दविधाव शोधयति, प्रक्षालितवान् इत्यर्थः । स्वव्याख्यानेन परैरुक्तान् अर्थान् निराकृत्य प्रमाणप्रदर्शनेन व्याख्यातवान् इति भावः । भीमो न इव इति दृष्टान्तः । यथा भीमसेनः महाभारतयुद्धे शत्रूणां भयंकरसन् शत्रून् निहत्य शोभते तद्वत् इति ज्ञेयम् ।

## गोमञ्जरी

1) नम्नते - नम् न ते । णम् शब्दे व्यत्ययेन श्वम् नम्नते - विचारयति शब्दैः प्रतिपादयतीति यावत् ।

2) बिभ्रतीति - बभ्रवः डुभृन् भरणे उणादिः । बभ्रूः तासु बभ्रूषु भगवद्गुणान्बिभ्रतीषु विद्यासु ।

3) पत्नीः - पतनशीलाः, अमुख्यवृत्त्या विष्णोरन्यत् प्रतिपादयन्तीः, विद्याः ताच्छीलिको नः । ङीप् ।

4) रोरुवत् - रुशब्दे यङ्लुङ्गान्तात् शतृ प्रत्ययः नाभ्यस्तात् शतुरिति न नुम् । रोरुवत् - नितरां शब्दं कुर्वन् ।

5) <u>तन्वः</u> - अल्पाः द्वितीया बहुवचनं ओः सुपीति यण् ।
6) <u>शुम्भते</u> - शुम्भ भासते ।
7) <u>दुर्गृभिः</u> - दुष्टैः जेतुं अशक्यः, कल्यादिदैत्यप्रवेशहीनः इत्यर्थः । गृभ् आधाने इति धातुः, दुष्टैः अगृभिः ग्रब्धुं आधातुं प्रवेष्टुं न योग्यः । गृभ् तदर्हयः इः ।
8) <u>शृङ्गाः</u> - शृङ्गानि - सुपां सु, लुक्, पूर्वसवर्ण आ, आत्, शे, या, डा, याच्, आल्, इति शस्लोपः तथा शृङ्गशब्दात् आम् आदेशः ।
<u>यः</u> मध्वः, <u>बभ्रूषु</u> वैदिकविद्यां धरन्तीषु प्रजासु, <u>अधि</u> अधिकं <u>भूषन्</u>, <u>न</u> स्वयं अलंकार इव, <u>नम्नते</u> सेवते । स्वभाष्यादिरचनया हरिं इति शेषः ।

> श्रवणं मननं चैव निदिध्यासनमेव च ।
> परे गुरौ च या भक्तिः परिचर्यादिकं हरेः ।
> एषा सेवेति संप्रोक्ता यया तद्दर्शनं भवेत् ।

- बृहत् संहिता । (3-4-50) श्रीमध्वभाष्ये उदाहृतत्वात् ।

> ध्यानं निश्चिततत्त्वस्य तस्मात् शास्त्रावमर्शनम् ।
> वरं दशगुणं तस्मात्व्याख्यैकस्य शतोत्तरा । इत्युक्तेः ।

- तंत्र-सार 4-136, 137

यश्च <u>वृषा इव</u> स्वस्वामिकर्मकरण दक्षः मध्वः । <u>पत्नीः</u> पत्युः पूजाकर्मणिरताः प्रजाः । <u>रोरुवत्</u> कर्मणां ज्ञानाङ्गानां इतिकर्तव्यतां शब्दैः निरूपयन्, <u>अभ्येति</u> परितः, गच्छति ज्ञापयति वा । *एवं ज्ञानं कर्मविनाऽपि कार्यं सहायभूतं न विचारः कुतश्चित्* ( कमठश्रुतिः ) *उपासया कर्मभिश्च भक्त्या चानन्दचिन्त्रता*

- ब्रह्मतन्त्रे (3-4-33) इति श्रुतिस्मृतिभ्यः ।

ब्रह्मवेदननिविष्टचेतसां कर्म तत्र करणान्तरम् भवेत् ।
ज्ञापयन्निति परात्मवेदकः कर्म धर्ममपि सह्यचीकरत् ॥
सु-वि 9-51

तन्वश्च तनुं एव परां मन्यमानाः भोगलोलुपः (प्रजाः), ओजायमानः ओजः इव आचरन् भयं जनयन् शुंभते वैराग्यमुपदिशति । शुम्भ भाषणे **भक्तिः परे स्वेऽनुभवो विरक्तिः अन्यत्र चेष त्रिक एककालः** इति भागवते (11-2-42) ।

वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् ।
आपरोक्ष्यं तया विष्णोः इति पादक्रमो भवेत् ॥ अनु० 3-3-1

उत्पाद्याधिक वैराग्यं तद्गुणाधिक्यवेदनात् । (अनु० 3-3-6 तमे श्लोके ) ।

भीमो न = भयंकरः इव, शृङ्गाः परमतीयानां अग्रेसरत्वेन तन्मतस्थापकत्वेन शृङ्गस्थानीयाः, शृङ्गवत् आचरन्ती इति शृङ्गाः क्यप् - सुब्लुक्च । शृं= शरं वाग्बाणान् गमयन्तीति शृङ्गाः दुर्भाष्यरचितारः ताः (प्रजाः) दुर्गृभिः = सयुक्तिकैः सप्रमाणैः अत एव परैः दुष्टैः निगृहीतुं दुःशकैः वाक्शस्त्रैः दविधाव = विकंपयामास । गृहीतुं दुःशकाः दुर्गारः - तैः दुर्गृभिः ।

अयमत्र संग्रहीतोऽर्थः । वाक्यानि तावत् द्विधानि । अ-पौरुषेयानि पौरुषेयानिचेति । तत्र आद्ये पुनः द्विविधानि । साक्षात् विष्णुबोधकानि । विष्ण्वेतरबोधकत्वेन प्रतीयमानानि अपि उपक्रमादिलिङ्गैः विष्णुबोधकत्वेन व्यवस्थापितुं शक्यानि । अपौरुषेयानि वाक्यानि द्विविधानि । विष्णुबोधकानि दुष्टवाक्यानि चेति। तत्र पौरेषेयवाक्येषु प्रथमवाक्यसमुदायस्य श्रीमध्वाचार्यैः स्वीयव्याख्यानेन तत्तच्छब्दानां श्रीहरौ समन्वयेन तत्तच्छब्दप्रतिपाद्यानां गुणानां वृत्तिसूचनेन भूषयति । तदुक्तं **ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम् ॐ (ब्र० सू०** 1-1-25) । इति । अग्निगायत्रादिशब्दार्थरूपोऽसौ इति चेतोऽर्पणार्थं हि निगद्यते। इति।

एवमेवोक्तं **आध्यानाय प्रयोजनाभावात्** 3-3-15 इति सूत्रव्याख्याने श्रीमध्वाचार्यैः एवमुक्तम्- *आध्यानाय हि सर्वे गुणाः उच्यन्ते । प्रयोजनान्तराभावात् ।*

ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणात् ।
ज्ञातव्याश्चैव ध्यातव्याः गुणाः सर्वेऽप्यतो हरेः । इति ।

अपौरुषेयवाक्येषु द्वितीयप्रकारकानां वाक्यानां अन्यस्मात् आकृष्य तात्पर्यनिर्णायकलिङ्गैः विचार्य, नारायणपरत्वेन प्रतिपादयन् श्रीमध्वः, तानि वचनानि प्रतिगच्छति । आपाततः कर्मादिप्रतिपादकत्वेन प्रतीयमानां वाक्यानां विष्णुपरतया योजयति ।

तदुक्तं *परमात्मज्ञानार्थं कर्मादिकं वदतीति जैमिनिः* इति

मध्वभाष्ये 1-4-19 ।

द्वितीयेऽऽद्ये स्वाधमपुरुषप्रयुक्तानामपि वाक्यानां स्वसम्मत्या भूषयति श्रीमध्वः । तद्दृष्टं श्रीपण्डिताचार्यैः प्रयुक्तवायुस्तुतेः पूर्वोत्तरं **पान्तु अस्मानिति** स्वसम्मत्या तान् शब्दान् शोभयति । दुष्टपरवादीनां वाक्यानि प्रमाणबलेन निराकृत्य अग्निरिव सर्वेषां तेषां नाशं करोति -

निरसिष्यति पाषण्डासच्छास्त्राणि महामतिः ।
स्थापयिष्यति सद्धर्मान्सच्छास्त्रं व्याकरिष्यति ।

इति द्वैततत्त्वप्रदीपनोक्तस्कान्दवचनात् ज्ञेयम् ।

किं च, यः भीमसेनः, बभ्रूषु भगवद्गुणान् सदा स्वहृदयेषु धारकासु पाण्डवसेनासु मध्ये, अधि श्रेष्ठत्वेन, भूषन् न अलंकार इव, नम्रते औपदेशिक शब्दं कुर्वन् वर्तते । अयं च विषयः भारतकथायां युद्धसंदर्भे स्पष्टः । यश्च श्रीभीमसेनः, पत्नीः दुष्टप्रकृतीः कौरवसेनां, वृषेव श्रेष्ठवृषभ इव, रोरुवत् सिंहनादं कुर्वन् सेनां भंजयन् अभ्येति गच्छति । तन्वश्च सेनासु विद्यमानानां अल्पप्रज्ञाः अपि ओजायमानः तासु सेनाप्रजासु प्रकाशमानः सन् प्रोत्साहं कुर्वन् सन् । शुम्भते शोभते । दुर्गृभिः अन्यैः धारयितुं अशक्यगदाप्रहारैः, शृङ्गाः उत्तमत्वेन विद्यमानान् कल्यादिरूपान् दुर्योधनादीन् दविधाव कंपयामास । कथमिव भीम न भयंकर मृग इव । इति भीमसेनवृत्तान्तमपि सूचयति ।

किं च, यः हनुमान् बभ्रूषु श्रीरामकार्यकरणे आसक्तियुक्तासु वानरसेनासु मध्ये इति यावत्, अधि अधिकत्वेन वर्तमानः सन्, भूषन् न अलंकारः चूडामणिरिव नम्रते प्रतिपाद्यते । किं च पत्नीः पतनशीलाः स्वोत्तमानां द्रोहेण इति शेषः । सुग्रीवादीन् इति यावत् । वृषेव मृगश्रेष्ठ इव । रोरुवत् श्रीरामस्य गुणान्प्रतिपादयन् अभ्येति श्रीहरेः समीपं नयति । तन्वश्च अल्पासु भगवत्सेवार्थं प्राप्तासु वानरप्रजासु, ओजायमानः स्वोपदेशेन प्रकाशमानः शुम्भते शोभते । शृङ्गा अभिमानेन श्रेष्ठं मन्यमानान् रावणादीन् दुर्गृभिः केनापि धारयितुं अशक्यमुष्टिप्रहारैः, भीमो न भयंकरः इव, दविधाव कंपयामास । इदं सर्वं रामायणे स्पष्टम् ।

अयं रामो महाप्राज्ञः संप्राप्तो दृढविक्रमः ।<br>
लक्ष्मणेन सह भ्राता रामोऽयं सत्यविक्रमः ॥<br>
ईक्ष्वाकूणां कुले जातः रामो दशरथात्मजः ।<br>
धर्मनिगदितश्चैव पितृनिर्देशपारगः ॥<br>
राजसूयाश्वमेधैश्च वह्निर्येनाभितर्पितः ।<br>
दक्षिणाश्च तथोत्सृष्टाः गावः शतसहस्रशः ॥<br>
तपसा सत्यवाक्येन वसुधा येन पालिता ।

इत्यादि किष्किन्धाकाण्डे पञ्चमसर्गे विद्यमानानि वाक्यानि अस्मिन् विषये प्रमाणम् ।

न ऋग्वेदविनीतस्य नयजुर्वेदधारिणः ।<br>
न सामवेदविदुषः शक्यमेवं प्रभाषितम् ॥<br>
नूनं व्याकरणं कृत्स्नं अनेन बहुधा श्रुतम् ।

बहुव्याहरतानेन न किंचिदपशब्दितम् ॥
न मुखे नेत्रयोर्वापि ललाटे च भ्रुवोस्तथा ।
अन्येष्वपि गात्रेषु दोषः सविद्यते क्वचित् ॥

इति श्रीहरिवाक्यात् अस्य उत्तमत्वं ज्ञायते ।

स लब्धसंज्ञः प्रशशंस मारुतिं
त्वया समो नास्ति पुमान् हि कश्चित् ।
कः प्रापयेदन्य इमां दशां मां
इतीरितो मारुतिराह तं पुनः ॥

इति रावणवचनेनाऽपि ज्ञायते हनुमतः उत्तमत्वम् ।

ऊचे पुनर्जीवति किं हनुमान्
जीवाम सर्वेऽपि हि जीवमाने ।
तस्मिन्हते निह्रिताश्चैव सर्वे
इतीरितेस्मीत्यवदन् स मारुतिः ॥

इति जाम्बुवन्तोक्तवचनमपि प्रमाणम् । एवं रीत्या अनेकवाक्यानि अस्मिन् विषये प्रमाणानि भवन्तीति ग्रन्थगौरवभयात् विरम्यते ।

किं च ब्रभ्रुषु रमारूपासु, यः वायु, अधि श्रीहरे सर्वोत्तमत्वादीन् गुणान् चिन्तयन् भूषन् न अलंकारः इव, नम्रते नमस्कारं करोति । पत्नीः तदवरासु भारत्यादिस्त्रियः, वृषेव मृगश्रेष्ठ इव रोरुवन् श्रीहरेः गुणप्रतिपादकान् वेदान् उपदेशं कु-

र्वन्, अभ्येति श्रीनारायणस्य समीपे नयति । तन्वश्च अल्पाः स्त्रियः अपि, ओजायमानः तत्पतिषु स्थित्वा प्रकाशमानः सन् शुम्भते शोभते । शृङ्गा अभिमानग्रस्ताः दैत्यस्त्रियः, दुर्गृभिः सहितुं अशक्यैः क्लेशैः, भीमो न भयंकरः पुरुष इव, दविधाव तासां हृदयं कंपयामास ।

ननु अस्य वाक्यस्य अग्निपरत्वं अङ्गीकरणीयं । तथा अभियुक्तैः व्याख्यातम् । अस्य सूक्तस्य च अग्निपरत्वं उक्तं अनुक्रमणिकायां । तस्मान्नेदं वाक्यं भवदुक्तार्थपरमिति चेन्न । अस्य सूक्तस्य प्रथममन्त्रे **तमोहनम्** इति शब्दः श्रूयते । तत्र अग्निसाध्ययज्ञादिद्वारा ज्ञानविचारकत्वात् अज्ञाननाशपरत्वेन व्याख्यातम् । इमानि सकलवेदवाक्यानि संसारकारणीभूताज्ञाननिवारकपराण्येवेति वक्तव्यम् । तस्मात् यथा व्याख्यानेन संसारकारणाज्ञानस्य निवृत्तिः स्यात् तथैव व्याख्येयम् । न तु यत्किञ्चित् परम् संसारनिवृत्तिश्च ब्रह्मज्ञानेनैवेति निष्टंकितं तरति शोकमात्मवदित्यत्र । तस्मात् ब्रह्मज्ञानोपयोगित्वेन व्याख्येयम् । न तु केवलं अग्न्यादिपरत्वेन । इदमेव मनसि निधाय शांकरभाष्येऽपि - *ऋगादिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणात् जगतो जगज्जन्मादिकारणं ब्रह्माधिगम्यते इत्यभिप्रायः* इति अभिहितम् । ब्रह्माधिगमकत्वं साक्षादेवेति श्रीमध्वाचार्यः । अग्न्यादिदेवतानां ब्रह्मस्वरूपत्वादिति अद्वैतिनः । तदर्थमेव तत्त्वमस्यादिवाक्यानां अद्वैतपरत्वं वदन्ति । तन्निराकुर्वन्ति च द्वैतिनः । तदर्थस्तु मूलादेव ज्ञातुं शक्यते इति नेह विचार्यते ॥

अत्र दयानन्दसरस्वतीभाष्यकारः - ***प्रधानाप्रधानयोः प्र-***

***धाने कार्यसम्प्रत्ययः** इति व्याकरणमहाभाष्यप्रमाणात्, एवमेव सर्वेषां वेदानां ईश्वरे मुख्यार्थे मुख्यतात्पर्यमस्ति । तत् प्राप्तिप्रयोजना एव सर्वे उपदेशाः सन्ति* इति स्वभाष्ये सर्वेषां वेदानामपि परब्रह्मप्रतिपादकत्वमंगीकृतम् । तस्मादिदं वाक्यं अस्मदुक्तपरमेवेति ज्ञेयम् ।

7) स संस्तिरो विष्टिरः सं गृभायति
जानन्नेव जानतीर्नित्य आशये ।
पुनर्वर्धन्ते अपि यन्ति देव्यमन्यद्
वर्पः पित्रोः कृण्वते सचा । 1-140-7 ।

पदपाठः - सः । सम्ऽस्तिरः । विऽस्तिरः । सम् । गृभायति । जानन् । एव । जानतीः । नित्यः । आ । शये ॥ पुनः । वर्धन्ते । अपि । यन्ति । देव्यम् । अन्यत् । वर्पः । पित्रोः । कृण्वते । सचा ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

सः मध्वाचार्यः, संस्तिरः सम्यक् स्तीर्णान्, सध्रीचीन्वान्, विस्टिरः विषुचीनान्, पदार्थान् संगृभायति संगृण्हाति व्याप्नोतीत्यर्थः । तदुक्तं सुमध्वविजये *उच्चावचा येन समस्तचेष्टाः किं तत्र चित्रं चरितं निवेद्यम्* इति । जानतीः प्रजाः, नित्य आशये ज्ञानिवर्गे निरंतरं सम्यक्तया प्रसन्नरूपेण तिष्ठतीत्यर्थः । जाननैव सर्वदा एकप्रकारेणैव श्रीहरिं जानन् । तेषां अवतारेऽपि कदापि मिथ्याज्ञानादिकं नास्ति । **सर्वे विमोहितधियस्तव माययेमे । ब्रह्मादयस्तनुभृतो बहिरर्थभावाः** - 11-7-17 **भा॰** इत्यत्रोक्तमोहस्तु वायोः ब्रह्मपदवीनिमित्तकविशेषापरो-

क्षज्ञानाभावनिमित्तः । न तु परोक्षज्ञानाभाव निमित्तः । नापि ज्ञानतिरोधाननिमित्तः । यत् पित्रोः लक्ष्मीनारायणयोः वर्पः स्वरूपं, अन्यत् परस्परं जीवजडात्मकप्रपञ्चभिन्नम् । अत एव स चा मोक्षकालेऽपि सयुक्तमेव, न तु एकीभूतं, कृण्वते प्रतिपादयति । तस्मादेव, सर्वेणापिकारणेन, पुनः भूयः, वर्धन्ते ज्ञानादिगुणान् च वर्धयति । तेन देव्यम् ज्ञानादिगुणविशिष्टदेवसंबन्धिस्थानमपि मोक्षं यान्ति प्राप्नुवन्तीत्यर्थः ।

गोमञ्जरी

सः=मध्वः, संस्तिरः= सं पूर्वकात् स्तॄन् आच्छादने कप्रत्ययः । ऋत इत् धातोरितीत्वं संस्तिरः संक्षेपक्रियावान् । गतिसामान्यादिति हि न्यायः । बुद्ध्या बहुशाखासु व्याप्तोऽपि एकार्थद्रष्टा, विष्टिरः = वि पूर्वकात् स्तॄण्ञ् आच्छादने कप्रत्ययः । ऋत इत् धातोरितीत्वं विष्टिरः विस्तारक्रियावान् । वेदेकदेशव्याख्याताऽपि बहुशाखार्थदृक् । तच्च वाधूलशाखायामष्टरूपमुदाहृतमित्युक्तेः (1-1-6) ।

संगृभायति - वेदार्थान् सम्यक् धरति धारयति वा । संगृह्णातीति वा । गृभ आधाने । यः जानन्नेव अध्ययनात्प्रागपि बोद्धव्यं सर्वं ज्ञात्वैव । जानतीः ज्ञापयित्रीः वेदविद्याः नित्यः प्रतिबन्धविहीनः सन् । आशये - सम्यक् शिश्ये - शीङ् - लट् । विचारयतीत्यर्थः लोपास्त आत्मनेपदेषु इति तलोपे अयादेशः । यद्वा अहं जानन्नेति वेदयित्रीः विद्याः आशये अभिप्रैमि, विचारयामि तत्रैव मग्नो भवामीति यः वेदार्थान् संगृह्णाति सः मध्वः संस्तिरः विष्टिरश्च । *ऋजुपुङ्गवस्य परिजानतः स्वयं सकलं तदप्यलमनन्तजन्मसु* । इत्युक्तेः ।

भवतोरितः सततसवनामृते मम
मंक्षुतुमस्तु भगवन्ननुग्रहः ।
अधिगता ननु जात्वपि न श्रुताः
प्रतिभया श्रुतयः शतशोऽमुना ॥ 3-54 ॥

ताः = यासु मध्वः निमग्नः वेदविद्याः पुनरपि वर्धन्ते =दुर्व्याख्यानागमनात् प्राक्यथा आसन् तथा श्रीमध्वव्याख्यानान्तरं वर्धन्ते । देव्यं = क्रीडादिगुणवत्वेन स्तुत्यं श्रीहरिं प्रति । याति =प्रतिपादकतया गच्छन्ति । सचा - एतद्व्याख्यानेन सह - सहिताः वायुनासहैव ताः विद्याः पित्रोः श्रीमध्वपित्रोः रमानारायणयोः अन्यत् वर्पः वर्परूपं=बिंबरूपं, कृण्वते=अपरोक्षज्ञानेन प्रकटीकुर्वन्ति इत्यर्थः । अत्र जानतीः इति पदस्य ज्वालापरत्वं अंगीकृतम् । तत् न पदवाच्यम् भवति । अपि तु विद्यापरत्वे तु वाच्यम् भवति । अवबोधनार्थक ज्ञा धातोः रूपमेतत् ।

8) तमग्रुवः केशिनीः सं हि रेभिर
ऊर्ध्वास्तस्थुर्मम्रुषीः प्रायवे पुनः ।
तासां जरां प्रमुञ्चन्नेति नानददसुं
परं जनयञ्जीवमस्तृतम् ॥1-140-8।

पदपाठः - तम् । अग्रुवः । केशिनीः । सम् । हि । रेभिरे । ऊर्ध्वाः । तस्थुः । मम्रुषीः । प्र । आयवे । पुनरिति ॥ तासाम् । जराम् । प्रऽमुञ्चन् । एति । नानदत् । असुम् । परम् । जनयन् । जीवम् । अस्तृतम् ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

अग्रुवः=अः परमात्मा, अ इति ब्रह्मेति श्रुतेः । अकारो वासुदेवः स्यादिति वचनाच्च । तेन गीर्यंते उद्गीर्यन्ते, गिरंति प्रतिपादयन्तीति वा, सर्गाद्यकाले नारायणेन चतुर्मुखं प्रति उपदिष्यमानाः, नारायणप्रतिपादुकाश्च, केशिनीः प्रशस्ताः केवलब्रह्मस्वरूपप्रतिपादुकाः केषाः शिरोऽवयवरूपा उपनिषद्भागाः यासां ताः, श्रुतयः दुर्वादिभिरितस्ततो विक्षिप्ततया मम्रुषीः मृत प्राया इव स्थिताः, सत्यः, तं परमं असुं मुख्यप्राणावतारं मध्वाचार्यं सं रेभिरे हि स्वीकर्तुं उपक्रमं कृतवन्त्यः । अतः प्रायवे अधिकारिणां प्रकृष्टज्ञानोत्पादनाय, ऊर्ध्वाः तस्थुः अनुकूलाः बभूवुः। पुनः तासां श्रुतीनां, जरां अनित्यतां प्रमुञ्चन् दूषयित्वा,अपौरुषेयता व्युत्पादनेन शश्वदेकप्रकारता रूपां अनादिनित्यतां समर्थयन्, नानदत् महाव्याख्याननादं कुर्वन्, तेन अधिकारिणां अस्तृतम् लिङ्गदेहरूपाच्छादनविकलं, जनयन् कुर्वन्, जीवं सात्विकं योग्यजीवं अधिकारिणं, एति नारायणं प्रतीति शेषः । **भूमनिन्दाप्रशंसासु भवंति मतुपादयः** इति वचनात् **केशिनीः** इति साधु । गत्यर्थानां ज्ञानार्थत्वात् प्र प्रकृष्टेन अय गतौ इति धातोः रुप प्रायवे इति ।

गोमञ्जरी

अग्रुवः= श्रीमध्वकृतयथार्थव्याख्यानविशिष्टतया अग्रेसराः वेदविद्याः अग्रुशब्द - प्रथमा बहुवचनं-छान्दसं उत्वं, तं-व्याख्यातारं-श्रीमध्वं, तथा केशिनीः- यथाश्रुतरीत्याऽपि विष्णौ प्रसिद्धा श्रुतीः तदभिमानिनीर्वा । कः=चतुर्मुखो ब्रह्मा त-

दीशः=तन्नियामकः श्रीमन्नारायणः तत्प्रतिपादकतया तद्गत्यः अत इनिठनौ- ङीप् ताः ।संरेभिरे=परिरेभिरे आलिलिङ्गिरे, सं पूर्वकात् रभ-राभस्ये धातो लिटि हिना व्यवधानात् समिह परिदेश्यः अथवा केशिनीः=स्वरिणीः केशशूलिन्य इत्युक्तेः , निरङ्कुशं अन्यार्थान् प्रतिपादयित्रीः श्रुतीः प्रति । संरेभिरे=चुकुपुः, संपूर्वस्य रभतेः क्रोधार्थकत्वात् । अस्मिन्नर्थे तं - श्रीमध्वं प्रत्यग्रेस्थिताः मध्वस्य पुरतः स्थिताः तद्व्याख्यानविशिष्टः इत्यर्थः । ताः मम्रुषीः = आसन्नमृतयः मृतवत् । स्थिताः इति वा ।अपव्याख्यानैः परित्यक्तस्वमुख्यार्थाः श्रुतीः । पुनः प्रायवे= ताः प्रत्यागच्छते अस्मै, ऊर्ध्वाः = प्रार्थनादिमुद्रा विशिष्टा सत्यः, तस्थुः = मूर्धनि कृताञ्जलयो वा ।तासां प्रायो मृतानां अन्यपराणां विद्यानां, जरां=अन्यवाचकत्वरूपां जीर्णतां, प्रमुञ्चन्=प्रकर्षेण परिहरन् सः मध्वः, नानदत्=श्रीहरिनामानि उच्चैरुच्चरन्, एति= अध्येतॄन्, अध्यापकांश्च प्रतिगच्छति । परं=पूर्ण सार्थक्येन, असुं=प्राणं, जनयन्=उत्पादयन्, जीवं=मुमुक्षुं, अस्तृतं=अविच्छिन्नं अविच्छिन्नं साधनं स्वरूपप्रतिबन्धैः जनयन् भवति ।

9) अधीवासं परि मातू रिहन्नह तुविग्रेभिः
   सत्वभिर्याति वि ज्रयः ।
वयो दधत्पद्वते रेरिहत्सदानु
   श्येनी सचते वर्तनीरह ।1-140-9।

पदपाठः - अधीवासम् । परि । मातुः । रिहन् । अह । तुविऽग्रेभिः । सत्वऽभिः । याति । वि । ज्रयः ॥ वयः ।

दधत् । पत्ऽवते । रेरिहत् । सदा । अनु । श्येनी । सचते । वर्तनिः । अह ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

मध्वाचार्यः मातुः महालक्ष्म्याः अधीवासं अभिमन्यमानं वेदं वेदाभिमानित्वात् तस्याः, परि सर्वतः, रिहन् लिहन् आस्वादयन्, तदुपरि भाष्यादिग्रन्थनिर्माणेन तात्पर्यं व्यञ्जयन्तीत्यर्थः । तुविग्रेभिः **तुवीति बहुनामासु पठितम्** (निघं 3-1-2), बहुत्वस्य पूर्णवाचित्वात्, पूर्णं परमात्मानं स्तुवद्भिः, सत्वभिः सात्विकैरधिकारिभिः शिष्यैः सह वि याति सर्वत्र दिग्विजयार्थं गच्छतीति भावः । कीदृशः सः वयः अन्नं आनन्दमयाधिकरणानुसारेण तस्य विष्णुवाचित्वात् विष्णुं, सदा सर्वदा रेरिहत् आस्वादयन्, सदा तदीयध्यानादिकं कुर्वन् पद्वते ज्ञानिने, तद्योग्याय, शिष्याय, दधत् उपदिशन्नित्यर्थः । अनु पश्चात्, यस्मिन्विमुखे सतीति यावत् । श्येनी वर्तनिः मलिनो मार्गः संचते संबन्ध्यत इत्यर्थः । अह इति एतत्प्रसिद्धौ ।

गोमञ्जरी

परि मातुः= परि सकलं मातुः प्रमातुः यथार्थं ज्ञानवतः=सर्वज्ञस्य श्रीहरेः तद्रूपस्य वेदव्यासस्य वा, अधीवासं=विशेषावासस्थानं-बदरिकाश्रमं, रिहन्=गच्छन् रिह हिंसागत्योः, लिहन् वा - तन्माधुर्यं सुखमनुभवन्, अह- तत्समीपं - श्रीवेदव्यासस्य समीपं, तुविग्रेभिः= तुविं बहु गृण्हन्ति इति तुविग्राः ग्रह धातोः डः । तैः । बहुज्ञैः । सत्वभिः= सात्विकप्रकृतिभिः ऋषिभिः सह । ज्रयः= जयो

यथाभवति तथा, वियाति= विशेषेण भक्त्यादियुतः सन् प्राप्नोति । यद्वा परिमातुः=सर्वज्ञस्य श्रीहरेः अधीवासं=मुख्याधिष्ठानभूतं यम् एनं=श्रीमध्वं, विजयः=विजयः उत्कर्षः, तुविग्रेभिः=बहुज्ञैः, सत्वभिः=सात्त्विकैः सह, रिहन्=तच्चारित्र्य माधुर्यं अनुभवन्, याति=गच्छति, तच्चरितकीर्तनादिना, वर्तनिः=शास्त्रानुसारेण सत्कर्मधर्मं च अनुवर्तयन् एषः, श्येनी=भारतभूमिं सर्वत्र सञ्चरन्, सदा रेरिहत्=सर्वदा हरिरूपमनुध्यायन् सन् । पद्वते=स्वपादसेवां विदधते सज्जनाय अन्नं तृप्तिदं, वयः= भगवद्ज्ञानं - वी गतौ क्तसुन्, दधत्=ददत्, अनुसचते=अनुसेवते सर्वान्तर्यामिणं हरिमिति शेषः । अह-आश्चर्यमेतत् । षचि (सच्) सेचने सेवने च इति धातुः ।

10) अस्माकमग्ने मघवत्सु दीदिह्यध  
श्वसीवान्वृषभो दमूनाः ।  
अवास्या शिशुमतीरदीदेः  
वर्मेव युत्सु परिजर्भुराणः ॥1-140-10॥

पदपाठः - अस्माकम् । अग्ने । मघवत्ऽसु । दीदिहि । अध । श्वसीवान् । वृषभः । दमूनाः ॥ अवऽ अस्य । शिशुऽमतीः । अदीदेः । वर्मऽ इव । युत्ऽसु । परिऽजर्भुराणः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे अग्ने श्रीमध्वाचार्य, त्वं, अस्माकं मघवत्सु अस्मत्सम्बन्धिषु धनवत्सु भण्डारेषु, पारलौकिकधनवत्सु अंतःकरणेषु वा दीदीहि दीप्यस्व जागरुकास्तिष्टेत्यर्थः । अध अनन्त-

रं, श्वसीवान् श्वसनं श्वसिः, तद्वान् अन्येष्वपि दृश्यत इति दीर्घः । जगत्प्राणनकर्ता त्वं, अस्माकं वृषभः अभीष्टवर्षनकर्ता, भवेति शेषः । त्वं दमूनाः अदान्तानां दमनकर्ता भवेति शेषः । किं चास्माकं शिशुमतीः शैशवयुक्तमतीः, कोमलकंटकायमानानि ज्ञानानि, अवास्या निरस्य अदीदेः उद्दीपय अस्मानिति शेषः । युत्सु युद्धेषु, वर्मेव प्रतिभटस्य कवचमिव, परिजर्भुराणः अतिशयेन हरन् विदारयन् । यथा कश्चित् योद्धा संग्रामे प्रतियोद्धुः कवचं विदारयत्येवमेवमस्माकमावरणकारणीभूतं लिङ्गदेहं, मिथ्याज्ञानं विदारय इति भावः ।

## गोमञ्जरी

हे अग्ने= जगन्नियामक, स्वयं न गच्छतीति अगं=जगत् तन्नयति भगवन्तं प्रति इति अग्निः - तत्संबुद्धि । यतः त्वं । श्वसीवान्=ईश्वरेतरानायत्ततया स्वतःप्राणवान् श्वसनवान्, वृषभः=श्रेष्ठः जीवोत्तमः, अतिशयधैर्यवान्, दमूनाः= दं इन्द्रियं दमयन्ति जीवान् इति तदभिमानिनं वा । ऊनयतीति दमूनाः - ऊन् धातोः कर्तरि क्सुन्, अध=अथ=अतः, मघवत्सु= ज्ञानवैराग्यभक्त्यादिमत्सु सात्विकेषु, मखवत्सुवा सर्वं कर्म भगवत्पूजात्वेनाचरत्सु, अस्माकं सत्वं, दीदिहि=विशेषतो देहि-ददाते यङ्लुक् छान्दसं रूपं (लोटि), हे अग्ने त्वं वर्मेव=रक्षककवचमिव, युत्सु=युद्धेषु, वादादिकथारूपेषु वा, परिजर्भुराणः = परितः तापकरान्, उपद्रव कृतो वा अणति निगृह्णातीति । परितः स्थित्वा दुःखदायिनो निगृहणानः । भुर् तापे यङ्लुकि - क्विप् जर्भुराः = तापकारिणः, शिशुमती=शिशुवदज्ञानपराभूता प्रजाः, अवास्य=शास्त्राणि उपन्यस्य, अदीदेः=उद्दीपय ।

11) इदमग्ने सुधितं दुर्धितादधि
प्रियादु चिन्मन्मनः प्रेयो अस्तु ते ।
यत्ते शुक्रं तन्वोरोचते शुचि
तेनास्मभ्यं वनसे रत्नमात्वम् ॥ 1-140-11 ॥

पदपाठः - इदम् । अग्ने । सुऽधितम् । दुःऽधितात् । अधि । प्रियात् । ॐ इति । चित् । मन्मनः । प्रेयः । अस्तु । ते ॥ यत् । ते । शुक्रम् । तन्वः । रोचते । शुचि । तेन । अस्मभ्यम् । वनसे । रत्नम् । आ । त्वम् ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे अग्ने मुख्यप्राण, इदम् अस्माभिः क्रियमाणस्तोत्रं, ते तव, मन्मनः मनसः, मनो नामसु मन्मनशब्दस्य पाठात् प्रियात् उ चित् प्रियादपि, अधि अधिकं यथा स्यात् तथा प्रेयः अतिशयेन रुचितमस्तु, सुधितं शोभनां धियं तनोतीति, एतादृशं अथ च दुर्धितात् । किंच यत् ते तव शुक्रं शुक्लं पर-शुक्लत्रयान्तर्गतं अत एव शुचि अज्ञानादिकलङ्कास्पृष्टं मूलरूपं रोचते दीप्यते । याश्च तन्वः तनवः हनुमद्भीमध्वावताराः, अस्मभ्यं रत्नम् रमणीयं मोक्षादिपुरुषार्थं, परमात्मानं वा, आ सम्यक्, वनसे ददासि ॥

गोमञ्जरी

हे अग्ने= *अग्र्यत्वात् अग्निनामासौ* इति वचनात् सर्वदेव-पूज्यः । दुर्धितात् दुष्टजनकृतात् स्तोत्रात्, सुधितं सज्जनकृतं, इदं स्तोत्रं, ते तव, प्रियात् ऊ अपि उ शब्दो अवधारणे। चिद्

अप्यर्थः। अत्यन्तप्रियादपि प्रियः अत्यन्तप्रियोऽस्तु वर्तताम्। **वायुः वै क्षेपिष्टा देवता** इति वचनात्। सर्वैः पूजितत्वेऽपि, अन्य जनैः कृतात् स्तोत्रात् भगवद्भक्तैः कृतं स्तोत्रं तव अत्यन्तप्रियम् भवति । **अभक्तोदाहृतं नैव फलदातृ भविष्यति** (**भा० ता०** 6-2-14) इति वचनात् तव भक्तैः पण्डिताचार्यप्रभृतिभिः कृतानि स्तोत्राणि तव प्रियं भवति । तस्मादेव तत्स्तोत्रं श्रुत्वा *पांतु अस्मानिति* श्लोकद्वयेन अनुमोदितं । ते तव तन्वः शरीरस्य अवतारस्य, शुचि निर्मलं शुक्रं तेजोमयं यत् यस्मात् रोचते प्रकाशते । तेन तस्मात् कारणात् हेतुना त्वं अस्मभ्यं अस्मदादीन् उद्दिश्य रत्नं आनन्दम् आ वनसे वितरसि ।वन संभक्तौ इति धातोः व्यत्ययेन आत्मनेपदित्वम् ।

यद्वा

हे अग्ने=देवताश्रेष्ठ - देवपूज्य, अग्र्यत्वादग्निनामन् श्रीमध्व, पूर्वं दुर्धितात्= दुर्विद्याधारिणः= दुःपूर्वकात् धि धारणे कर्तरि क्तः, दुष्टं यथा भवति तथा धृतं धारि मनः तस्मात्, अधि = अनन्तरं, सुधितं=सुष्ठु धृतं=शोभनभवद्व्याख्यानादि दद्यत्, इदं प्रसिद्धं पूर्वं कलुषितं इदं भवद्व्याख्यानाधारि अत शुद्धं, मन्मनः=मम मनः, प्रियात् उचित = विशेषप्रियादपि, प्रेयः=अधिकप्रियतमं, ते=तव, अस्तु= तेन तव सन्निहितो भवेति यावत्, यत्=यस्मात् कारणात्, ते तव, तन्वः=प्रकृतमध्वावतारस्य, शुचि=निर्मलं, शुक्रं=तेजः=व्याख्यानरूपं कर्म वा, अस्मभ्यं=रोचते=अस्माकं इष्टं भवति, तेन=व्याख्यानादि कर्मणा, रत्नं=अमौल्यरत्नसदृशं श्रीमन्नारायणं रतिं नयतीति रत्नं मोक्षप्रदं मुकुन्दं, त्वं,

आवनसे=सम्यक् सेवसे - शब्दैः स्तवीषि वा । वन संभक्तौ शब्दे च । यदिदं ते तृतीयावतारस्य कर्म तदस्माकं अधिकेष्टं येन कर्मणा मुकुन्दं त्वं सेवसे अतः कृपया पूर्वं दुर्व्याख्यानैः, कलुषितमपि इदानीं तव यथार्थव्याख्यानेन पूतं अस्मन्मनः तव प्रियादपि, अन्यस्तावमनसः अपेक्षया अधिकं प्रियं भवति । त्वमत्र अस्मन्मनसि सन्निधत्स्वेत्यर्थः ।

12) रथाय नावमुत नो गृहाय
नित्यारित्रां पद्वतीं रास्यग्ने ।
अस्माकं वीरां उत नो मघोनो
जनां च या पारयच्छर्म या च ॥1-140-12॥

पदपाठः - रथाय । नावम् । उत । नः । गृहाय । नित्यऽअरित्राम् । पत्ऽवतीम् । रासि । अग्ने ॥ अस्माकं । वीरान् । उत । नः । मघोनः । जनान् । च । या । पारयात् । शर्म । या । च ॥

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे अग्ने, अस्माकं गृहाय गृहोपमशरीररुपाय, रथाय पटुकरणविशिष्टाय, *तदयं प्राणोऽधितिष्टतीति* श्रुतिः । त्वदनुग्रहविषयभूताय सज्जनसमूहायेति यावत् । संसारसमुद्रं तारयितुं पद्वतीं ज्ञानवतीं, गत्यर्थस्य पद्यतेः, ज्ञानार्थत्वात् प्रशंसायां मतुपः पूर्णार्थत्वात्, पूर्णप्रज्ञरूपाम् । अत एव नित्यारित्रां नित्यं परमात्मरूपं अरित्रं यस्यास्ताम् । नावं रासि ददासि, या नौः अस्माकं अस्मत्संबन्धिनः वीरान् प्रतिवादिनिराकरणसमर्थान् पुत्रान् शिष्यांश्च । उत, च नः अस्मत्संबन्धिनो मघोनः

ज्ञानादिसंबन्धिनो मित्रभूताश्च । जनान् पारयात् संसारपारं नयेत् । न केवलं सांसारिकदुःखनिरासमात्रसमर्थो किन्तु या नौः शर्म अनन्तानन्दाविर्भावमोक्षलक्षणं च कुर्यादित्यर्थः ।

## गोमञ्जरी

हे अग्ने=अज्ञाननाशक श्रीमध्व, गृहाय सर्वैः आपेक्षिताय सुखस्य आश्रयभूताय, रथाय मोक्षाय, नित्यारित्रां नित्यं अरिभ्य त्रायते, पद्वतीं=दातृत्वगुणोपेतां, ज्ञानवतीं सर्वज्ञां इति यावत्, नावं=सर्वप्रेरयित्रीं नारायणरूपां देवतां, नः=अस्माकं, रासि-देहि। रादाने लट्, **बन्धको भवपाशेन भवपाशात् च मोचकः** इति वचनात् नारायणस्यैव मुख्यसाधनरूपत्वं ज्ञायते ।तस्य नित्यसिद्धत्वेन कथं साधनत्वमिति चेत्, साधनं द्विविधं सिद्धं साध्यं चेति । सिद्धं सव्यापारीकरणीयम् । यथा कुठारादि ।सिद्धं च साधनं भगवानिति ज्ञानिना सव्यापारीकरणीयः । व्यापारश्च प्रसन्नता एव । निगडादिमोचकेषु राजादीषु तथा दर्शनात् । *यस्य प्रसादात्* इति श्रुतेः । णुद प्रेरणे इत्यस्मात् धातोः औणादिके डौ प्रत्यये द्वितीया विभक्तौ नावमिति रूपम् ।अभस्यापि डित्वसामर्थ्यात् टिलोपे । नुद्यते अनया इति व्युत्पत्या श्री हरेः प्रसादेन संसारस्य निवृत्तिः भवतीति नौशब्दः श्रीहरिवाची भवति । **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** इति सूत्रात् (1-4-24) स्त्रीलिङ्गशब्दाः अपि श्रीहरिवाचिनः संभवतीति ज्ञेयम् । या नौः श्रीहरिः, अस्माकं अस्मद्संबन्धिनः, मघोनः ज्ञानभक्त्यादिसंपन्नान्, वीरान् पुत्रादिसन्तानान्, उत अपि, नः=अस्मान् तथा जनान्=अस्माकं सात्विकान् जीवान्, या नौः पारयात् तारयेत्, या च नौः अस्माकं अस्मदीयानां सर्वेषां निरतिशय

आनन्दं प्रापयेत् ।

अनेन वाक्येन श्रीहरिप्रसादस्यैव मोक्षकारणत्वं ज्ञायते । केवल ज्ञानेन मुक्तिः भवतीति मतमपि अनेन निराकृतं भवति । अनेन सूत्रोक्तस्य अतश्शब्दस्यार्थ उक्तः भवति । तत्त्वविद्यायाः नावत्मंगीकृत्यापि अर्थः वर्णयितुं शक्यते ।

यद्वा ।

संसारसिन्धुमतिदुस्तरमुद्दिधीर्षोः
नान्यः प्लवो भगवतः पुरुषोत्तमस्य ॥
लीलाकथारसनिषेवणमन्तरेण ।
पुंसौ भवेद्विविधदुःखदवार्धितस्य ॥

वीरात्=तदेकनिष्ठान् वीर्यवतः, मघोनः=तज्ज्ञान, तद्भक्त्यादि संपद्भरितान् अत एव मुक्तिं प्रति अधिकारिणः, नः=अस्मान्, अस्माकं जनान् उत=अस्मत्सहकारिणः सात्विकानपि, या=नौः, पारयात्=संसारात्पारं नयेत् तारयेत्, या=नौः, शर्म च=निरतिशयसुखं च, पारयात्=प्रापयेत् । सज्जनानां हि अयं स्वभावः यत्स्वीयानामपि विशिष्टं फलं प्रार्थयन्ति । कृतज्ञत्वात् ।

13) अभी नो अग्न उक्थमिज्जुगुर्याः
द्यावाक्षामा सिन्धवश्च स्वगूर्ताः ।
गव्यं यव्यं यन्तो दीर्घाहेषं
वरमरुण्यो वरन्त । 1-140-13 ।

ज्ञानादिसंबन्धिनो मित्रभूताश्च । जनान् पारयात् संसारपारं नयेत् । न केवलं सांसारिकदुःखनिरासमात्रसमर्था किन्तु या नौः शर्म अनन्तानन्दाविर्भावमोक्षलक्षणं च कुर्यादित्यर्थः ।

## गोमञ्जरी

हे अग्ने=अज्ञाननाशक श्रीमध्व, गृहाय सर्वैः आपेक्षिताय सुखस्य आश्रयभूताय, रथाय मोक्षाय, नित्यारित्रां नित्यं अरिभ्य त्रायते, पद्वतीं=दातृत्वगुणोपेतां, ज्ञानवतीं सर्वज्ञां इति यावत्, नावं=सर्वप्रेरयित्रीं नारायणरूपां देवतां, नः=अस्माकं, रासि-देहि। रादाने लट्, **बन्धको भवपाशेन भवपाशात् च मोचकः** इति वचनात् नारायणस्यैव मुख्यसाधनरूपत्वं ज्ञायते । तस्य नित्यसिद्धत्वेन कथं साधनत्वमिति चेत्, साधनं द्विविधं सिद्धं साध्यं चेति । सिद्धं सव्यापारीकरणीयम् । यथा कुठारादि । सिद्धं च साधनं भगवानिति ज्ञानिना सव्यापारीकरणीयः । व्यापारश्च प्रसन्नता एव । निगडादिमोचकेषु राजादीषु तथा दर्शनात् । *यस्य प्रसादात्* इति श्रुतेः । णुद प्रेरणे इत्यस्मात् धातोः औणादिके डौ प्रत्यये द्वितीया विभक्तौ नावमिति रूपम् । अभस्यापि डित्वसामर्थ्यात् टिलोपे । नुद्यते अनया इति व्युत्पत्या श्री हरेः प्रसादेन संसारस्य निवृत्तिः भवतीति नौशब्दः श्रीहरिवाची भवति । **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** इति सूत्रात् (1-4-24) स्त्रीलिङ्गशब्दाः अपि श्रीहरिवाचिनः संभवतीति ज्ञेयम् । या नौः श्रीहरिः, अस्माकं अस्मद्संबन्धिनः, मघोनः ज्ञानभक्त्यादिसंपन्नान्, वीरान् पुत्रादिसन्तानान्, उत अपि, नः=अस्मान् तथा जनान्=अस्माकं सात्विकान् जीवान्, या नौः पारयात् तारयेत्, या च नौः अस्माकं अस्मदीयानां सर्वेषां निरतिशय

आनन्दं प्रापयेत् ।

अनेन वाक्येन श्रीहरिप्रसादस्यैव मोक्षकारणत्वं ज्ञायते । केवल ज्ञानेन मुक्तिः भवतीति मतमपि अनेन निराकृतं भवति । अनेन सूत्रोक्तस्य अतश्शब्दस्यार्थ उक्तः भवति । तत्त्वविद्यायाः नावत्मंगीकृत्यापि अर्थः वर्णयितुं शक्यते ।

यद्वा ।

संसारसिन्धुमतिदुस्तरमुद्दिधीर्षोः
नान्यः प्लवो भगवतः पुरुषोत्तमस्य ॥
लीलाकथारसनिषेवणमन्तरेण ।
पुंसौ भवेद्विविधदुःखदवार्धितस्य ॥

वीरात्=तदेकनिष्ठान् वीर्यवतः, मघोनः=तज्ज्ञान, तज्ज्ञत्यादि संपद्भरितान् अत एव मुक्तिं प्रति अधिकारिणः, नः=अस्मान्, अस्माकं जनान् उत=अस्मत्सहकारिणः सात्विकानपि, या=नौः, पारयात्=संसारात्पारं नयेत् तारयेत्, या=नौः, शर्म च=निरतिशयसुखं च, पारयात्=प्रापयेत् । सज्जनानां हि अयं स्वभावः यत्स्वीयानामपि विशिष्टं फलं प्रार्थयन्ति । कृतज्ञत्वात् ।

13) अभी नो अग्न उक्थमिज्जुगुर्याः
द्यावाक्षामा सिन्धवश्च स्वगूर्ताः ।
गव्यं यव्यं यन्तो दीर्घाहेषं
वरमरुण्यो वरन्त । 1-140-13 ।

पदपाठः - अभि । नः । अग्ने । उक्थम् । इत् । जुगुर्याः । द्यावाक्षामा । सिन्धवः । च । स्वऽगूर्ताः ॥ गव्यम् । यव्यम् । यन्तः । दीर्घा । अहा । इषम् । वरम् । अरुण्यः । वरन्त ॥

## गोमञ्जरी

हे अग्ने= हे वेदैः विष्णुं प्रतिपादयन् अगं नारायणं अग्र्यत्वात् प्रतिवेदान् नयति तदर्थतया व्याख्यातीति - यद्वा अगैः=शश्वदेकप्रकारैः वेदैः विष्णुं नयतीति प्रतिपादयतीति अग्निः । नः=अस्मभ्यं, अस्मत्कृते, उक्थं=सर्वोत्तमं श्रीहरिं, इत=एव, अभि=परिपूर्णगुणवत्तया , जुगुर्याः=स्वतः ब्रूहि । गॄ- व्यत्ययेन श्लुः छान्दस उः, *एनं दूनं दीनं अनाथं उद्धरेति विज्ञापनकर्तृणां* इत्यभियुक्तोक्तेः । *उन्नतप्रार्थिताशेषसंसाधकं* इति स्वयं उक्तेः । द्यावाक्षामा=द्यावापृथिवीत्वेन अध्यवस्यानानि वेदब्रह्मसूत्राणि । सातिशयं उपमानेनैव उपमेयस्य निगरणं ॥ अव्याकृताकाशवत् वेदानां व्याप्तत्वात् पृथिवीवत् ब्रह्मसूत्राणां सर्वविद्याधारत्वात् । स्वगूर्ताः = स्वयं अन्यानपेक्षं निरंतरं प्रवणहन्त्यः, आरुण्यः=अरुणो रागः = भक्तिः तत्प्रधानाः सिन्धवः=नदीत्वेनाध्यवस्यमानाः श्रीमदाचार्याणां उपन्यासभारत्यः व्याख्याः वा, गव्यं=गोभिः प्राप्तुं योग्यं वेदप्रतिपाद्यं, यव्यं=ध्येयं श्रीहरिं, यन्तः=यन्त्यः निरूपयन्त्यः सत्यः, दीर्घाहा=दीर्घानि अहानि यथा भवति तथा सन्ततं, वरं=उत्तमं वेदशास्त्राद्यनुसारिणं, ईषं=इष्टं प्रार्थनीयं ऐहिकं पारत्रिकं सुखं ज्ञानादि च भाग्यं, वरन्त=वरन्तु दिशन्तु ।

# बळित्थासूक्तव्याख्या

14) बळित्था तद्वपुषे धायि दर्शतं
देवस्य भर्गः सहसो यतो जनि ।
यदीमुपह्वरते साधते मतिः
ऋतस्य धेना अनयंत सस्रुतः । 1-141-1 ।

पदपाठः - बट् । इत्था । तत् । वपुषे । धायि । दर्शतम् । देवस्य । भर्गः । सहसः । यतः । जनि ॥ यत् । ईम् । उप । ह्वरते । साधते । मतिः । ऋतस्य । धेनाः । अनयन्त । सऽस्रुतः ॥

अत्रश्रीवादिराजतीर्थाः - भारततात्पर्यनिर्णयभावप्रकाशिकायां

हरेः सर्वोत्तमत्वे वायोः प्रधानाङ्गत्वे च स्मृतीरुक्त्वा अधुना श्रुतिं च पठति-बळित्थेति । यतः यस्मान्नारायणात् अजनि=स्वयमजनि तस्य देवस्य प्रीत्यर्थं तदाज्ञया च । *द्रविणं तरः सहो बलं शौर्याणीत्य*नुशासनात् सहसः =बलरूपस्य अत एव **सह मर्षण** इति धातोः *य एवायं मुख्यप्राणः तमुद्रीथमुपासंचक्रिरे तं हासुराः ऋत्वा विदध्वसुः यथाश्मानमाखणमृत्वा विदध्वंसत* इत्येवं छन्दोगोपनिषद्वाक्याच्च कल्याद्यसुरकृतोपद्रवसहनशीलस्य आशुगत्वात् वेगवतो वा मुख्यप्राणस्य, बट्=बलात्मकं, दर्शतं=ज्ञानेन ततं भर्गः=भरति श्वासरूपेण जगत् बिभर्ति *स एनान्ब्रह्म गमयतीति* श्रुतेः परं ब्रह्म गमयतीति चेति भर्गशब्दवाच्यम् *अदिभूभ्यां डुतजि*त्यादाविव धातुद्वयादौणादिकोऽसुन् प्रत्ययः, तद्वायोर्मूलरूपं अनेन बट् बलात्मकं *अयपय गताविति* धातोः अय ज्ञानात्मकं चेति, वबयोरभेदात् विशेषणद्वयेन वायुशब्दार्थः उक्तो भवति

। इत्था=इत्थमेव मूलरूपे यथा बलज्ञानादिकं तथैव वपुषे अवताराय, धायि=अधायीत्यर्थः ॥ तत्र प्रथमावतारस्य नाम व्यापारं चाह-यदिति । यत्प्रथमं वपुः तत् मति=मतिशब्द-वाच्यम् । *हन हिंसागत्योरिति* धातोः गत्यर्थानां ज्ञानार्थत्वात् मतिशब्दवाच्यमिति भावः । हनवानिति वक्तव्ये सर्वदा ज्ञा-नशीलत्वद्योतनाय उद्वये कृते हनूमानिति भवति । ऋतस्य= *ऋ गताविति* धातोः ज्ञानात्मकस्य रामस्य, उप=समीपे, ह्वरते=क्रीडते, *ह्वर कौटिल्य* इति धातोः ह्वरते भक्तिभरे-ण नम्रीभूय तिष्ठतीति वा । ईं इत्थमेव समीपे सेवाकरणवत् साधते दूरेऽपि रामकार्याणि साधयते । तत् कार्यं किमित्यतः लेशतः कार्याणि दर्शयति-धेना इति । स्रुत् अमृतस्रवणं तेन युताः सस्रुतः ऋतस्य=सत्यवचनस्य रामस्य धेनाः *धिङ् पोषण* इति धातोः सुरकार्यपोषकत्वात् धेनाशब्दवाच्याः वाचः अनयन्त । येन हनुमता सेनां प्रत्यनयन्त सीतां प्रत्यनयन्त तत्प्रथमं वपुरिति पूर्वेणान्वयः ॥ 2-152 ॥

अत्रश्रीरघूत्तमतीर्थाः - बृहदारण्यकभावबोधे

ततश्चायंसूक्तार्थः । सहसः सहोरूपस्य देवस्य क्रीडादिगुण-संपन्नस्य वायोः मूलरूपं बट् बलात्मकं दर्शतं ज्ञानरूपं भर्गो जगद्भरणगमनगुणं तत् इत्था इत्थंभूतमेव वपुषे रूपत्रयावता-राय यतो यस्माद्भगवता धायि अधायि निहितं भगवता प्रेरि-तमित्यर्थः तस्माद जनि यद्वा यतोवायोर्भगवानजनिव्यक्तौभू-त्तस्माद्वायोरितिसंबंधः । प्रथमावतारस्वरूपमाह । यदीमिति । यदीं यंदेवमतिर्हनुमदाख्यंप्रथमंरूपमुपह्वरतेरामस्यसमीपे तिष्ठ-ति । साधते रामकार्याणिसाधयति तेनहनुमताऋतस्य सत्यरू-पस्यरामस्य सस्रुतःअमृतस्रावयुक्ताः धेनावाचः अनयंत सीतां

प्रतीति शेषः ।

अत्रश्रीवेदेशतीर्थाः - छान्दोग्यभाष्यपदार्थकौमुद्यां

ततश्चायंतृचस्यार्थः । सहसःसहोरूपस्य देवस्यक्रीडादिगुण-संपन्नस्य वायोर्मूलरूपं बट् बलात्मकं दर्शतं ज्ञानरूपं । भर्गो जगद्भरणगमनगुणं तत् इत्था इत्थंभूतमेव वपुषे रूपत्रयावता-राय यतो यस्माद्भगवताऽधायि निहितं भगवता प्रेरितमित्यर्थः । तस्माद् अजनि । यद्वा यतोवायोर्भगवानजनिव्यक्तोभूत्तस्य-वायोरितिसंबंधः । प्रथमावतारस्वरूपमाह । यदीमिति । यदीं यदेवमतिर्हनुमदाख्यंप्रथमंरूपं उपह्वरते रामस्य समीपे तिष्ठ-ति । साधते रामकार्याणि साधयति । तेन हनुमता ऋतस्य सत्यरूपस्य पूर्वावगतवत्सदास्थितस्य वा रामस्य सस्रुतोऽमृ-तस्रावयुक्ताः धेनाः वाचोनयंतसीतां प्रतीतिशेषः । ॥

अत्रश्रीताम्रपर्णीश्रीनिवासाचार्याः - ऐतरेयभाष्यरत्नमालायां

अयमेतत्सूक्तार्थः । सहसो देवस्य सहमर्षणे अरिवेग सहन-वतो वायोर्देवस्य तन्मूलरूपम् । बट् बलात्मकं । दर्शतं ज्ञानरू-पं । *भूमृदृशियजिपर्विपच्यमितमिनमिहर्यभ्योतजित्युणादिसूत्रे* (3980) दृशेरतच्प्रत्ययविधानात् । दर्शन ज्ञानेनततंव्याप्तंद-र्शतमित्यप्याहुः । यतः स्वयमजनि यतश्च वपुषे अवतारा-येत्थमेव बलाद्यात्मकत्वेनैव अधायिन्यधायि । तस्य देवस्य भर्गः भरणगमनयोः कर्तृच यदीं यदेवमतिर्हनुमदाख्यंप्रथमंरूपं । ऋतस्य यथार्थज्ञानस्वरूपस्यैकप्रकारेण शश्वदवगतस्य राम-स्योपसमीपेह्वरते सर्वदागतोवर्तते । तस्यसस्रुतोऽतिशयेनामृ-तस्राविणीर्धेनाःवाचःसाधते । किंचऋतस्यप्रतिपादिकाः सस्रु-तोऽमृतस्राविण्यो धेना रामायणादिवाचःतेन हनुमता शिष्यान्

प्रत्यनयंत । संदेशरूपावाचः सीतां वा प्रत्यनयंतेत्यर्थः ।

अत्रश्रीसुब्बरायदासार्याः - ब्रह्मसूत्रार्थमणिमञ्जर्यां

यत् वायोर्मूलरूपं यतो नारायणात् जनि जातं तेन नाराय-णेन सहसः बलरूपस्य देवस्य क्रीडादिगुणयुक्तस्य वायोः तत् मूलरूपं बट् बलात्मकं दर्शतं ज्ञानपूर्णं भर्गः पोषण गमनकर्तृ इत्थावपुषे बलाद्युपेतावताराय धायि अधायि । यद्वा यतो वायुमूलरूपात् तत् अवतारत्रयं जनि जातं सह सः देवस्य तत् मूलरूपं बट् दर्शितं भर्गः इत्था वपुषे धायि । अथवा स-हसो देवस्य वायोः तत् मूलरूपं बट् दर्शितं भर्गः इत्था वपुषे वक्ष्यमाणगुणोपेतावतारत्रयाय धायि । यतोऽवतारत्रयात् भ-र्गः प्रकाशरूपं ब्रह्म जनि अभिव्यक्तमभवत् । तत्र प्रथमावतारं निरूपयति - यदिति ॥ यत् प्रथमंरूपं तत् मतिः मतिमान् हनुमन्नामक इति यावत् ऋतस्य ज्ञानरूपस्य रामस्य उपह्व-रते समीपे वर्तते । ईं इत्थमेव एकएवेति यावत् । ऋतस्य कार्याणीतिशेषः । साधते साधयति । तल्लेशतो दर्शयति - धेना इति ॥ सश्रुतः अमृतस्राविणीः मोक्षदा इति यावत् । ऋतस्य धेनाः रामविषयकावाचः रामायणरूपाः अनयन्तशि-ष्यान् प्रतीतिशेषः । अथवा रामोक्ताः सुखदा वाचः सीतां प्रति अनयन्त यद्वा सश्रुताः धेनाः सीतायाः वाचः ऋतं रामं प्रति अनयन्त ।

अत्रश्रीजनार्दनभट्टाः - भारततात्पर्यनिर्णयव्याख्याने

हनुमान् वायोरवतारः इत्यत्र श्रुतिमुदाहरति। बळित्थे-ति। यतो यस्मान्नारायणाज्जनि जातं तेन नारायणेन सहसः बलरूपस्य द्रविणं रेतः*सहोबलमि* तिनिघंटात्। देवस्यक्रीडादि-

गुणयुक्तस्यवायोस्तन्मूलरूपं इत्था एवंप्रकारेण ।यथा मूलरूपं बलाद्युपेतं तथा बलाद्युपेतत्वेन वपुषे अवतारायधायि अधायि कथंभूतंतन्मूलरूपं बट् बलात्मकं दर्शतं ज्ञानपूर्णभर्गःपोषणगमनकर्ता अथवा सहसोदेवस्यतन्मूलरूपं बट् दर्शतं भर्गः इत्था वपुषेधायि यतोमूलरूपाज्जनिजातंच । यद्वा सहसा देवस्य वायोःयद्रूपंतत् बट् बलात्मकं ज्ञानेन ततं व्याप्तं ।इत्थावक्ष्यमाणप्रकारेणवपुषेमर्त्यावतारायधायिअधायि यतोयस्मादवतारत्रयाद्भर्गः भातिप्रकाशत इति गच्छति जानातीतिप्रकाशज्ञानरूपंब्रह्मजनि अभिव्यक्तमभवत् ।तत्र प्रथमावतारं निरूपयति ।यदिति ।यत्प्रथमं रूपं मतिर्हनूमन्नामकं ।हनुशब्दस्यज्ञानवाचित्वात् ।ऋतस्यज्ञानरूपस्यरामस्य उपह्वरते समीपे वर्तते । ईं इत्थं ई एक एव <u>ऋतस्य</u> कार्याणि साधयते । तल्लेशतोदर्शयति । ऋतस्य तद्विषयाः धेनाःवाचः रामायणरूपाः अनयंतच्छिष्यान्प्रतीतिशेषः ।<u>सस्रुतः</u> अमृतस्राविणीः मोक्षदा इत्यर्थः ।अथवा रामोक्तासुखदा वाचः सीतां प्रति अनयतेत्ति ॥

यतो यस्मात् नारायणाज्जनिजातं तेन नाराणेन सहसः बलरूपस्य श्रविणम्रतेः *सहोबलमिति* निघंटात् ।देवस्य क्रीडादि गुणयुक्तस्य वायोस्तन्मूलरूपं इत्था एवं प्रकारेण ।यथा मूलरूपं बलाद्युपेतं तथा बलाद्युपेतत्वेन वपुषे अवताराय धयि आधयि कथं भूतं तन्मूलरूपं बट् बलात्मकं दर्शतं । ज्ञानपूर्णभर्गः पोषणगमनकर्ता अथवा सहसादेवस्य तन्मूलरूपं बट् दर्शतं भर्गः इत्थवपुषेधायि यतोमूलरूपाज्जनितंच ।यद्वा सहसादेवस्य वायोः यद्रूपतत् बट् बलात्मकं ज्ञानेन तं व्याप्तं । इत्थ वक्ष्यमाणप्रकारेण वपुषे मर्त्यावतारायद्यपि अधायि यतो-

यस्मादवतारत्रयङ्गर्गः गति प्रकाशत इति गच्छति जानातीति प्रकाशज्ञानरूपं ब्रह्मजनि अभिव्यक्तमभवत् । तत्र प्रथमावतारं निरूपयति । यदीति । यत्प्रथमंरूपं मति हनूमन्नामकं । हनुशब्दस्य ज्ञानवाचित्वात् । ऋतस्य ज्ञानरूपस्य रामस्य उपह्वरते समीपे वर्तते । ईं इत्थ ई एक एव ऋतस्य कार्याणि साधयेत् । तल्लेशतो दर्शयति । ऋतस्यतद्विषयाः धेनाः वाचः रामायणरूपाः अयनेताच्छिष्यान् प्रतितिशेषः । सस्रुतः अमृतस्राविणीः मोक्षदा इत्यर्थः । अथवा रामोक्तसुखदावाचः सीतां प्रति अनयतेति ॥

## गोमञ्जरी

<u>यतो</u> यस्मात् नारायणात् <u>जनि</u> जातं, तेन नारायणेन, <u>सहसः</u> बलरूपस्य, *द्रविणं रेतः सहो बलम्* इति निघंटोक्तेः । <u>देवस्य</u> क्रीडागुणमुक्तस्य, <u>वायोः</u> तन्मूलरुपं, <u>इत्था</u> एवं प्रकारेण, यथा मूलरूपं बलाद्युपेतं तथा बलाद्युपेतत्वेन, <u>वपुषे</u> अवताराय, <u>धायि</u> आधायि। कथं भूतं तन्मूलरुपं <u>बट्</u> बलात्मकं, <u>दर्शतं</u> ज्ञानपूर्णं, दर्शनेन ज्ञानेन, ततं पूर्णं सर्वज्ञं ज्ञानपूर्णमिति यावत् । सदा भगवद्दर्शनात् वा <u>दर्शनं</u> । दर्शतं भगवद्दृष्ट इति पद्मनाभतीर्थोक्तेः । अथवा दर्शनमेव दर्शतं ज्ञानरूपमित्यर्थः । तथाहि पण्डिताचार्यैः स्वीयनयचन्द्रिकायां *दर्शतं अतिशयेन दर्शतरूपं प्रातिलोम्येन तृतीयात् तृतीयस्यातिशयार्थत्वात्* इति । <u>भर्गः</u> पोषणगमनकर्ता, दुष्टान् भर्जयतीति भर्गः इति वा नयचन्द्रिकाकाराः । अथवा *भारति ज्ञानरूपत्वात् भर्गः* इति ऋग्भाष्योक्तेः । भा दीप्तिः, रतिः क्रीडा । गत्यर्थानां ज्ञानार्थत्वात् । गमेः ज्ञानार्थता । भा दीप्तौ, रमु क्रीडायां, गमलृ गतौ, धातुसमुदायात् असुन् । असुन् प्रत्यययोगेन भातेः

ह्रस्वता रमेः गमेश्च टिलोपः । *भर्गः* इति शब्दस्य निष्पत्तिः ऋग्भाष्यपदार्थप्रकाशिकायां प्रदर्शिता विस्तारेण । तत्रैव ज्ञातुं अलम् । अथवा बट् दर्शतं इति पद्वयं वायुशब्दस्य निष्पत्ति-परम् । *बलज्ञानस्वरूपत्वात् वायुः* इति अनुव्याख्यानोक्तेः । अथवा सहसो देवस्य तन्मूलस्य बट् दर्शतं भर्गः इत्था एवमे-व वपुषे अवतारत्रयेऽपि धायि आधायि । तत्र प्रथमावतारं निरूपयति यदिति यत् प्रथमं रूपं मतिः हनूमन्नामकं । ह-नुशब्दः ज्ञानवाचि हनुमान् मतिशब्दितः इति सद्भावोक्तेः । ऋतस्य ज्ञानरूपस्य रामस्य उपह्वरते समीपे वर्तते । ई इत्थं ई एक एव ऋतस्य कार्याणि साधते साधयति । तल्लेशतो दर्शयति । ऋतस्य तद्विषयाः धेनाः वाचः, धेनाग्नाः इति तन्नामसु पाठात्, धेनाशब्दः वाक्पाचीभवति । रामायणरूपाः अनयन्त तच्छिष्यान् प्रति अनयन्त=अनीयन्त, इत्यर्थः । सस्रुतः अमृतस्राविणीः मोक्षदा इत्यर्थः, अथवा रामोक्तानि सुखदायकानि वाक्यानि सीतां प्रति इति वा अर्थः । *रामस्य ऋतुरूपस्य वाचो नेता गुणोदधिः* इति वचनात् अयमेवार्थः समीचीनः ।

ननु अस्यमन्त्रस्य अन्यत्रविनियोगात् कथं वायुपरत्वमिति चेन्न । ब्रह्मास्त्रमुखेन रिपुसेनासंहारे नियुक्तस्य गायत्रीमन्त्र-स्य रिपुसेनाप्रतिपादकत्वं नास्तीति । यत्र विनियोगः स एव मन्त्रार्थः इति नियमो नास्ति । तदुक्तं युक्तिमल्लिकायां श्रीवा-दिराजतीर्थैः फलसौरभे 549 तमे श्लोके -

ब्रह्मास्त्ररूपगायत्री शत्रोः संहारकर्मणि ।
नियुक्तेत्येव किं वक्ति रिपुसेनाप्रणाशनम् । इति ।

15) पृक्षो वपुः पितुमान्नित्य आशये
द्वितीयमा सप्तशिवासु मातृषु ।
तृतीयमस्य वृषभस्य दोहसे
दशप्रमतिं जनयन्त योषणः । 1-141-2 ।

पदपाठः - पृक्षः । वपुः । पितुऽमान् । नित्यः । आ । शये । द्वितीयम् । आ । सप्तऽशिवासु । मातृषु ॥ तृतीयम् । अस्य । वृषभस्य । दोहसे । दशऽप्रमतिं । जनयन्त । योषणः ।

अत्रश्रीवादिराजतीर्थाः - भारततात्पर्यनिर्णयभावप्रकाशिकायां

द्वितीयं वपुर्निरूपयति - पृक्ष इति । द्वितीयं वपुः पृक्षः । पृत्=पृतना तस्याः क्षयकारित्वात् पृक्षःशब्दवाच्यं *क्षीङ् क्षय* इति धातोः कर्त्रर्थे औणादिके डसन्प्रत्यये कृते पृक्षः इति सकारान्तशब्दनिष्पत्तिरिति भावः । पितुमान् *पितुरित्यन्ननामे*ति ब्राह्मणवचनात् अन्नवान्, मतुपः प्राशस्त्यार्थकथनात् बह्वन्नभोक्तेत्यर्थः नित्यः=स्वच्छन्दमृत्युत्वान्नित्यशब्दवाच्यः स भीमः सप्त च ताः शिवाश्चते सप्तशिवाः तासु सप्तसंख्याकासु शिवासु शोभनासु मातृषु मापयन्ति ज्ञापयन्ति परमात्मानमिति मातृशब्दवाच्यासु विद्यासु ऋग्यजुःसामाथर्वभारतपञ्चरात्रमूलरामायणाख्यासु सप्तविद्यास्वित्यर्थः । आ समन्तात् सम्यक् च शये शिश्ये । यथा सुप्तः पुरुषो बहिरन्यन्न पश्यति तथा तासामर्थविचारे समाहितचित्तत्वात् शरकृद्वत् बहिर्व्यापारमजानानः सन् ता एव विचारयामासेत्यर्थः । अनेन भृताः माः मापयन्तीति माः विद्या येन स इति व्युत्पत्त्या भीमशब्दार्थ उक्तो भवति । *वर्णागमो वर्णविकारश्चे*ति वचनात् ऋकार-

स्य ईकारादेशः । <u>योषणः</u>= श्रीभूदुर्गाख्याः वेदाभिमानिन्यो योषितः, दोहसे=दुह प्रपूरण इति धातोः सर्वज्ञानपूरणाय, <u>वृषभस्य</u> देवश्रेष्ठस्य अस्य वायोः तृतीयं तृतीयावताररूपं -

दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमितिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ॥

इति स्मृतेः *दशदशस्तच्छत* मित्यादिश्रुतेश्च दश पूर्णाः मतयोभगवद्विषयत्वात् प्रकृष्टा मतयो यस्य तं पूर्णप्रज्ञमिति यावत् <u>जनयन्त</u> *बहुलं च्छन्दस्यमङ्योगेऽपी*ति वचनात् अजनयन्त । श्रीभूदुर्गाख्याः ऋगादिवेदाभिमानिन्यो देव्यः स्वाभिमन्यमानवेदानामन्यैरन्यथाव्याख्यातत्वात् <u>यथावद्व्याख्यानाय</u> मध्यगेहाख्यविप्रपत्न्याः उदरे स्थित्वा अजनयन्तेति भावः ।

अत्रश्रीरघूत्तमतीर्थाः - बृहदारण्यकभावबोधे

द्वितीयावतारस्वरूपमाह। पृक्ष इति। <u>द्वितीयं</u> वपुः भीमाख्यं <u>पृक्षः</u> पृतनाक्षयकारी <u>पितुमान्</u> अन्नवान् बहुभुगितिभावः । <u>नित्यः</u> नित्यं <u>सप्तशिवासु</u> परममंगलरूपासु सप्तसुमातृषुप्रमाणभूतासुऋगादिषु <u>आशये</u> शेते तद्विचारयतीतिभावः । अनेन द्वितीयावतारवाचकभीमशब्दार्थ उक्तो भवति । तृतीयावतारस्वरूपमाह । तृतीयमिति । <u>अस्यवृषभस्य</u>श्रेष्ठस्यवायोः तृतीयंवपुः <u>दोहसे</u> ज्ञानदोहाय <u>दशप्रमतिं</u> पूर्णप्रज्ञनामकं <u>योषणः</u> नार्यो गुरुत्वाद्बहुवचनं <u>जनयंत</u> अजनयंत ।

अत्रश्रीवेदेशतीर्थाः - छान्दोग्यभाष्यपदार्थकौमुद्यां

द्वितीयावतारस्वरूपमाह । पृक्ष इति ॥ <u>द्वितीयं वपुः पृक्षः</u>

पृतनाक्षयकारि पितुमान् अन्नवान् बहुभुगितियावत् । नित्यः नित्यंसप्तशिवासुसप्तसंख्याकासुपरममंगलरूपासु ऋगादिलक्षणासुमातृषुमापयंतीति मातारस्तासु आशयेशेते । मुहुर्मुहुर्विचारयतीत्यर्थः । अनेन भीमशब्दार्थ उक्तोभवति । तृतीयावतारस्वरूपमाह ॥ तृतीयमिति ॥ अस्यवृषभस्य श्रेष्ठस्य वायोस्तृतीयं वपुः । दोहसे ज्ञानदोहाय दशप्रमतिं पूर्णप्रज्ञनामकंयोषणोनार्यः । गुरुत्वाद्बहुवचनं । जनयंत अजनयंत ।

अत्रश्रीताम्रपर्णीश्रीनिवासाचार्याः - ऐतरेयभाष्यरत्नमालायां

अस्य वृषभस्य वृषसेचनेच भक्तानांसर्वाभिलषितवर्षितुः । यद्वावृषस्नेहे भक्तानुरागिणः । भगवद्भक्तप्रवरस्यवा । यद्वा वृषशक्त्यतिशय इतिधातोर्बहुशक्तिसंपन्नस्यवायोः द्वितीयंवपुः सप्तसंख्याकासु आशिवासु परममंगलासु मातृषुऋगादिप्रमाणेषु । नित्यः नित्यंशयेशेते । लोपस्त आत्मनेपदेषु इति तकारलोपे अयादेशेच शय इति रूपं । ततश्च भीमनामकमितियावत् । किंच पृक्षः कुरुपृतनाक्षयकारी । पितुमान् बह्वन्नभोक्ता । अस्यवृषभस्यवर्षितुःदशप्रमतिंपूर्णप्रज्ञनामकं । तृतीयं वपुः दोहसे ज्ञानदोहाय योषणः स्त्रियः जनयंत अजनयंत । गुरुमातृत्वाद्बहुवचनं ।

अत्रश्रीसुब्बरायदासार्याः - ब्रह्मसूत्रमणिमञ्जर्यां

द्वितीयवतारमाह पृक्ष इति । पृक्षः कुरुपृतनाक्षयकारी पितुमान् बह्वन्नभोक्ता नित्यः प्रलयेऽपि अविस्मृतज्ञानः द्वितीयं वपुः वायोः द्वितीयावतारो भीमः सप्त ऋगादिवेदचतुष्टयेतिहासपुराणपञ्चरात्रेतिसप्तसङ्ख्याकासु शिवासु मङ्गलरूपासु मातृषु प्रमाणेषु आ समन्तात् सम्यक् शये सुप्तो भवत् यथासुप्तोऽन्तर्ज्ञान

एवासक्तः एवं तासु आसक्त इति भावः । तृतीयावतारमाह - तृतीयमिति । योषणो योषाः मध्यगेहभार्याः पूज्यत्वाद्बहुवचनं दशप्रमितिं पूर्णप्रज्ञं तत्संज्ञकाचार्यावासयोग्यं वृषभस्य देवश्रेष्ठस्याऽस्य वायोः तृतीयं वपुः शरीरभूतं रूपं दोहसे ज्ञानदोहनाय जनयंत अथवा योषणः योषतां सप्तमातृणां दोहसे ज्ञानप्रकटनायाऽजनयन्त । यद्वा योषणो विद्याभिमानिन्यः श्रीभूदुर्गाख्याः ।

अत्रश्रीजनार्दनभट्टाः - भारततात्पर्यनिर्णयव्याख्याने

द्वितीयंरूपमाह । पृक्षेति । पृतनाक्षयकारित्वात्पृक्षःपितुमान् बह्वन्नभोक्ता । *पितुरित्यन्ननामे*तिश्रुतेः । द्वितीयं वपुःनित्यःप्रलयेप्यविलुप्तज्ञानः । भीमःसप्तशिवासु ऋगाद्याश्चत्वारैतिहासःपुराणंपंचरात्रकमिति सप्तसंख्याकासुनिर्दोषत्वाच्छिवासु मंगलरूपासु मंगलाख्यविष्णुप्रतिपादकासु वा नित्यः नित्यासु इति वा ।अत्र केषांचिदर्थतःनित्यत्वंज्ञेयं मातृषुमापयंति ज्ञापयंति अर्थानिति मातरस्तासु प्रमाणरूपासु आसमंतादासम्यक शयेसुप्तोयथाबाह्यज्ञानेनांत एवासक्तोभवति तथातासु आसक्तोभवतीत्यर्थः ।नित्यःनित्यंशये इति वा ।तृतीयमवतारमाह ।तृतीयमिति ।अस्यवृषभस्यदेवश्रेष्ठस्यवायोस्तृतीयंवपुःदशप्रमतिं *शतंदशसहस्रमित्यपरिमितनामानी*तिश्रुतेः । पूर्णप्रज्ञंपूर्णप्रज्ञावस्था न भूतदेहं । योषणः गुरुत्वाद्बहुवचनं । निष्कासयन् परमसौभगवान्विवेशेतिवचनात् ।दोहसे ज्ञानदोहनाय जनयंताजनयंत ।अथवा योषणः योषितां सप्तमातॄणां दोहसे ज्ञानप्रकटनाय जनयंत जातमितिविद्यात् ।यद्वा योषणः विद्याभिमानिन्यो श्रीभूदुर्गाख्या इति ।

गोमञ्जरी

द्वितीयावतारं वर्णयति ॥ पृक्ष इति ॥ कुरुपृथनाक्षयकारित्वात् पृक्षः, पितुमान् बह्वन्नभोक्ता, पितुरिति अन्ननाम, पा धातु रक्षणार्थे वर्तते । तस्य *कमिमनिजनिभायागापाहिभ्यः* (3-1-70) इति उणादिसूत्रेण तुप्रत्ययः भवति । बाहुलिकत्वात् अकारस्य इकारे पितुरिति रूपम् । बकासुरवधदशायाम् चेदम् ज्ञायते । नित्यः प्रलयेऽपि अविलुप्तज्ञानः *एवं प्रलयकालेऽपि प्रतिभातपरावरः । वायुनित्यसमः प्रोक्तः शरीरोत्पत्तिकारणात्* (2-3-2) इति अनुव्याख्यानोक्तेः । *अतिरोहितविज्ञानात् वायुरपि अमृतः स्मृतः* इति ईशावास्यभाष्योदाहृत रामसंहिता वचनात् । द्वितीयं वपुः, द्वितीयावतारः भीमसेनः, सप्त ऋगाद्याश्चत्वारः, इतिहासः, पुराणं, पञ्चरात्रमिति । सप्तसंख्यासु शिवासु निर्दोषत्वात् मंगलरूपासु, मातृषु प्रमाणेषु, विष्णुप्रतिपादकत्वात्, आ आशये आ समन्तात्, आ अशेषतया सम्यक्, अन्यावाचकतया शये सुप्तोऽभवत्। यथा सुप्तः पुरुषः बाह्यपदार्थेषु अनासक्तः भवति तद्वत् अन्यत्रानासक्तः श्रीनारायणे एव अत्यासक्तः अभवत् इत्यर्थः ॥

भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।
ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ॥
प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ।

इति आनन्दतीर्थोदाहृतसङ्गाववचनमेव प्रमाणम् । एतेन भीमशब्दस्य निष्पत्तिः द्विधा प्रदर्शिता । *मातृषु शये* इत्यत्र मासुभृत इति भीमः इति प्रथम प्रकारेण, भृता मा येन इति द्वितीयप्रकारेण इति ज्ञेयम् । अथवा नित्यं आशये सर्वदा तद्विषयक ज्ञानवान् भवतीति भावः । अत्र -

न भारती मेऽङ्ग मृषोपलक्ष्यते
न कर्हिचिन्मे मनसो मृषागतिः ।
न मे हृषीकाणि पतन्त्यसत्पथे यन्मे
हृदौत्कण्ठ्यवता धृतो हरिः ॥2-6-33

इतिभागवतोक्तब्रह्मवचनम् प्रमाणम् । ननु वायुब्रह्मणोः भिन्नत्वात् तत्कथमिदं वचनं प्रमाणं भवितुमर्हतीति चेन्न । वायुर्हि ब्रह्मतामेति इति वचनात् वायुर्हि ब्रह्मपदवीं आप्नोतीति । तैत्तिरीयके *नमो ब्रह्मणे नमस्ते वायो* इति सहोक्तिरपि वायुब्रह्मणोः समानत्वे प्रमाणम्। न हि अत्यन्तोत्तमाधमयोः सह नमस्कारो युज्यते । ननु *शंनो मित्रः* इति अत्यन्ताधमस्य मित्रस्यापि *शन्नो विष्णुरुरुक्रमः* इति विष्णुना सह नमस्कार उक्त इति चेन्न । इन्द्रियदेवता प्रसादद्वारा श्री हरेः प्रसादः अस्माभिः प्रार्थनीयम् इति सूचनार्थं एवं उक्तम् । तस्मात् विष्णोः उरुक्रमेति विशेषणम् । तेन विशेषणेन विष्णोः प्राधान्यम् ज्ञायते । तस्मात् नासंगतिः । *ब्रह्माणं भाविनं त्वमिति* पण्डिताचार्याणां वचनमपि प्रमाणम् द्वितीयं वपुः पृतनाक्षयकृत् पृक्षशब्दोक्तम् । ऋगादिसप्तविद्यानिवासात्मकं चेति । तस्मादिदं वाक्यं द्वितीयावतारभीमसेनपरत्वे न किमपि बाधकं अस्तीति ज्ञेयम् ।

अथ तृतीयावतारं निरूपयति । तृतीयमिति । अस्य वृषभस्य देवश्रेष्ठस्य वायोः, तृतीयं वपुः, तृतीयं शरीरं मध्वाख्यं दशप्रमतिं

दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमितिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ।

ऐतरेयभाष्येश्रीमध्वाचार्योदाहृत वचनात् । पूर्णप्रज्ञः आनन्दतीर्थः, योषणः गुरुत्वात् बहुवचनम् ।

सम्पूर्णलक्षणचणं नवराजमानं
द्वारान्तरं परमसुन्दरमन्दिरं तत् ।
राजेव सत्पुरवरं भुवनाधिराजो
निष्कासयन् परमसौ भगवान् विवेश ॥ 2-25 ॥

इति सुमध्वविजयवचनात् मध्यगेहभट्टभार्याः, दोहसे ज्ञान दोहनाय जनयन्त आजनयन्त । यद्वा योषणः योषितां सप्तमातृणां दोहसे ज्ञानप्रकाशनाय, जनयन्त आजनयन्त ।

वेदान्तमार्गपरिमार्गणदीनदूनाः दैवीः
प्रजा विशरणाः करुणापदं नः ।
आनन्दये सुमुख भूषितभूमिभागो
रूपान्तरेण मम सद्गुणनिर्णयेन ॥ 2-3 ॥

इति श्रीसुमध्वविजयवाक्ये सद्गुणां निर्णयस्तु सर्वदा शास्त्राणां मथित्वा अर्थप्रकटनेनैव नारायणस्य शास्त्रैकसमधिगम्यत्वादिति यावत् ।

अथवा योषणः श्रुत्यभिमानिन्यः श्रीभूदुर्गाः श्रीमध्यगेहभार्यायां सन्निहिताः श्रीमध्वं जनयन्त । अस्य वृषभस्य तृतीयं

वपुर्ज्ञानदोहनार्थं योषासु जानम् इति पण्डिताचार्यवाक्यमपि अस्मिन् विषये प्रमाणम् भवति ।

नाथस्य भूरिकरुणासुधयाऽभिषिक्तौ
श्रीश्रीधरप्रततिसारशरीरयष्टी ।
भूरिव्रतप्रभवदिव्यसुकान्तिमन्तौ
तौ देहस्तुद्धिमतिमात्रमथालभेताम् ॥ 2-22 ॥

सुमध्वविजयवचनात् ।

16) निर्यदीं बुध्नान्महिषस्य वर्पसः
ईशानासः शवसा क्रन्त सूरयः ।
यदीमनु प्रदिवो मध्व आधवे
गुहासन्तं मातरिश्वा मथायति । 1-141-3 ।

पदपाठः - निः । यत् । ईम् । बुध्नात् । महिषस्य । वर्पसः । ईशानासः । शवसा । क्रन्त । सूरयः ॥ यत् । ईम् । अनु । प्रऽदिवः । मध्वः । आऽधवे । गुहा । सन्तम् । मातरिश्वा । मथायति ॥

अत्रश्रीवादिराजतीर्थाः - भारततात्पर्यनिर्णयभावप्रकाशिकायां

बुध्नात् *बुध अवगम* इति धातोः बुध्नात्=ज्ञानरूपात्, बुधः पण्डितान् नयति सन्मार्गः इति वा बुध्नात्, वर्पसः वरयति सज्जनान् पालयतीति व्युत्पत्या वर्पःशब्दःवाच्यात्, पूर्ववद्धातुद्वयात् कर्त्रर्थे डसन् प्रत्यय इति भावः । महिषस्य=देवश्रेष्ठस्य वायोः यत् यस्मात्तृतीयरुपात् ईं इत्थं पूर्वोक्तरीत्या ज्ञानपूरणे कृते सति ईशानासः *बहुवचनमाद्यर्थ* इति वचनात् ईशाना-

द्याः देवाः शवसा=सुखेन, सूरयः=ज्ञानिनः, निः=नितरां, क्रन्त आक्रियन्त मध्वः=मध्वनामकः, मातरिश्वा=वायुः, प्रदिवः=प्रकृष्टबुद्धिप्रकाशवतः, पूर्वोक्तानीशानादिदेवान् अनु=अनुसृत्य, पुरस्कृत्येति यावत् । गुहा=गुहायां सुलोपः हृदयगुहायामित्यर्थः । सन्तं=विद्यमानं गुहागूहितं सन्तमिति वा । आधवे *धवः प्रियः पतिर्भर्तेत्य*नुशासनात् भावप्रधानाच्च निर्देशस्य आधवे आ समन्तात्पतित्वे विषये यद्यस्मात्कारणात् मथायति=वेदशास्त्रादीनां सम्यक् मथनं करोति । अनन्तवेदविषयत्वेन मथनस्य महत्तरत्वाद्दीर्घः । अपारवेदशास्त्रादिविचारं कृत्वा हरेः सर्वोत्तमत्वं स्थापयतीत्यर्थः । तस्मात्कारणात् ईशानासः सूरयः अक्रियन्तेति पूर्वेणान्वयः ॥

अत्रश्रीरघूत्तमतीर्थाः - बृहदारण्यकभावबोधे

निर्यदीमिति । बुध्नात् ज्ञानरूपात् यदीं यस्मादेव महिषस्य-महितषड्गुणस्यहरेः वर्पसः वरणीयत्वात्पालकत्वाद्वर्पोनामकान् गुणानीशानासःरुद्राद्यादेवाः अन्येसूरयोज्ञानिनश्च शवसासुखेन निराक्रंतज्ञातवंतः तृतीयंवपुरितिपूर्वेणसंबंधः । यदीमिति । यदींयएव प्रदिवः प्रकृष्टप्रकाशरूपोमध्वः आनंदतीर्थाख्यो-मातरिश्वावायुः गुहासंतंजीवेष्वरैक्यंवदद्भिर्गूहितंसंतम्हरिं आधवे आसमंतात्पतित्वे मथायतिमश्नाति शास्त्रेणविचार्यनिश्चाययतीतिभावः ।

अत्रश्रीवेदेशतीर्थाः - छान्दोग्यभाष्यपदार्थकौमुद्यां

निर्यदीमिति । बुध्नात् ज्ञानस्वरूपात् । यदीं यस्मादेवमहिषस्य महितषड्गुणस्य हरेर्वर्पसोवरणीयत्वात् पालकत्वाद्वर्पोनामकान् गुणान् ईशानासोरुद्राद्यादेवाः अन्येसूरयोज्ञानिनश्च

शवसा सुखेन । निराक्रन्त ज्ञातवंतः । तृतीयंवपुरिति पूर्वेण-संबंधः । यदीमिति । यदीं य एव प्रदिवः प्रकृष्टप्रकाशरूपो मध्वः आनन्दतीर्थाख्योमातरिश्वावायुर्गुहासंतं जीवेश्वरैक्यंवदद्भिः गूहितंसंतंहरिं आधवे आसमंतात्पतित्वेमथायतिमश्नाति शास्त्रेणविचार्यनिश्चाययतीतिभावः । शिष्टसूक्तव्याख्यानंग्रंथांतरादावगंतव्यं ।

अत्रश्रीताम्रपर्णीश्रीनिवासाचार्याः - ऐतरेयभाष्यरत्नमालायां

बुध्नात् बोधमतिव्याख्यातत्वात् । यदीं यस्मात् पूर्णप्रज्ञादेव महितषड्गुणस्य हरेर्वर्णनीयत्वात् वर्पसोगुणान् ईशानादयोदेवा अन्येसूरयश्च शवसा सुखेन नितरां आक्रांतज्ञातवंत इत्यर्थः । यद्यपिबंधेर्ब्रधिबुधीचेत्युणादिसूत्रेबंधबंधन इतिधातोर्बुधादेशेन क्प्रत्ययेच कृते बुध्नाज्ज्ञानोपदेशकात् अबुध्नेराजेत्यत्र ऋग्भाष्यटीकायां अबुध्नेबुध अवगमने ततो न प्रतिषेधो अबुध्नमितिनिष्पन्न इत्युक्तं । तथापि इह प्रकृतविवक्षयार्थांतरम्बोध्यं । यद्वा धात्वर्थभुतोबंधोभक्तिलक्षणो विवक्षितः । अनुबंधश्चभक्तिः स्यादितिवचनात् । भगवद्भक्ताग्रेसरादितियावत् । भक्तेर्ज्ञानरूपत्वाद्बोधात्मकत्वादितिवा । यदीं प्रदिवः प्रकाशादिरूपो मध्वः आनंदतीर्थाख्यो मातरिश्वामातरिप्रमाणभूतेऋगादौश्वचतिगच्छतीति वायुः । कलियुगे दुर्वादिभिर्गुहासंतंगुहितंसंतं हरिं आधवे आ समंतात्पतित्वे विषये मथायतिमथ्नाति । शास्त्रेणविचार्यनिश्चाययतीत्यर्थः ।

अत्रश्रीसुब्बरायदासार्याः - ब्रह्मसूत्रमणिमञ्जर्यां

तत्प्रयोजनमाह - निरिति ॥ सूरयो ज्ञानिनः ईशानासः रुद्राद्याः मनुष्योत्तमपर्यन्ताः लोकेशानां वा महिषस्य पूज्य-

गुणस्य विष्णोः वर्पसः वर्णीयत्वेन पेयान् तत्संज्ञकान् ज्ञान-बलादिगुणान् यत् यस्मात् बुध्नात् बोधरूपात् तृतीयावतारात् ज्ञानोपदेशे मूलाचार्यरूपात् ईं एव यत् बुध्नात् यत्कर्तृकमूल-प्रमाणभूतब्रह्मसूत्रभाष्याद्वा यत् बुध्नात् यदुपदेशप्रयुक्तमूलभुत-नारायणप्रसादाद्वा । यत्कृतवायुप्रसादाद्वा निः नितरां क्रन्त आक्रमितवन्तः । ज्ञानवन्त इति यावत् । तृतीयावतारगुणा-न्तर्माह - यदीमन्विति ॥ मातरिश्वा वाय्ववतारभुतः प्रदिवः प्रकृष्टज्ञानवान् यत् यो मध्वः ईं सुखकरशास्त्रकर्तृत्वात् तन्ना-मक आचार्य एव गुहासन्तं गूहितं परमात्मानम् आधवे आ समन्तात् पतित्वार्थमनु अनुकूलेन मथायति शास्त्रेण विचार-यति ।

अत्रश्रीजनार्दनभट्टाः - भारततात्पर्यनिर्णयव्याख्याने

तत्प्रयोजन्माह । निरिति । यद्यस्मात् बुध्नात् बोधरूपात्तृ-तीयावतारात् । ईं एवमहिषस्य पूज्यगुणस्य विष्णोर्वर्णीयत्वेन पेयत्वाद्वर्पसः तन्नामकान् ज्ञानबलादीन् गुणान् । सुरयः ज्ञा-निनः ईशानासः रुद्राद्याः मनुष्योत्तमपर्यंताः लोकेशाः वा । शवसा सुखेन निः नितरा क्रंत आक्रमितवंतः ज्ञातवंतः बुध्ना-ज्ज्ञानोपदेशे मूलभूतादाचार्याद्वा यद्वा बुध्नात् मूलभूतप्रमाणात् ब्रह्मसूत्रभाष्यादिति । अथवा बुध्नात् मूलरूपनारायणप्रसादादि-ति वायुप्रसादाद्वा । *मूलंबुध्नोंघ्रिनामक* इत्यभिधाने बुध्नशब्दस्य मूले प्रयोगादेतदर्थाः ज्ञेयाः । मातरिश्वावाय्ववतारः प्रदिवः प्रकृष्टज्ञानवान् मध्वः यदीमयमेवपरमात्मानं गुहासंतं गूहितं आधवे आ समन्तात् धवे भावप्रधानोनिर्देषः । विषयसप्तमी पतित्वार्थे अनु अनुकूलेन मथायति ऋगादिशास्त्रं विचारयति ।

## गोमञ्जरी

तृतीयावतारस्य प्रयोजनमाह नियदीमिति । यत् यस्मात् बुध्नात् ज्ञानरूपात्, बुध अवगमे इति धातो रूपम् अथवा बुधः पण्डितान् नयति सन्मार्गे इति बुध्नात् । तृतीयावतारात्, ईं एव, महिषस्य पूज्यस्य, श्री हरेः वर्पसः वर्णनीयत्वेन पेयान् ज्ञानानन्दादिगुणान्, ईशानासः रुद्राद्याः मनुष्योत्तमान्ताः लोकेशा वा, सूरयः ज्ञानिनः, शवसा सुखेन निः नितरां क्रान्त आक्रमितवन्तः ज्ञातवन्त इति यावत् । *बहुवचनमाद्यर्थः* इति वचनात् आद्यर्थे बहुवचनम् । यद्वा बुध्नात् ज्ञानोपदेशे मूलभूताचार्यात् । अथवा बुध्नात् मुलभूतप्रमाणात् ब्रह्मसूत्रादिति यावत् । बुध्नात् मूलभूतनारायणप्रसादादिति वा । बुध्नात् मूलभूतवायोरनुग्रहादिति वा *मूलं बुध्नोऽङ्घ्रिनामकः* इति कोशात् बुध्नशब्दस्य मूलार्थत्वात् एते अर्थाः ज्ञेयाः । यत् ईं = य एव, प्रदिवः = प्रकृत ज्ञानवान्, मध्वः = मध्वनामकः, मातरिश्वा = वायुः, गुहासन्तं = हृदयगुहायां विद्यमानं, जीवेश्वरैक्यं वदद्भिः गूहितम् । श्रीनारायणं, आधवे आ समन्तात् धवे = भावप्रधानो निर्देशः । पतित्वे, पतित्व विषये, अनु = प्रमाणानुकूलेन, मथायति = वेदशास्त्रादीनां, मथनं करोति ।

आ समन्तात् पतित्वे तु गूढं कलियुगे हरिम् ।
असत्यमप्रतिष्टं तत् जगदेतदनीश्वरम् ।
वदद्भिः गूहितं सन्तं तृतीयोसुर्मथायति ।
येन विष्णोः हि वर्पाख्यान् गुणानज्ञासिषुः परान् ॥
ईशानस्ते सूरयश्च निगूढान् निर्गुणोक्तिभिः ॥

इत्यादि बृहदारण्यकभाष्योदाहृत प्रमाणैः अस्य सूक्तस्य एवमेव अर्थः ज्ञेयः । अनन्तवेदविषयत्वेन मथनस्य महत्तरत्वाद्दीर्घः । अपारवेदशास्त्रादिविचारं कृत्वा श्री हरेः सर्वोत्तमत्वं स्थापयति । तस्मात् ईशानासः सूरयः ज्ञातवन्तः इति पूर्वेणान्वयः ।

17) प्रयत्पितुः परमां नीयते पर्या
पृक्षुधो वीरुधो दंसु रोहति ।
उभा यदस्य जनुषं यदिन्वत
आदिद्यविष्ठो अभवद् घृणा शुचिः ॥1-140-4।

पदपाठः - प्र । यत् । पितुः । परमात् । नीयते । परि । आ । पृक्षुधः । वीरुधः । दम्ऽसु । रोहति ॥ उभा । यत् । अस्य । जनुषम् । यत् । इन्वतः । आत् । इत् । यविष्ठः । अभवत् । घृणा । शुचिः ।

अत्रश्रीवादिराजतीर्थाः - भारततात्पर्यनिर्णयभावप्रकाशिकायां

यद्यस्मात्कारणात् परमात् उत्तमात् पितुः = स्वजनकात् नारायणात्, आ समन्तात्, परि = परितः प्रणीयते प्रेर्यते । इदं कार्यं कुरु इदं कार्यं न कुर्विति प्रेर्यत इत्यर्थः । पाजकक्षेत्रे उत्पद्यस्व, ब्रह्मसूत्रस्य दशोपनिषदां च भाष्याणि कुरु, रजतपीठपुरे कृष्णं प्रतिष्ठापय, सेतुदर्शनार्थं गच्छ, तत्रापि खलान्निर्जयस्व, सुजनेषु ज्ञानं दिश, बदरीं गच्छ, व्यासं पश्य, मध्येमार्गं सुजनाननुगृहाणेत्यादिरूपेण प्रणीयत इत्यर्थः । पृक्षुधः पृतः प्रम्ना एव क्षुद्वत् परपीडकत्वात् क्षुधः ता

एव वीरुधः लताः विशेषेण पुनः पुनः रुहन्तीति हि लताः वीरुधः प्रश्नानामपि पुनःपुनरुत्पत्तेर्वीरुधां साम्यम् । ताः सर्वाः दंसु=दन्तेषु रोहति=आरोपयति । अन्तर्णीतो णिच् । यथा बलीवर्दः लताः दन्तेषु निक्षिप्य नाशयति तद्वत् परप्रश्नानपि नाशयतीति भावः । दत्स्विति वक्तव्ये दंस्विति वचनं पुंस्वितवत् वर्णविकारादिना ज्ञेयम् । यद्यस्मात्कारणात् उभा=उभौ लक्ष्मीनारायणौ अस्य=मध्वस्य जनुषं=जन्म, *जा प्रापण* इति धातोः गत्यर्थानां ज्ञानार्थकत्वात् यत् ज्ञानमुद्दिष्य इन्वतः=प्रेरयतः युगे युगे प्रेरयतः, तत् तस्मात्कारणात् आत्-अकारवाच्यात् नारायणात् यविष्ठः वायोरवतारेषु कनिष्ठः मध्वाचार्यः इत्=इत्थं इदानीं दृष्यमानप्रकारेण घृणा=घृणावान् दुर्जनानपि भीमवत् हनुमद्वच्च हर्याज्ञाया अभावात् कुतो हन्मीति कृपावान् अत एव शुचिः स्वप्रतिवादितया प्रत्यवस्थितानामपि विप्ररूपाणां विदुषां वाचा दूषणेऽपि करेणाहिंसनात् विप्रहत्यानिमित्तजनापवादेनापि अस्पृष्टोऽभवदित्यर्थः ॥

### अत्रश्रीरघूत्तमतीर्थाः - बृहदारण्यकभावबोधे

प्रयत्पितुरिति । यत् रूपत्रयं पितुःस्वोत्पादकात् परमादुत्तमाद्विष्णोः प्रणीयते प्रकर्षेणप्रेर्यते पृक्षुधः प्रश्नरुपान् वीरुधस्तंबादीन् दंसुदंतेषु पर्यारोहतिचर्वितवच्छकलीकरोतित्यर्थः ॥ उभेति ॥ यत् यस्मादस्यजनुषंजन्मावतारं उभा उभौ लक्ष्मीनारायणौ इन्वतःप्रेरयतस्तस्मात् घृणाशुचिःकृपयाशुद्धः । स आदित् आभ्यांलक्ष्मीनारायणाभ्यामेवयविष्ठोवरोभवदित्यर्थः । गर्भसंबंधनिमित्तकदुःखलेशोपिनास्तीत्याह ॥

अत्रश्रीताम्रपर्णीश्रीनिवासाचार्याः - ऐतरेयभाष्यरत्नमालायां

यद्रूपत्रयं परमात्पितुः प्रणीयते उत्तमत्वेनप्रेर्यते । पृक्षुधःप्रम्नान्वीरुध इव दंसु दंतेषु पर्यारोहतिशकलीकरोतीति यावत् ऽस्य यज्जनुषं यज्जन्म उभा उभौ लक्ष्मीनारायणौ यद्यस्मादिन्वतः प्रेरयतः । आत् इत् अस्मादेवकारणात् आत् इत् आभ्यामेवघृणादयया । शुचिःशुद्धोयंयविष्ठोवरोभवत् ।

अत्रश्रीसुब्बरायदासार्याः - ब्रह्मसूत्रमणिमञ्जर्यां

गुणान्तरमाह - प्रयदिति । यत् तृतीयं रूपं परमात्पितुः सर्वोत्तमेन पित्रा भगवतैव प्रनीयते प्रेर्यते यत् रूपम् पृक्षुधः पद्यरूपा वीरुधः लताः दंसु दन्तेषु पर्यारोहति खण्डयन्ति वल्लीं यथाखण्डयन्ति तथाखण्डयन्तीति भावः । उभाउभौ लक्ष्मीनारायणौ अस्य वायोर्जनुषं जन्म अवतारमिति यावत् । यत् ज्ञानं प्रति इन्वतः प्रेरयतः ज्ञानार्थ पक्षे यदिति इण् धातोः शतरिरूपम् । यत् यो मध्व आदित् आभ्यमेव यविष्टः अत्यन्तयुवाऽभवत् । घृणा विष्णुभक्तेषु दयावान् शुचिः गर्भवासादिदोषरहितश्च अभवत् । तं दशप्रमतिमजनयन्तेति पूर्वेण संबन्धः ।

अत्रश्रीजनार्दनभट्टाः - भारततात्पर्यनिर्णयव्याख्याने

यद्रूपं परमात्पितुः हेतौपंचमी । सर्वोत्तमेन पित्राप्रनीयतेप्रेर्यते । तद्रूपं पृक्षुधः प्रम्नरूपाः वीरुधः लताः दंसु दंतेषु पर्यारोहति । वल्लिखंडनवतखंडयतीत्यर्थः । यद्यस्मादुभौ लक्ष्मीनारायणौ । अस्यवायोः जनुषं जन्मावतारं । यद्गत्यर्थस्यज्ञानार्थत्वाज्ज्ञानं प्रति इन्वतः प्रेरयतः । आदस्मात्कारणात् । आदितआभ्यामेवसकाशाद्यविष्ठः कनिष्टः अभवत । कथं भूतः

विष्णुभक्तेषु घृणादयावान् शुचिःगर्भवासादिदोषरहितः ॥

## गोमञ्जरी

यत्=यस्मात्, परमात्=सर्वोत्तमात्, पितुः=नारायणात्, प्र परि नीयते=प्रकर्षेण परितः प्रणीयते प्रेर्यते ।अस्य वायोः नारायणः एक एव प्रेरकः न अस्मदादीनामिव कर्मादिकमिति भावः ।नारायणस्य पितृत्वे तु *यो नः पिता जनिता* इति वेदे, *प्रकृतौतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः* इति सूत्रे च प्रसिद्धम् वायोः हरेः आज्ञया एव प्रवृत्तिरिति तु

-

श्रीवल्लभाज्ञां ससुरेन्दयाज्ञां
संभाव्य संभाव्यतमां त्रिलोक्यां

आदेशमौलिमणिमुज्ज्वलवर्णमेनमिति श्रीसुमध्वविजये प्रतिपादितम् । पृक्षुधः=प्रश्नरूपाः, प्र उपसर्गपूर्वकात् क्षुध बुभुक्षायाम् इति धातोः क्विपिरूपम् । रेफस्य सम्प्रसारणम् । यथा क्षुधः परपीडाकाराः भवन्ति तथा प्रश्ना अपि इति ज्ञेयम् । ताः एव वीरुधः=लताविशेषाः । विपूर्वात् रुहेः क्विपि वेः दीर्घे, हकारस्य धकारे रूपम् । *वीरुध ओषधयो भवन्ति विरोहणात्* इति यास्कोक्तेः ।दंसु=दन्तेषु, दत्सु इति वक्तव्ये वर्णविकारात् दंसु इति रूपम् ।आ रोहति=प्रविशति ।यथा लताः दन्तेषु निक्षिप्य गौः नाशयति तथा परकृतान् प्रश्नान् नाशयति इत्यर्थः ।

*चिच्छेदातुच्छ धिषणस्तांस्तदा तर्कसायकैः । प्रयुक्तमात्रान् प्रहसल्लीलयातिदयालुभिः* इति श्रीपण्डिताचार्यैः । (14-66

सुमध्वविजये) ।

*लक्ष्यलक्षणयोर्भेदोऽभेदो यदि वोभयम् । इति पृष्टे तदैक्यस्य गतिरेव न विद्यते* इति अनुव्याख्याने (1-1-2) च उक्तत्वात् परकृतप्रश्नानां खण्डनं तावत् प्रसिद्धमेव ।

यत्=यस्मात् कारणात्, उभा=उभौ लक्ष्मीनारायणौ, अस्य=मध्वाचार्यस्य,जनुषम्=जन्म, पुल्लिङ्गः छान्दसः, यत्=ज्ञानमुद्दिश्य, या प्रापणे, गत्यर्थानां ज्ञानार्थत्वात्, इन्वतः=युगे युगे प्रेरयतः, तत् तस्मात् कारणात्, आत्=अकारवाची नारायणात्, अ इति ब्रह्म इति श्रुतेः, अकारसर्वगात्म परब्रह्माभिधायकः इति पुराणोक्तेः । यविष्टः=कनिष्टः श्रीमध्वाचार्यः, इत्=इदानीं दृश्यमानरूपेणापि, घृणा=सज्जनेषु कृपावान्, शुचिः=गर्भवासादिदोषरहितः अभवत् । अथवा यविष्टः=नित्ययुवा, अतिशयेन युवा । युवन् शब्दस्य इष्टन् प्रत्यये रूपम्। सायणभाष्येऽपि *बोधा मे अस्य वचसो यविष्ट* इति वाक्यव्याख्यानावसरे *हे यविष्ट युवतम* इति व्याख्यातम्। *यौवनं नित्यमेतस्य मुक्तस्येति युवा स च* इति अनुव्याक्यानेऽपि (3-4-4) श्रीमध्वाचार्यैः अपि व्याख्यातम् ।

श्रीमन्तं शशिवदनं कुशेशयाक्षं
गम्भीरस्वरमतिदिव्यलक्षणाढ्यम् ।
पश्यन्तः स्वगुरुमथाऽर्चयन् कृतार्थाः
वाप्या तं हरिरितिपूर्णकाममेते ॥

इति श्रीसुमध्वविजये अन्त्यकालेऽपि श्रीमदाचार्यरूपस्य सु-

न्दरत्वेन वर्णितम् । तस्मात् श्रीमदाचार्यः अतिशयेन यौवन-वान् भवति ।

18) आदिन्मातॄराविशद्यास्वाशुचिः
अहिंस्यमान उर्विया विवावृधे ।
अनु यत्पूर्वा अरुहत्सनाजुवो
निनव्यसीष्ववरासु धावते ।1-141-5 ।

पदपाठः - आत् । इत् । मातॄः । आ । आविशत् । यासु । आ । शुचिः । अहिंस्यमानः । उर्विया । वि । ववृधे ॥ अनु । यत् । पूर्वाः । अरुहत् । सनाऽजुवः । नि । नव्यसीषु । अवरासु । धावते ।

अत्रश्रीरघूत्तमतीर्थाः - बृहदारण्यकभावबोधे

आदिति । यतोवायुरादित् प्रकृतलक्ष्मीनारायणप्रेरणादेवमातृराविशत् नपुनरस्यगर्भवासादिनिमित्तंविकर्मास्तीतिभावः । यासुमातृषु आसमंताच्छुचिः शुचित्वमेवाह । उर्वियेति । उर्वियोत्कृष्टया गर्भवासपीडया अहिंस्यमानोऽबाध्यमानोविवावृधेविशेषेणाभिवृद्धोऽभूदित्यर्थः । सप्तशिवासुमातृष्वित्युक्तं तत्रविशेषमाह । अन्विति । सनाजुवःसदातनंभगवंतंजुषंतेप्रतिपादयंतीतिसनाजुवः पूर्वऋगाद्या आरुहदिति यत् तदनुक्रमादेव उपक्रमादेव उपक्रमादिलिङ्गैः क्रमेणैवऋगादिवेदचतुष्टयार्थं विचारयामासेत्यर्थः । नव्यसीषु पौरेषेयत्वेननूतनासु अवरासुत्रिषु इतिहासपुराणपंचरात्राख्यासुमातृषुनिधावते उपक्रमादिपर्यालोचनं विनैव शीघ्रमेवार्थंविचारयतीत्यर्थः ।

अत्रश्रीताम्रपर्णीश्रीनिवासाचार्याः - ऐतरेयभाष्यरत्नमालायां

आत् इत् आभ्यांलक्ष्मीनारायणाभ्यां तत्प्रसादादेव । मातृःअंजनाकुंतीमध्यगेहस्त्रिय आविशत् प्रविष्टो । यासुमातृषु आ समन्ताच्छुचिः शुद्धः । अहिंस्यमानः गर्भपीडारहितः । उर्विया उरुत्वेन विववृधे । यद्वा श्रीमध्वदेवः आत् इत् लक्ष्मीनारायणप्रसादान्मातृः ऋगादिविद्या आविशत् । यासुविद्यासुआशुचिरज्ञानादिदोषरहितः अहिंस्यमानः पूर्वपक्षिप्रयुक्तप्रमाणाभासैरपीड्यमान उरुत्वेन विववृधे । तत्रपूर्वा अनादिभूताः सनाजुवः जुगतौ सनातनत्वेनास्थिताः । यद्वासनातनंभगवंतं जुषंते सेवंते प्रतिपादयंतीति सनाजुवः । ऋगाद्या अपौरुषेयविद्या अन्वारुहत् उपक्रमादिकमनुसृत्यानुक्रमेणस्ववचनप्रमाणाभ्यां पदार्थतात्पर्यकथनपूर्वं कृतत्वात् । नव्यसीषु नवीनास्ववरासु पौरुषेयत्वेन जात्यानीचासु भारतभागवतादिविद्यासुनिधावते । तात्पर्यतोव्याख्यातीतिभावः ।

अत्रश्रीसुब्बरायदासार्याः - ब्रह्मसूत्रमणिमञ्जर्यां

वायोर्महिमान्तरमाह - आदिति ॥ मातरिश्वेति वर्तते मातरिश्वा वायुः आदित् नारायणादेव तत्प्रसादेनेति यावत् मातृः श्रीभूदुर्गाख्याः जयाशान्त्याद्याख्याः अञ्जनाद्याख्याश्च मातृराविशत् तासामुदरेषु प्रविष्टवान् मातरिश्वा आदित् नारायणादेव यासु मातृषु आशुचि आ समन्तात् सम्यक् शुचिः सन् उर्विया उत्कृष्टशक्त्या अहिंस्यमानः विवावृधे विशेषेणववृधे । मातरिश्वा सनाजुवः विष्णुसेवारताः यत्पूर्वाः यासु मातृषु पूर्वाः पूर्वपूर्वाः अनुक्रमेण श्रीभूप्रभृतिमातृषु अरुहत् जातः । नव्यसीषु नवीनासु अवरासु अञ्जनादिमातृषु निधावते व्युत्क्रमेण शीघ्रं जननं प्राप्नोति । यद्वा आदित् मातृः ऋगादिसप्तप्रमाणानि आविशत्

विचारयामास ।यासु मातृषु उरुविया उत्कृष्टज्ञानादिमच्छक्त्या अहिंस्यमानः अज्ञानादिदोषैरस्पृष्टः ।आशुचिर्यथावस्थितज्ञानादि मान् विवावृधे रुद्रादिभ्योऽधिकज्ञानवानभवत् । तत्प्रकारमाह - अन्विति॥ सनाजुवः सनातनाविष्णुप्रतिपादिकाः यत् यासु मातृषु मध्ये पूर्वाः ऋगाद्याश्चतस्रः अनु उपक्रमाद्यनुकूलेन अरुहत् ज्ञातवान् । नव्यसीषु नवीनासु अवरासु वेदानन्तरभूतासु इतिहासपुराणपञ्चरात्रेषु नितरां धावते शीघ्रं जानातीति ॥

अत्रश्रीजनार्दनभट्टाः - भारततात्पर्यनिर्णयव्याख्याने

यस्मादादिदस्मान्नारायणादेव तत्प्रेरणयैवमातृश्रीभूदुर्गाजयाशांत्याद्यंजनादि मातॄश्चाविशदस्मादेवयासु मातृषु आ समंताच्छुचिरुर्वियाकृष्ठशक्त्या अहिंस्यमानः । विवावृधेविशेषेणववृधे यद्यासु मातृषु पूर्वाश्रीआद्या अनु अनुक्रमेण रुहत् जातः ।तासु ज्येष्ठाद्यनुक्रमेणजातः ।रुहजन्मनि प्रादुर्भावेति धातोः ।स्वयंभुप्राणातमशेषेत्युक्तत्वात् ।कथं भूता सनाजुवः विष्णुसेवारताः । नव्यसीषु नूतनदेहवत्वान्नूतनासु अवतारासु स्वतःनीचासु निधावतेव्युत्क्रमेणधर्मानंतरंशीघ्रं जननं प्राप्नोति । संस्पर्शमात्रादभवत् इत्युक्तत्वात् ।यद्वा आदिन्मातृः ऋगादिसप्तमातृ आविशद्विचारयामास उर्व्या उत्कृष्टज्ञानादिमच्छक्त्या अहिंस्यमानः अज्ञानादिदोषैरस्पृष्टः । आ समंताच्छुचिर्यथावास्तितज्ञानत्वाच्छुचिर्विवावृधे रुद्रादिभ्योऽधिकंज्ञातवान् । ज्ञानसंपादनप्रकारमाह ।अन्विति ।यद्यासुमध्ये पूर्वाऋगाद्याश्चतस्रः ता अनुरूपक्रमाद्यनुकूलेन आरुहत् ज्ञातवान् कथं भूताः सनंपुराणं सनातनं विष्णुं जुषंति प्रतिपादयंतीति ।सनंपुरातनं कलंजुषांतीति । अपौरुषेया इति वा नव्यसीषु पौरुषेयत्वेन

नूतनासू अवतारासुवेदादनंतरासु इतिहासपुराणपंचरात्राख्यासु नितरां धावते वेदार्थज्ञानेनैतदर्थस्य जातत्वाच्छीघ्रं जानाति ।

गोमञ्जरी

आत् इत्= अशब्दवाच्यात् नारायणादेव, इत्=एव, तत्प्रसादादेव, आ= युगत्रये=त्रेतायुगमारभ्य, मातृः=श्रीभूदुर्गाद्याः श्रीरमारूपाः तथा अञ्जनाकुन्ती विप्रपत्नीः यद्वा श्रीभूदुर्गादि लक्ष्मीसन्निधानयुक्ताः अञ्जनाद्याः, आविशत्=यः वायुः विवेश, यासु=पूर्वोक्तमातृषु, उर्विया=उत्कृष्टशक्त्या । उरु शब्दात् तृतीयायां आङः *इयाडियाजीकाराणां उपसंख्यानं* (वा 4308) इति इयाडादेशे रूपं, आ=समन्तात् सम्यक्, शुचिः=शुद्धः गर्भवासादिदोषहीनः, अहिंस्यमानः=दुष्कर्मणा, उदरस्थ जन्त्वादिना वा अपीड्यमानः सन्, यावद्दुःखरहितः, वि=विशेषेण, ववृधे=अभिवृद्धोऽभूत्, (सः) =तादृशः अवतारत्रयोपेतः वायुः, यत्=यस्मात् कारणात्, सनाजुवः=सना=सनातनं श्रीमन्नारायणं, जुषन्ती=प्रीत्या सेवन्ते इति श्रीहरिं सेवयित्रीः, पूर्वाः=जयाशान्त्यादिरमारूपाः, अनु=अनुसृत्य, अनुग्रहभाग्भूत्वा, अरुहत्=सूत्रादिरूपेण अवतारार्थं प्रविष्टो अभवत् । (तस्मात्) अवरासु=रमारूपेभ्यः अत्यन्तंनीचासु, नव्यसीषु=नूतनतया स्वयं जातासु अञ्जनाद्यासु, नि=निःशङ्कं, धावते=व्युत्क्रमादिना प्रविशति। यदि रमारूपासु एव प्रविष्टः अनुग्रहभाक् चाभवत्-अयं तदवरासु निःशङ्कं लीलया तासां मातृत्वख्यात्यर्थं प्रविशतीति किमु वक्तव्यमित्यर्थः ।अथवा ।

यत्=यस्मात् कारणात्, सनाजुवः=श्रीमन्नारायणं परम-

मुख्यया वृत्या प्रतिपादयित्रीः, पूर्वाः=अपौरुषेया पूर्वं विद्यमानाः, श्रुतयः=वेदोपनिषदः, अनु=तात्पर्यलिङ्गाद्यनुसारेण, विष्णुपरत्वाद्यानुकूल्येन वा, अरूहत्=तत्पारं अपश्यत् साकल्येन वेदार्थान् स्वयं जज्ञौ इति यावत् ।तस्मात् ।अवरासु=यथाश्रुतरीत्यापि विष्ण्वैकपरासु ( अः =विष्णुः, सः वरः उत्तमत्वेन प्रतिपाद्यः यासु ताः ), नव्यासीषु=श्रीवेदव्यासप्रणीतासु पौरुषेयासु भारतादिविद्यासु, नि=नितरां = निःशङ्कं स्वच्छन्दं वा, धावते= व्याख्यानादिना तात्पर्यनिर्णायको भवति ।

यदि लोकप्रसिद्धकोशादिना असुलभार्थयुक्तासु श्रुतिषु अपि पारदृश्वाऽयमभूत् ततः किमु स्वयं यथाश्रुतरीत्याऽपि विष्णुप्रतिपादकभारतादिषु तात्पर्यनिर्णयादिकृत्वा व्याख्यानादिना विहरतीति वक्तव्यं इत्यर्थः ।

19) तां सुते कीर्तिं मघवन् महित्वा
यन् त्वा भीते रोदसी अह्वयेताम् ।
प्रावो देवाँ आतिरो दासमोजः
प्रजायै त्वस्यै यदशिक्ष इन्द्र ।10-54-1 ।

पदपाठः - तां । सु । ते । कीर्तिं । मघऽवन् । महित्वा । यत् । त्वा । भीते इति । रोदसी इति । अह्वयेताम् ॥ प्र । आवः । देवां । आतिरो । दासं । ओजः । प्रजायै । त्वस्यै । यत् । अशिक्षः । इन्द्र ।

गोमञ्जरी

हे मघवन्=अणिमाद्यैश्वर्यपुर्णः ! बह्वन्नशक्तिमान् । हे इन्द्र= जीवश्रेष्ठ जीवोत्तम इति यावत् । यत्=यदा, भीते=सांसारिकदुःखादिभ्यो भयग्रस्ते, रोदसी=दिविस्थित, भूस्थप्रजे, तां=पूर्वोत्तरत्र प्रसिद्धां, सु कीर्तिं= शोभनां कीर्तिं, महित्वा=ज्ञात्वा संपूज्य अयमस्मद्दुद्धारायालमिति तद्यशः श्रवणं निमित्तीकृत्येति यावत्, त्वा=त्वां, अह्वयेतां=आह्वानं कृतवत्यौ, (तदा) यत्=यतः, (त्वं) देवाम्=देवान्, प्रावः=प्रकर्षेणा कान्तिसंपन्नानकरोः अरक्षः इति वा, दासं= वेदादिखण्डनपरं दुर्वादिनं जनं, आतिरः=तिरश्चक्रिथ, प्रतिखण्डनमकार्षीः इत्यर्थः, त्वस्यै=एकस्यै, त्रिविध प्रजानां मध्ये सात्विकप्रकृतये इत्यर्थः, ओजः=स्वयोग्यप्राप्त्यर्थं अपेक्षितं सामर्थ्यं बलज्ञानादि, अशिक्षः=उपदेशादिना शिक्षयामासिथ अतः तां ईदृशीं ते कीर्तिं इति भावः ।

प्रथमावतारे सानुजं रावणं, द्वितीयावतारे सानुजं दुर्योधनं, तृतीयावतारे मायिगणान् इति यावत् । यत् यस्मात् निमित्तात् दैवासुरभेदेन द्विविधप्रजासमुदायमध्ये, त्वस्यै एकस्यै, दैव्यै प्रजायै सात्विकजनाय, ओजः सात्विकसामर्थ्यं, अशिक्षः शिक्षितवान् । तां कीर्तिं कीर्तयामि इत्यन्वयः । अथवा तु अस्यै इति पदच्छेदः । अस्यै सात्विक प्रजायै, तु एव इत्यन्वयः । ननु पदपाठविरोधः । न अर्थानुसारेण पदपाठस्य नानाप्रकारेण स्वीकरणस्य दृष्टत्वात् । तस्मादेव *ईशावास्यम्* इत्यत्र ईशा, आवास्यमिति पदपाठेऽपि भगवत्पादैः एकपदत्वेन व्याख्यानं कृतम् । *शुभस्पती*त्यत्रापि एवमेव अर्थः

स्वीकृतः । *तत्त्वमसि* इत्यत्र अतत्वमसि इति विच्छिद्य अर्थोऽपि उपपादितः । *सम्भूतिं* इत्यत्रापि परैः असम्भूतिं इति पाठमङ्गीकृत्य अर्थः उक्तः । तस्मादेव क्वचित् समये पदपाठः व्यत्यस्तः श्रीमध्वाचार्यैः ।

20) यदचरस्तन्वा वावृधानो
बलानीन्द्र प्रब्रुवाणो जनेषु ।
मायेत् सा ते यानि युद्धान्याहुः
नाद्यशत्रुं ननु पुराविवित्से । 10-54-2 ।

पदपाठः - यत् । अचरः । तन्वा । वावृधानः । बलानि । इन्द्र प्रऽब्रुवाणः । जनेषु ॥ माया । इत् । सा । ते । यानि । युद्धानि । आहुः । न । अद्य । शत्रुं । ननु । पुरा । विवित्से ।

गोमञ्जरी

हे इन्द्र= परमसमर्थ, श्री मध्वः, तन्वा=शरीरेण पर्वतलंघने, वानरेन्द्र इव, उक्तं हि सुमध्वविजये (6-54) -

वानरेन्द्र इव वायुजवोऽसौ भीमसेन इव दानवभीमः ।
उल्ललास गिरिपुङ्गवशृङ्गे स व्रजन् वृजिननाशननामा ॥

बलरूपेण निन्ये तां गिरिमिव वानरीकृतात्मा इति वचनात्, अणिमाद्यैश्वर्येण, अदृष्टगविरप्यभुनृपमण्डलैरुद्युतैः न इति वाक्यात् । स्तोत्रेण वायुस्तुत्यादिस्तोत्रेण । वावृधानः=वर्धमानः सन्, जनेषु=भक्तजनेषु, बलानि=सामर्थ्यानि, प्रब्रुवाणः=प्रकर्षेण कथयन्, इति । श्रीनारायणस्य गुणान्

भक्तजनेषु वर्णयन् इति वा । यद् अचरः=यत् त्वं संचारं कृतवान् इति यद् अस्ति, ते=तव, सा=गतिः, माया इत्=विनोद मात्र मेव, किंच, यानि=यानि, युद्धानि=परैः शत्रुभिः कृतानि वाग्युद्धादीनि व्यापाराणि, तानि कार्याणि, आहुः=विनोदमात्रमिति ऋषयः वदन्ति, अद्य=इदानीं अपि, शत्रुं=अरिं, रिपुं, न विवित्से=न लभसे, पुरा ननु=पूर्वमपि न, न केवलं इदानीं शत्रुणां अभावः किन्तु सर्वकालेषु अपि तव प्रति योद्धा नास्त्येव इत्यर्थः । श्रीमध्वाचार्यस्य वा तत्कृतशास्त्रस्य वा दोषवक्तारः सर्वदा नास्त्येव, किं च ये दोषान् वदन्ति ते दोषाभास एव । तस्मात् श्रीमध्वस्य वा तत्कृतग्रन्थानां वा खण्डने न प्रयत्नः कार्यः इति भावः ।

यद्वा । यद् अचरः=यद् लोकेषु विशेषेण भूमण्डले संचारमकरोः, ते=तव, सा=गतिः, माया इत्=ईश्वरेच्छा एव=तदनुसारिण्येव त्वं भगवदाज्ञां विना न किञ्चित् करोषीत्यर्थः । अन्यथा समुद्रलङ्घने शरीरवर्धनं दुर्जनराक्षसादि हननार्थं बलादिवर्धनं, दुर्वादिजयार्थं ज्ञानवर्धनं च विनाऽपि तत्तत्कार्यं कर्तुं क्षमोऽपि वर्धनादि व्यर्थमापद्येत ॥ तथा करणे हरेराज्ञा एव बीजम् । यानि युद्धानि=युद्धकाण्डीयं रामरावाणयुद्धं, महाभारत युद्धं तथा दुर्वादिभिः वाग्युद्धं च, ते=तव संबन्धीनि इति, आहुः=तद्विदः ब्रुवन्ति, तानि माया इत्=ईश्वरेच्छा प्रयुक्तान्येव । एवं युद्धाद्यकृत्वाऽपि तत्कार्यसिद्धेः तत्साध्यत्वात् । (यतः) ननु=निश्चयेन, हे इन्द्र=बलज्ञानादिसामर्थ्यैः पूर्णः, (त्वं) तन्वा=शरिरेण, बलेन, ज्ञानेन, ऐश्वर्येण स्तुत्या च, वावृधान=विशेषेण वर्धमानः सन्, जनेषु=सात्विकजनेषु तानुद्दिश्येति यावत्, बलानि=सामर्थ्यादीनि स्वस्य श्रीहरेश्च,

प्रब्रुवाणः=प्रवचनं कुर्वन्, हर्युपासनार्थं उपदेशस्यावश्यकतावत् प्राणोपासनार्थमपि तस्यावश्यकत्वात्, मोक्षार्थं श्रीहर्युपासनावत्, श्रीमुख्यप्राणोपासाया अप्यवर्जनीयत्वाच्चेदं तदुक्तं भागवततात्पर्य निर्णये (11 स्कं-15 अ-32,33)

उपास्य वायुं प्रथमं वायौ सृष्टपरोक्षिते ।
अनुज्ञातः ततस्तद्वं तत्र तत्र हरिं स्मरेत् ।
कृत्वाऽपरोक्षकं तं चापि काले काले स्मरेत्पुनः ।
अभीष्टकार्यसिद्धिः स्यात् तस्य नास्त्यत्र संशयः ।
अकामो यदि वायुं च ध्यात्वा दृष्ट्वा हरिं तथा ।
न किंचित् कामयेत्पश्यात् स क्षिप्रं मुक्तिमेष्यति ।
यदि योगैः फलं भुंक्ते पुनः काममुपास्य तु ।
तेनैव क्रमयोगेन वायुं दृष्ट्वा हरिं तथा ।
एष्टव्या मुक्तिपदवी नान्यथा तु कथंचन ।इति

पुरा=पूर्वं, तथा अद्य=इदानीमपि, त्वं शत्रुं=रिपुं, न विवित्से=कमपि शत्रुत्वेन नपश्यति, विपूर्वकात् विद ज्ञान लट् मध्यमे रूपं, अतः युद्धमकृत्वापि वैरिहननेसमर्थः त्वं युद्धमकरोः विश्णवाज्ञया तत्कृतवान् ।

अत्र माया इत् इत्यस्य माया मृषैवेति अर्थः परेण भाषितः । तन्न समीचीनम् । वायोः महिमानिरूपणसमये, तन्मतरीत्या इन्द्रस्य स्तुतिसमये, तस्य मिथ्यात्वोपपादनस्य विरुद्धत्वात् । जनेषु प्रब्रुवाणेति वाक्येन च तस्य मिथ्यात्वे, शिष्यजनेषु तद्वचनम् च असंगतं स्यात् ।तस्मात् *मायेत्* इति पदस्य विनोदमात्रं न क्लेशदायकमित्येवार्थः स्वीकरणीयः ।

वायोः महिमा न केनापि प्राप्तुं अलमित्याह-

21) क उनुते महिमनः समस्यास्मत्
पूर्वे ऋषयोऽन्तमापुः ।
यन्मातरं च पितरं च
साकमजनयथास्तन्वः स्वायाः । 10-54-3 ।

पदपाठः - के । उं इति । नु । ते । महिमनः । समस्य । अस्मत् । पूर्वे । ऋषयः । अन्तं । आपुः ॥ यत् । मातरं । च । पितरं । च । साकं । अजनयथाः । तन्वः । स्वायाः ।

गोमञ्जरी

हे मध्व, समस्य=ज्ञानादि अनन्तगुणैः पूर्णस्य, ते=तव, महिमनः=महिम्नः (एकस्यापि) अन्तं=पारं, अस्मत्=अस्मत्तः, पूर्वे=पूर्वकालीनाः, ऋषयः=ज्ञानिनः, के आपुः नु ऊ = न कोऽपीत्यर्थः, नकोऽपि ऋषिः त्वन्महिमान्तं ज्ञातवान् इत्यर्थः यदिज्ञातुमपि नसमर्थः तर्हि किमुत प्राप्तुं ?, यत्=यस्य, मातरं च=जगन्मातरं, त्वन्मातरं, श्रीरमां त्वद्ज्ञातारं श्रीरमां नारायणंच , साकं=शुद्धानन्दपूर्णं, पितरं च=जगज्जनकं, त्वज्जनकं श्रीहरिं जगत्पालकं तवापिरक्षितारं श्रीहरिं तथा तादृशीं लक्ष्मीं च, साकं=श्रीरमां हरिणा सहैव, स्वायाः=स्वस्याः, तन्वः=अवतारात् निमित्तात्, अजनयथाः=त्वं प्रकत्यकृष्ठाः प्रकटीकृतत्वात्, तस्य ते इत्यन्वयः ।

22) चत्वारि ते असुर्याणि नाम
अदाभ्यानि महिषस्य सन्ति ।

त्वमङ्ग तानि विश्वानि वित्से
येभिः कर्माणि मघवन् चकर्थ । 10-54-4 ।

पदपाठः - चत्वारि । ते । असुर्याणि । नाम । अदाभ्यानि । महिषस्य । सन्ति ॥ त्वं । अङ्ग । तानि । विश्वानि । वित्से । येभिः । कर्माणि । मघऽवन् । चकर्थ ।

गोमञ्जरी

हे मघवन्= यज्ञपते, महिषस्य=पूजितत्वेन त्वयि सर्वदा सरतः श्रीहरेः, चत्वारि=रूपाणि, रामकृष्णवेदव्यासनारायणात्मकानि अनिरुद्धप्रद्युम्नसंकर्षणवासुदेवात्मकानि वा, ते=तव, असुर्यणि=असुर्भूत्वा रममाणानि नियामकानि च, तथा अदाभ्यानि=त्वदनधीनानि, नाम=प्रसिद्धानि, सन्ति, हे अङ्ग=त्वं, तानि विश्वानि=सर्वाणि, वित्से=जानासि अन्तर्यामिणं त्वन्नियामकं आत्मानं सर्वदा पश्यसि इत्यर्थः, येभिः=यैः, त्वं कर्माणि=सर्वावतारकार्याणि तथा सर्वजीव नियमानादि रूपाणि, चकर्थ=कृतवानभूः । उपलक्षणया करोषि करिष्यसि इत्यर्थः । अत्र सर्वत्र वेदेषु विद्यमानानि प्रथमपदानि परित्यज्य सम्बुद्ध्यन्त पदस्यैव प्रथमव्याख्याने को हेतुरिति चेत् उच्यते । सर्वत्र लोके वा वेदे प्रथमतः सम्बोध्य पश्चाद् उच्यते । तस्मात् तत्पदस्य प्राधान्यं वर्तते । अतः तस्यैव व्याख्यानं प्रथमतः क्रियते इति । ननु मघवन् शब्दस्य कथं यज्ञपत्यर्थत्वमिति चेत् तं त्वा एतं मघवन्तं सन्तं मघवानित्याचक्षते परोक्ष्येण । परोक्षप्रिया इव हि देवाप्रत्यक्षद्विषः । इति वाक्ये मघशब्दस्य यज्ञवाच्यत्वमङ्गीकृतं । ननु तथासति *मखवत्* इति स्यात् न तु मघवदिति चेन्न *तृतीयोऽतिशये*

इत्यतः खकारस्य घकारः तस्मात् न कोऽपि दोषः ।

23) त्वं विश्वा दधिषे केवलानि
यान्याविर्या च गुहा वसूनि ।
काममिन्मे मघवन् मावितारीः
त्वमाज्ञाता त्वमिन्द्रासि दाता ।10-54-5।

पदपाठः - त्वं । विश्वा । दधिषे । केवलानि । यानि । आविः । या । च । गुहा । वसूनि ॥ कामं । इत् । मे । मघऽवन् । मा । वि । तारीः । त्वं । अऽज्ञाता । त्वं । इन्द्र । असि । दाता ।

गोमञ्जरी

हे इन्द्र ऐश्वर्यवन्, त्वं केवलानि अन्येषां असाधाराणानि, केवलं त्वयैव दातुं शक्यानि, विश्वा समस्तानि, यान्याविः ब्राह्म्यान्यैहिकानि च प्रकटानि, गुहा निगूढानि, अन्तरेव विद्यमानानि, ज्ञानादीनि, वसूनि ऐश्वर्याणि, दधिषे धारयसि। यस्मादेवं तस्मात् हे मघवन् सम्पत् स्वामिन् त्वं मे मम कामं कामितं मा वितारीः, मा हिंसीः, त्वं अज्ञाता ममाभिलषितस्य ज्ञाता असि, त्वं त्वमेव दाता असि ।

24) यो अदधाज्ज्योतिषि ज्योतिरन्तर्यो
असृजन्मधुना सं मधूनि ।
अध प्रियं शूषमिन्द्राय मन्म
ब्रह्मकृतो बृहदुक्थादवाचि । 10-54-6 ।

पदपाठः - यः । अदधात् । ज्योतिषि । ज्योतिः । अन्तः । यः । असृजत् । मधुना । सं । मधूनि ॥ अध । प्रियं । शूषं । इन्द्राय । मन्म । ब्रह्मऽकृतः । बृहत्ऽउक्तात् । अवाचि ।

गोमञ्जरी

यः वायुः, ज्योतिषि नक्षत्रादिज्योतिस्वरूपेषु पदार्थेषु, ज्योतिः ज्योतिष्प्रदं नारायणं, अन्तः स्वहृदये, अदधात्=धारितवान् । यः मध्वः, मधुना सुन्दरव्याख्यानेन, मधूनि प्रमेयजातानि, सम् असृजत् प्रकटितवान् । श्री नारायणसन्निधानेनैव वेदशास्त्रादीनां अर्थं प्रकटितवान् इत्यर्थः । तमेव भान्तमनुभाति सर्वमिति वचनात् । *अनुकृतेः तस्य चेति* सूत्राच्च (1-3-22)। अध इदानीं उक्तात् सर्वेषां उत्थापकत्वात् उक्तशब्दवाच्यात्, ब्रह्मकृतः ब्रह्मसूत्रकृतात्, वेदव्यासस्य सकाशात्, मन्म मननीयं, शूषं अज्ञानादिनाशकं, प्रियं अत्यन्तप्रीत्यास्पदं शास्त्रं, श्रुत्वा, यः इन्द्राय श्रेष्ठाय, सज्जनवर्गे श्रेष्ठाय, शिष्याय इत्यर्थः, इन्द्रशब्दस्य श्रेष्ठ वाचित्वं वा प्रथम वाचित्वं वा ज्ञेयम् , ज्ञानादियोग्ययुक्ताय शिष्याय अवाचि उक्तवान् । छान्दसः व्यत्यासः । श्रीमध्वाचार्यः प्रियं शास्त्रं, पण्डिताचार्यप्रभृतीनां योग्यशिष्याणां आदरेण स्वयं नारायणात् श्रुतं शास्त्रं व्याख्यातवान् इति भावः ।

25) अञ्जन्ति त्वामध्वरे देवयन्तो
वनस्पते मधुना दैव्येन ।
यदूर्ध्वस्तिष्टा द्रविणेह धत्ताद्
यद्वा क्षयो मातुरस्या उपस्थे । 3-8-1 ।

पदपाठः - अञ्जन्ति । त्वां । अध्वरे । देवयन्तः । वनस्पते । मधुना । दैव्येन । यत् । ऊर्ध्वः । तिष्टाः । द्रविणा । इह । धत्तात् । यत् । वा । क्षयः । मातुः । अस्याः । उपस्थे ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे वनस्पते - हे अधिकारिश्रेष्ठ = मध्व!, वन षणसंभक्तौ वनंति संभजन्तीति । वनाः परमात्मभक्ताः, *वनं तु सात्विको वासः* इति भागवतोक्तेः (11-24-24) तेषां पतिः । तत्संबुद्धिः । *पारस्करित्वात् सुट्* । इह अधिकारिवर्गे श्रेष्ठ इत्यर्थः । देवयन्तः देवं क्रीडादिगुणविशिष्टं नारायणं यंतः= गच्छन्तः वर्तमानसामीप्ये वर्तमान व्यपदेशः, पिपासवः मुमुक्षवः इति यावत् । यद्वा देवं श्रीहरिं इच्छन्ति इति देवयन्तः, सुप आत्मनः क्यचिति क्यजन्तात् लटः शत्रादेशः । त्वां दैव्येन देवसंबन्धिना मधुना आदित्येन सह, असौ वाऽदित्यो देवमधु इति श्रुतेः । अध्वरे परमात्मपूजाख्ययज्ञे, अञ्जन्ति शरणं गच्छन्तीत्यर्थः । अञ्ज व्यक्तिभक्षणकान्तिगतिषु इति धातोरिदं रूपम् । उपस्थे परमात्मोपदेशार्थं सूर्येण सर्वेऽपि देवादयः मुमुक्षुवर्गाः वायुं प्रार्थयन्त इति यावत् । वानराणां प्रार्थना हनुमन्तं प्रति, पाण्डवानां च प्रार्थनं भीमसेनं प्रति, तथैव ज्ञानिनां च प्रार्थनं श्रीमध्वाचार्यं प्रति । पुराणादिषु प्रसिद्धा । अत्र -

एवं धर्मेषु नष्टेषु शास्त्रेषु च कलौ युगे ।
देवैर्विज्ञापितो विष्णुर्वायुमाज्ञापयिष्यति ॥
उद्धरस्व महाबाहो मम धर्मान् सनातनान् ।

इत्याज्ञप्तो भगवता कलौ वायुर्भविष्यति ॥
मध्वनामा यतिरसौ सच्छास्त्राणि करिष्यति ।
गीतायाश्चोपनिषदां भाष्याणि च करिष्यति ॥
निरसिष्यति पाषण्डान् सच्छास्त्राणि महामतिः ।
स्थापयिष्यति सद्धर्मान् सच्छास्त्रं व्याकरिष्यति ॥
श्रोष्यन्ति मुनयः सर्वे शुकाद्याः देवरूपिणः ।

इत्यादिवचनानि कूर्मपुराणस्थानि प्रमाणानि भवन्ति । हे वायोः त्वं यद्वूर्ध्वस्तिष्टः, मूलरूपेण ऊर्ध्वं सत्यलोकेषु अस्तीति यावत् । अस्याः मातुः परिदृश्यमानो पृथिव्या उपस्थ उपरिभागे वा=एव, अक्षयः निवससि अवताररूपैरिति यावत्, क्षीङ् अधीवासे । तस्मादेव आनन्दतीर्थस्य बदरीकाश्रमप्रवेश इत्येवोच्यते ।

स योगी मातरिश्वांशो मध्वो ध्वस्तदुरागमः ।
स्वयमभ्यर्च्य देवांशो कृष्णं कलिमलापहम् ।
नवम्यां प्रातरेवासौ माधे मकरगे रवौ ।
प्रतिपेदे बदरिकां शुक्लपक्षे सतां गतिः ॥

इत्यादि स्कांदपुराणवचनानि चात्र प्रमाणानि भवन्ति । इह शरणागतेषु भक्तेषु, द्रविणा तदभीष्टानि धनानि, ज्ञानादीनि, धत्तात् धेहि ददासीत्यर्थः ।

26) समिद्धस्य श्रयमाणः पुरस्तात्
ब्रह्म वन्वानो अजरं सुवीरं ।
आरे अस्मदमतिं बाधमान
उच्छ्रयस्व महते सौभगाय । 3-8-3 ।

पदपाठः - समिद्धस्य । श्रयमाणः । पुरस्तात् । ब्रह्म । वन्वानः । अजरं । सुवीरं ॥ आरे । अस्मत् । अमतिं । बाधमानः । उत् । श्रयस्व । महते । सौभगाय ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे वायो, त्वं अस्मत् अस्माकं महते उत्कर्षाय, सौभगाय सौभाग्याय, उच्छ्रयस्व उच्छ्रित उद्युक्तः सन्नद्धो भवेत्यर्थः । न केवलमिष्टप्राप्तिस्त्वदायत्ता अपि अनिष्टनिवृत्तिरपीत्याशयेन विशिनष्टि बाधमान इति ॥ आरे दूरे समीपे च । अस्माकं अमतिं सर्वसंसाराद्यनर्थनिदानभूतं अज्ञानं, बाधमानः समूले घातयन्नित्यर्थः । पुनः कीदृशस्त्वं समिद्धस्य सम्यक् सर्वोत्तमत्वेन रुद्धस्य दीप्तस्य प्रकाशमानस्य परमात्मनः, पुरस्तात् उग्रे, श्रयमाणः तिष्ठन्नित्यर्थः । किं कुर्वाणः अजरं जरामरणादिसकलदोषविदूरं, सुवीरं शौर्यौदार्याद्यनन्तगुणपूर्णं, अत एव ब्रह्म ब्रह्मशब्दवाच्यं नारायणं वन्वानः भजमानः सन् उच्छ्रयस्व इत्यनेनान्वयः । यद्वा यः सुवीरं सुतरां विशिष्टं सर्वोत्तमं नारायणं ईरयति प्रतिपादयतीति, अजरं अपौरुषेयत्वात् अनादिनित्यं, ब्रह्म वेदराशिं वन्वानः सम्यक्शाखाविभागादिना विभजमानः, समिद्धस्य प्रकाशमानस्य वेदव्यासस्य पुरस्तात् अग्रे श्रयमाणः गुरूपसत्तिं कुर्वाणः, स्वयं अस्माकं अमतिं अज्ञानं, बाधमानः सन् सच्छास्त्रोपदेशेन ज्ञानादिसम्पत्तिरूपं, सौभाग्यं, धत्तात् देहि । अन्यत् सर्वं पूर्ववत् ।

27) उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि ।
सुमिती मीयमानो वर्चो धा यज्ञवाहसे । 3-8-3 ।

पदपाठः - उत् । श्रयस्व । वनस्पते । वर्ष्मन् । पृथिव्याः ।

अधि ॥ सुमिती । मीयमानः । वर्चः । धाः । यज्ञऽवाहसे ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे वनस्पते वायो, त्वं पृथिव्यां भूमेः वर्ष्मन् वर्ष्मणि शरीरे, अवतारेऽपि, अधि आधिक्येन, उच्छ्रयस्व, अत्युच्छ्रितस्तिष्ठसि । इतरेषां देवानां अवतारकाले शक्तिह्रासेपि तव त्ववतारकालेऽपि पुर्णशक्तिरेवेति भावः । सुमध्वविजये-

अत्र जन्मनि न यत्पठितं ते
जैत्र भाति कथमित्यमुनोक्ते ।
पूर्वजन्मसु हि वेद पुरेदं
सर्वमित्यभिमतबुद्धिरुवाच ॥ 4-53 ॥ इति

कीदृशः त्वं, सुमिती, सु शोभनं मितं प्रमितं । नपुंसकभावे क्तः । सम्यक्ज्ञानमित्यर्थः । तदस्यास्तीति सुमति, तृतीयाऽतिशये इति नियमेन यथार्थज्ञानवानित्यर्थः , तथा विधत्वेन, मीयमानः श्रुत्यादिषु प्रमीयमानः श्रुत्यादिप्रमाण सिद्धेत्यर्थः। एतादृशस्त्वं यज्ञवाहसे यज्ञो विष्णुः, *यज्ञो विष्णुः देवता* इति गीताभाष्योदाहृतश्रुतेः । तं वहति प्राप्नोति शरणं गच्छतीति तस्मै, भक्ताय वर्चः प्रकाशरूपं ज्ञानं, धाः अधाः धत्स इत्यर्थः ।

28) युवा सुवासः परिवीत आगात् स
उ श्रेयान् भवति जायमानः ।
तं धीरासः कवय उन्नयन्ति
स्वाध्यो उ मनसा देवयन्तः । 3-8-4 ।

पदपाठः - युवा । सुवासः । परिवीतः । आ । अगात् । सः । ॐ इति । श्रेयान् । भवति । जायमानः ॥ तं । धीरासः । कवयः । उत् । नयन्ति । सु । आध्यः । मनसा । देवयन्तः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

यः मुख्यप्राणो युवा अप्रतिहतयौवनः, सर्वदैकप्रकारकबलज्ञानादिमान्, परिवीतः यद्यपि सर्वैः शरीरैः परिवीतः, तथापि सुवासः शोभनेषु वसन् उत्तमाधिकारिष्वेवानुग्रह कुर्वन् आगात्=आगच्छत् । जायमानः अवतारं कुर्वन्, अथ च जायमान एव श्रेयान् भवति । उत्पत्तिविशिष्टज्ञानैश्वर्यादिमान्, न तु इतरवत् उत्पत्यनंतरं अध्ययनादिलब्धकिंचित्ज्ञानवानित्यर्थः, अत एव तं प्राणं, धीरासः धिया रममाणः कवयः, वामादिदेवाः, स्वाध्यः सुतरां आ सम्यक् ध्यायंतः मनसा मनोवाक्कायकर्मभिः देवयन्तः नारायणं शरणं गच्छन्तो, मुमुक्षवः, उन्नयंति उत्कृष्टतया स्तुवन्तीत्यर्थः ।

29) जातो जायते सुदिनत्वे अह्नां
समर्य आ विदथे वर्धमानः ।
पुनन्ति धीरा अपसो मनीषा
देवया विप्र उदियर्ति वाचम् । 3-8-5 ।

पद्पाठः - जातः । जायते । सुदिनऽत्वे । अह्नां । सऽमर्ये । आ । विदथे । वर्धमानः ॥ पुनंति । धीराः । अपसः । मनीषा । देवऽयाः । विप्रः । उत् । इयर्ति । वाचम् ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

सः मुख्यप्राणः यद्यपि जातः अवतीर्णः मध्वरूपेणेति शेषः । तथापि समर्ये मत्यैः सहितः मनुष्यलोके, मर्यमर्त्यशब्दयोः पर्यायत्वात् । आ जायते - उत्पन्नेभवति । किमर्थं जायत इत्यत आह विदथे ज्ञाने जाते सति, अह्नं सुदिनत्वे सुदिनत्वाय स्यात् तदर्थमिति । तादर्थ्यचतुर्थ्यर्थे सप्तमी । उक्तम् हि सुमध्वविजये (2-9)-

विज्ञानभानुमतिकालबलेनलीने
दुर्भाष्यसन्तमतसन्ततितो जनेऽन्धे ।

अत एव वर्धमानः सर्वदुर्वादिजयेनोत्कर्षं प्राप्तः । स्वयमपराजितश्चेति भावः ।

सर्वज्ञमन्यमनवेक्ष्य सकार्यवीर्यं
स्मेराननो भुवनजीवनमाबभाषे ॥ इति सुमध्वविजये 2-2

केन रूपेण जातः, विप्रः ब्राह्मणरूपेण जातः सन्, वाचं वेदवाक्यम् उदियर्ति उन्नयति । वेदशास्त्राणां स्वव्याख्यानेन उत्कर्षत्वं प्रापयति । तदुपदेषात् अर्पसः कर्मणः, अर्पस् शब्दस्य कर्मनामसु पाठम् । तथैव सायणभाष्येऽपि । धीराः उत्तमाधिकारिणः, पुनंति पूर्यन्ति, व्यत्ययेन श्ना । पूताः भवन्ति । मनीषा तत्त्वज्ञानेन, देवयाः देवं नारायणं देवमार्गेन यान्तीति देवयाः ज्ञानिनः, कर्मणान्तःकरणशुद्धौ सत्यां श्रवणमननादिज्ञानसम्पत्तौ जातायां परमात्मप्राप्तिरूपमोक्षभाजो भवतीति भावः । कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति,

*भाक्तं वानत्मावितत्वात् तथाहि दर्शयति* , इति प्रमाणानि (ब्र्-सू 3-1)।

30) यान् वो नरो देवयन्तो
निमिम्युर्वनस्पते स्वधितिर्वाततक्षे ।
ते देवासः स्वरवस्तस्थिवांसः
प्रजावदस्मे दिधिषन्तु रत्नम् ।3-8-6 ।

पदपाठः - यान् ।वः ।नरः ।देवऽयन्तः ।निऽमिम्युः ।वनस्पते ।स्वऽधितिः ।वा ।ततक्ष ॥ ते ।देवासः ।स्वरवः ।तस्थिवांसः। प्रजाऽवत् ।अस्मे इति। दिधिषन्तु ।रत्नम्।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे वनस्पते मुख्यप्राण, वः युष्मद्संबन्धिनः, यान् स्वरूपांशान्, स्वधितिः परमात्मा, स्वातन्त्र्येण धारणपोषणकर्तृत्वात् । धितिशब्दस्य धारणवाचित्वात् । अच्छेद्याभेद्यमपि स्वसामर्थ्येन, ततक्ष मूलरूपात् पृथक् चकार ।तस्मादेव तानंशान्, देवयन्तः परमात्मानं कामयमानाः, नरः मनुष्याः निमिम्युः हृदयगुहायां निचिक्षिपुः, *डुमिन् प्रक्षेपणे* इति धातोः निपूर्वकत्वे लिटिरूपम् ।ते देवासः, क्रीडादिगुणविशिष्टाः देवाः स्वरवः, सुः=शोभनः अरुः=ज्ञानं येषां ते स्वरवः ऋ गतौ - धातुः औणादिके उ प्रत्यये रूपम् ।नियमेन यथार्थज्ञानवन्तः तस्थिवांसः वाग्युद्धे स्थिराः परवादिभिरपराजिताः अस्मे अस्मभ्यं प्रजावत्=सन्ततियुक्तम् रत्नम् रमणीयं ऐहिकामुष्मिकं पुरुषार्थं दिधिषन्तु प्रयच्छन्तु ।इति मंत्रद्रष्टा ऋषिः मुख्यप्राणं प्रार्थयति ।

31) ये वृक्णासो अधि क्षमि
 निमितासो यतस्रुचः ।
ते नो व्यन्तु वार्यं
 देवत्रा क्षेत्रसाधसः । 3-8-7 ।

पदपाठः - ये । वृक्णासः । अधि । क्षमि । निऽमितासः । यतऽस्रुचः ॥ ते । नः । व्यन्तु । वार्यं । देवऽत्रा । क्षेत्रऽसाधसः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

ये वृक्णासः मूलरूपाद्विभक्ताः, *ओव्रश्चू छेदने* इति धातोः रूपम् । अत एव क्षमि पृथिव्यां, आतो धातोरित्यत्र *आत्* योगविभागादकारलोपः । अधि आधिक्येन, निमितासः प्रमिताः, यतस्त्रुचः यताः कर्मणि प्रवर्तिता स्रुचः यैस्ते, आत्मनोऽनुजं पूर्वाश्रमे, विष्णुतीर्थं होतारं विधाय यागाः कारिताः तत्र स्रुचः नियताः । उक्तं च सुमध्वविजये -

याज्यया समुचितानुवाक्यया
 सप्रवर्ग्यविभवैरभिष्टवैः ।
विश्वंवेतुरनुजोऽत्र होतृतां
 प्राप्य दैवततीरतोषयत् ॥ इति (9-48)

यद्वा यतस्त्रुचः मरुदंशत्वेनप्रतीताः अवताराः । यतस्त्रुचशब्दस्य निघंटौ मरुत्पर्यायतया पठितत्त्वात् । ते प्राणावताराः मध्वाचार्याः गौरवात् बहुवचनम् । नः अस्मत्संबन्धिनं

वार्यं स्वरूपावरकं लिंगदेहम् अज्ञानं वा व्यन्तु=अपसारयन्तु नाशयन्तु इति यावत् । कीदृशास्ते देवत्रा सर्वदेवेषु मध्ये क्षेत्रसाधसः क्षेत्रं शरीरं *इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते इत्युक्तेः* साधयन्तीति, राध साधसंसिद्धावात्यस्मात् औणादिकोऽसुन्प्रत्ययः । सर्वेषु तत्वाभिमानिषु सत्स्वपि यदीयरूपान्वयव्यतिरेकाभ्यां शरीरसिद्ध्यसिद्धी भवतः । अत एव ते प्रार्थनीया इति भावः ।

32) आदित्या रुद्रा वसवः सुनीथा
द्यावाक्षामा पृथिवी अन्तरिक्षम् ।
सजोषसो यज्ञमवन्तु देवाः
ऊर्ध्वं कृण्वन्त्वध्वरस्य केतुम् । 3-8-8 ।

पदपाठः - आदित्याः । रुद्राः । वसवः । सुनीथाः । द्यावाक्षामा । पृथिवी । अन्तरिक्षं ॥ सऽजोषसः । यज्ञं । अवंतु । देवाः । ऊर्ध्वं । कृण्वन्तु । अध्वरस्य । केतुं ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

अस्मदादीनां, मुख्यप्राणप्रसादोऽपि तत्त्वाभिमानिदेवानां प्रसादद्वारैव साध्यः इत्याशयेन तत्प्रार्थना अत्र क्रियते - आदित्याः इति । आदित्याः= मित्रादयो द्वादश आदित्याः, रुद्राः=पत्रतापादय एकादशरुद्राः, वसवः=अग्न्यादयः अष्टौ वसवः, पृथिवी=विस्तीर्णा=पृथुक्ता, द्यावाक्षामा=द्यावापृथिव्यौ=तदभिमानि गणपति धरशनैश्चरादयः । देवाः= (एते) देवाः, सुनीथाः=सन्मार्गे प्रवर्तकाः, सजोषसः=परस्परं ऐकमत्येन सङ्गताः प्रीताः सन्तः, यज्ञं=अस्माभिः क्रियमाणं

विष्णुपूजाख्यं यागं, अवन्तु=रक्षन्तु, अध्वरस्य=प्रकृतसर्व-यज्ञस्य, केतुं=ध्वजस्थानीयं अलंकारभुतं सर्वयज्ञफलभोक्तारं सर्वपूज्यं सर्वोत्तमम् विष्णुं, अथवा अध्वरस्य= यज्ञनामकस्य विष्णोः, केतुं= ज्ञापकमुपदेशादिना श्रीमुख्यप्राणं मध्वाचार्यं, ऊर्ध्वं= सर्वोत्तमं, अथवा सर्वजीवोत्तमम्, कृण्वन्तु=संपाद-यन्तु । तदीयानुग्रहः अस्मासु यथा स्यात् तथा कुर्वन्तु इत्यर्थः ।

33) तदस्य प्रियमभि पाथो अश्यां
 नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः
 पदे परमे मध्व उत्सः । 1-154-5 ।

पदपाठः - तत् । अस्य । प्रियम् । अभि । पाथः । अश्यां । नरः । यत्र । देवऽयवः । मदन्ति ॥ उरुऽक्रमस्य । सः । हि । बन्धुः । इत्था । विष्णोः । पदे । परमे । मध्व । उत्सः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

अस्य एतत्सूक्तप्रतिपाद्यस्य, विष्णोः प्रियं, तत् प्रसिद्धं गङ्गारूपं । पाथः तत्पादोदकं, अभि आधिक्येन, भक्त्याति-शयेनेति यावत् । अश्याम् अश्नीयाम्, कीदृशं तत्, यत्र यद्विषये, देवयवः देवयानमार्गेण जिगमिषवः, देवान् यान्ती वा । यातेर्डः अथवा, देवेन क्रीडादिगुणविशिष्टेन नारायणे-न, सह युवंतीति मिश्रीभावं प्राप्नुवन्ति । तत्सायुज्यभाजः, नरः पुरुषाः मदन्ति आनन्दं प्राप्नुवन्ति । ननु देवयवोऽपि नरः किं तुल्यरूपाः वा तारतम्योपेताः वा । द्वितीयेऽपि तार-

तम्योत्कर्षपरंपरा अनवस्थिता वा व्यक्तिविशेषपर्यवसन्नेत्यतः, प्रथमपक्षं, द्वितीयाद्यपक्षं चानभ्युपगमेनैव परिहरन् अभिप्रेते द्वितीयस्य द्वितीये शृङ्गिग्राहिकतया व्यक्तिविशेषं दर्शयति । तस्य विष्णोः नारायणस्य, परमे सर्वोत्कृष्टे पदे स्वरूपे मध्वः श्री मध्वाचार्यः, उत्सः उत्कर्षेण सर्वाधिकारिवर्गापेक्षया अधिकं सरति जानाति, प्राप्नोति वा । गत्यर्थस्य सरतेः, ज्ञानार्थत्वात् । अत एव, उरुक्रमस्य त्रिविक्रमस्य उरुः महान् क्रमः पदविक्षेपो यस्य, विष्णोः नारायणस्य, हि निश्चये, बन्धुः अतिप्रिय इत्यर्थः, तदेतत् सर्वं इत्था इत्थमेव निर्णितमेव । एवं सायुज्यभाक्तेन श्रीमध्वाचार्यस्य अधिकारिवर्गोत्तमत्वे स्थितेऽपि तस्य प्राणावतारत्वं सुचयितुं इत्थमेवेत्युक्तम् । तेन *इयदामननात्* इति सूत्रार्थोऽपि अस्मिन् विषये प्रमाणमिति सूचितम् । *वायुरेव ब्रह्म गमयति तस्य ह्येषा शक्तिः ।* न ह्यन्यो ब्रह्म गमयति प्रियो ह्येनत्गमयति । न ह्यन्यः प्रियो ब्रह्मणः इति श्रुतेः। ननु प्राणावतारः हनुमद्भीममध्वाश्चेति प्रसिद्धाः । तत्कुतः मध्वस्यैव ग्रहणं श्रुतौ इति चेत् श्रुणु, हनुमतो वा भीमस्य वा वाय्यवतारत्वेऽपि वादिप्रतिवादिविप्रतिपत्त्यभावात् विप्रतिपन्नस्यैव ग्रहणस्य योग्यत्वात् मध्वग्रहणम् । यद्वा, पूर्वोक्तावतारद्वये बलकार्यं करोति मुख्यप्राणः । तदपेक्षया ज्ञानकार्यस्य उत्तमत्वात् तत्कार्यकारि रूपं मध्वं स्वपदेन गृण्हाति । *श्रेयान् द्रव्यमयात् यज्ञात् ज्ञानयज्ञः परंतप* इति वचनात् । त्रिविक्रमोपासकत्वं च चतुर्मुखप्राणयोरेवेति - *गुणास्त्रैविक्रमाद्याश्च संहर्तव्या न संशयः । विरिञ्चस्यैव नान्येषां स हि सर्वगुणाधिकः* इति ब्रह्मतन्त्रवचनैव सिद्धम् । तदर्थमेव श्रुतौ उरुक्रमस्येति पदम् । तस्यान्यार्थता निरासाय विष्णोरिति व्यापकत्वार्थकपदं चेति भावः ।

## गोमञ्जरी

अस्य विष्णोः प्रियं अत्यन्तप्रियं तत् श्रीमध्वाचार्येण प्रतिष्ठापितं अभिः=परितः आविष्कृतं पाथः तत्वमार्गं । साकल्येन तत्वप्रतिपादकं शास्त्राणि इति यावत् । उदकमपि ॥ पाथः पानात् इति वचनात्, रक्षणात् इत्यर्थः इति अभियुक्त व्याख्यानात् मोक्षमार्गं इति वा । अश्यां प्राप्नुयाम् पेयासम् । यत्र यस्मिन् शास्त्रे मार्गे गताः, अभि=सर्वतोऽभिषिक्तं पाथः=वारि तीर्थोदकमिति वा, प्राशित तीर्थोदकाः देवयवः क्रीडास्वभावेन नारायणेन मिलिताः, दैवस्वभावाः देवेन युवन्ति इति देवयवः । दिवु धातोः देवशब्दः । यौति इति युः युवन्ति इति युवः । सात्विकाः नराः पुरुषाः देवानारभ्यमनुष्योलपर्यन्ताः मदन्ति हृष्यन्ति तृप्तिं यान्ति । इत्थाः इत्थं तत्त्ववादाविष्करणेन सज्जनानां मोक्षमार्गप्रदर्शनेन इत्यर्थः, उरुक्रमस्य अत्याधिकं सर्वं जगदाक्रममाणस्य विष्णोः नारायणस्य यः मध्वाचार्यः बन्धुः आत्मीयः । सः मध्वो मध्वाचार्यः विष्णोः परमे पदे परमस्थाने मोक्षे मोक्षं प्रति वा उत्सः उत्सरति गच्छति गमयति वा अनुगान् इत्यर्थः । हि एतत् श्रुतिप्रसिद्धम् । इति सूचयति ।

उत्सः अत्र उदुपसर्ग पूर्वकात् सदेः स्यन्देः वा डाप्रत्यये स्यन्देः यलोपश्च बाहुलिकात् । उन्नत्यर्थत्वे तु उन् पूर्वकात् उन्दीक्लेदने धातोरिदम् रूपम् । उन्दतेः न लोपश्चेति उणादिसूत्रात् न लोपः । बाहुलिकात् सप्रत्ययश्च । क्लेदयति अत्यन्तम् संबन्धं करोति इत्यर्थः ।

34) इदं ते पात्रं सनवित्तमिन्द्र
पिब सोममेना शतक्रतो ।
पूर्ण आहावो मदिरस्य मध्वो
यं विश्व इदभिहर्यन्तिदेवाः । 10-112-6 ।

पदपाठः - इदं । ते । पात्रं । सनवित्तं । इन्द्र । पिब । सोमं । एना । शतक्रतो इति शतऽक्रता ॥ पूर्णः । आहावः । मदिरस्य । मध्वः । यं । विश्व । इत् । अभिहर्यन्ति । देवाः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

परमैश्वर्यगुणसंपन्नत्वात् इन्द्रशब्दवाच्यस्य नारायणस्य सूक्तेन तदीयस्तुतौ क्रियमाणायां मध्वस्य वायुत्वं प्रतीयते । हें इन्द्र, हे ऐश्वर्यभरित नारायण, ते तव, सोमपानार्थं, इदं उत्तरार्धे वक्ष्यमाणं पात्रं । कीदृशं तत् सनवित्तं सनं पूज्यंवित्तं यस्य तत् । *वन षण सम्भक्तौ* इति धातोरिदं रूपम् । भजनीयं पूजनीयं द्रव्यमित्यर्थः अमूल्यमिति यावत् । हे शतक्रतो अपरिमितज्ञान, एना अनेन पात्रेण, त्वं सोमं पिब पानं कुरु । किं तत्पात्रमित्यत आह - मध्व इति तत् प्रसिद्धम् यथा आतिथ्यादीनां पूजायां पात्रपरिवेषितमन्नं तैः भुज्यते एवं मध्वाचार्यद्वारा यन्निवेदितं तदेव नारायणप्रीतिकरं भवति । तस्मादेव भगवत्पूजादौ मध्वाचार्याणां हृत्कमलमध्यनिवासी श्रीरामचन्द्रः प्रीयतामिति अनुसन्धानं शिष्टाचरमूलं च श्रुतिमूलमेवेति ज्ञेयम् । ननु अन्येषु सत्सु कुतः मध्वस्यैव भगवत्प्रीतिहेतुत्वमित्यत आह किं लक्षणो मध्वः मदिरस्य आनन्दस्य, न माषाणामश्नीयात् इत्यादाविव संबन्धमात्रे षष्टी, पूर्णः , *मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतमिति* ,इति निर्वचनमपि

श्रुतिमूलमित्युक्तम् भवति । सर्वाधिकारिवर्गापेक्षयाऽधिकानन्दवानित्यर्थः । तद्धेतुभिः बलज्ञानभक्त्यादिभिः गुणैरिति शेषः । तेन शतानन्देन चतुर्मुखेन अभेदावगमात् । ब्रह्मपदयोग्येत्यर्थः ।

स एव वायुरुद्दिष्टो वायुर्हि ब्रह्मतामगात् ।
विशेषतो हरेर्व्यक्तिस्थानान्येतानि सर्वशः ॥ (इति तन्त्रभागवते) ।

सर्वदेवोत्तमो वायुरिति ज्ञानान्न चापरम् ।
प्रियमस्ति हरेः किञ्चित् तथा वायोर्हरेर्विदः ॥ (इति माहात्म्ये) ।

आहावो= आ समन्तात् यज्ञेषु ह्वयते, आ ह्वयते वा इति । आहावः इदं च सर्वयज्ञेषु आहूतः वायुलिङ्गम् । वायवायाहि दर्शते मे सोमा अरंकृताः । तेषां पाहि श्रुधीहवमिति श्रुत्यन्तरे प्रसिद्धम् । यद्वा - यः मध्वः सर्वज्ञानयज्ञादिषु नित्यंमाहूतः सन् श्रीहरिभक्त्यादिभिः पूर्णः, अत एव दुःखाद्यसंभिन्नस्य मदिरस्य सर्वोत्कृष्टानन्दस्य पात्रं, यं च विश्वे (इत्) एतेदेवाः अभि सर्वतः हर्यन्ति पूजयन्ति बलिमाहरन्ति । हे इन्द्र = नारायण, स सनवित्तमिदं ते= तव पात्रम् । अधिष्ठानभूतः =यस्मिन् त्वं सर्वदा, सर्वथा सुप्रीतः वसति ॥ हे शतक्रतो ! पूर्णज्ञान ! एना= अनेन = अस्य द्वारा सोमं= भक्तैः अर्पितं सत्कर्मफलं स्वाख्यरूपं पिब=पिबसीत्यर्थः ॥ भक्तकृतपूजां भगवान् श्रीमध्वद्वारैव स्वीकरोति - स्वीकृत्य प्रीणाति इति भावः । इदं च लिङ्गं मध्वेऽपि ज्ञायते । किं चायं मध्वे

यं श्रीमध्वं विश्व इत् देवा सर्वे सुराः एव अभि आभिमुख्येन अभ्यर्हितत्वेन हर्यन्ति बलिं हरंतीत्यर्थः ॥

## गोमञ्जरी

हे शतक्रतो, अपरिमित ज्ञानपूर्णः, इन्द्र परमैश्वर्यसंपन्न श्रीनारायण, सनवित्तं सने दानयोग्ये, षणुदाने इति धातोः रूपमिदम् । स्वभक्तेभ्यो वित्तं ज्ञानभक्त्यादिकं यस्य सः तत् । ज्ञानभक्तिविरक्त्यादिगुणैःपूर्णम् । इदं अग्रे वर्ण्यमानं मध्वाचार्यरूपं ते तव, पात्रं सन्निधानयोग्यम् । श्रीमध्वाचार्ये सदा सन्निहितोऽसीत्यर्थः । *य एवायं मुख्यप्राणः तमुद्गीथम् उपासां चक्रिरे* इति श्रुतेः । एना सर्वत्र प्रेरकतया स्थितेन अर्पितं, सोमं सोमरसं पिब । अयंपदेन परामृष्टः कः इत्यत आह पूर्ण इति । मदिरस्य मत् मथनं वेदशास्त्राणां पर्यालोचनम् । तस्मात् ईशस्य उत्पन्नस्य ज्ञानस्य, पूर्णः संपूर्णः । यद्यपि मदिरेण इति वक्तव्यम् तथापि वेदशास्त्रादिकं तावत् न केवलं करणं अपि तु तत्सम्बध्यपि (प्रतिपादकतया) इति सूचयितुं षष्टीविभक्तिः तत्र वर्तते । मदिराशब्दस्य स्त्रीलिङ्गत्वेऽपि *य ईं वहन्त आशुभिः पिबन्तो मदिरं मधु* इति ऋग्वेदे लिङ्गान्तरे प्रयोगः वर्तते । तथैव व्याख्यातं अन्यैरपि मदिरं मधुकरं मधु इति । अनन्तवेदोत्पन्नज्ञानेन पूर्णः श्रीमध्वाचार्यः इत्यर्थः । एवं प्रलयकालेऽपि प्रतिभातपरावरः । *वायुः नित्यसमः प्रोक्तः* इति अनुव्याख्यानोक्तेः । आहावः=आ समन्तात् तत्तत्योग्येषु शिष्येषु तस्य ज्ञानस्य हवनम् दानं यस्य सः । ज्ञानयज्ञे स्थित्वा ज्ञानाख्यरसस्य भूमिस्थ ऋष्यादिशिष्यप्रशिष्येषु हवनकर्ता इत्यर्थः । यः मध्वाचार्यः इदं तं पात्रमित्यनेनान्वयः । यं मध्वाचार्यं इत् इत्थं ऋष्यादिशिष्यवदेव, विश्व समस्त,

देवाः सुराः, अभि अभितो, हर्यंति ज्ञानरससंग्रहाय प्राप्नुवन्ति देवलोकस्थिता देवा अपीति भावः ।

**35) एकः समुद्रो धरुणो रयीणां**
**अस्मद्धृदो भूरिजन्मा विचष्टे ।**
**सिषक्त्यूधर्निण्योरपस्थे**
**उत्सस्य मध्ये निहितं पदं वेः ।** 10-5-1 ।

पदपाठः - एकः । समुद्रः । धरुणः । रयीणां । अस्मत् । हृदः । भूरिऽजन्मा । वि । चष्टे ॥ सिषक्ति । ऊधः । निण्योः । उपऽस्थे । उत्सस्य । मध्ये । निऽहितं । पदं । वे इति । वेः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

एकः मुख्यः, समुद्रः जगच्चेष्टकः । समुद्रवति जगत् अनेन इति समुद्रः संयक् उत्कृष्टतया द्रवति=गच्छति चेष्टेति जानातीति वा इत्यर्थः । द्रुगतौ डः । सम्यक् ऊर्ध्वं द्राति अनेन इति वा समुद्रः । द्रा कुत्सायां गतौ चेति धातोः सम् + उत् पूर्वकात्, *अन्येभ्योऽपि दृश्यन्ते* इति डप्रत्यये रूपम् । समुद्रेत्यनेनेति । तथा च अस्मिन् प्रविष्टे जगत् चेष्टते, यस्मिन्निर्गते अतिकुत्सितावस्थां प्राप्नोति म्रियते इति यावत् । तदुक्तं ऐतरेये *प्राण उदक्रमत् तत् प्राण उत्कान्तेऽपद्यत, प्राणः प्राविशत्, तत् प्राणे प्रपन्न उदतिष्ठत् तदुक्थमभवत्* इति । मुख्यप्राण इति भावः । रयीणां धनानां ज्ञानादीनां धरुणः धारयिता समुद्रः, भूरिजन्मा=अनेक अवतारेभ्यः हनुमद्भीममध्वाख्यावतारत्रयात् इति यावत् । सुपां सुलुगिति पञ्चमी लुक्

। अस्मत् अस्माकं, हृदः हृदयानि, अभिलिषितान् पदार्थान् विचष्टे व्याचष्टे । अस्मदिष्टकरं हृदयंगमं व्याख्यानं करोतीत्यर्थः । उत्सस्य=सर्वज्ञस्य मध्वाचार्यस्य, पूर्वोक्तमन्त्रे *विष्णोः पदे परमे मध्व उत्सः* , इत्युक्तत्वात् मध्वाचार्य एव उत्सः । व्युत्पत्तिः पूर्वोक्तैव मध्ये हृदयमध्ये, निहितं विद्यमानं वेः नारायणस्य, विः पक्षिपरमात्मनोरित्याभिधानात् । अस्माकं ऊधः = अपेक्षितदोहप्रदम् । पदं स्वरूपं, विचष्टे स्तौति । मुख्यप्राणस्य स्वान्तःस्थितभगवद्रूपोपासकतया, श्रीमध्वरूपेणास्य अभेदादिदं इति भावः ॥ निण्योः अव्यक्तस्य विष्णोः निण्युशब्दस्य अन्तर्हितार्थे प्रयोगात् । *यतो वाचो निवर्तन्ते अप्राप्य मनसा सह* , इति श्रुतेः । साकल्येन ज्ञातुमशक्यस्य वेः विष्णोः उपस्थे उत्संगे, सिषक्ति संबध्यते निषीदतीति यावत् । तदुक्तं तन्त्रसारे -

उद्यद्रविप्रकरसंनिभमच्युतांके
स्वासीनमस्य नुतिनित्यवचः प्रवृत्तिम् ।
ध्यायेद्गयाभयकरं सुकृतांजलिं तं
प्राणं यथेष्टतनुमुन्नतकर्मशक्तिम् ॥ इति

36) समानं नीळं वृषणो वसानाः
सं जग्मिरे महिषा अर्वतीभिः ।
ऋतस्य पदं कवयो निपान्ति
गुहा नामानि दधिरे पराणि । 10-5-2 ।

पदपाठः - समानं । नीळं । वृषणः । वसानाः । सं । जग्मिरे । महिषाः । अर्वतीभिः ॥ ऋतस्य । पदं । कवयः । नि ।

पान्ति । गुहा । नामानि । दधिरे । पराणि ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

पूर्वोक्तं समुद्रशब्दवाच्यं श्रीमध्वाचार्यं अत्र प्रपञ्चयति ॥ कवयः ज्ञानिनः, देवा, वृषणाः अभीष्टसेचकाः, महिषाः महात्मानः अपि, ऋतस्य सदा भगवद्विषयकयथार्थज्ञानयुक्तस्य श्रीमध्वाचार्यस्य, पदं स्वरूपं, लक्षीकृत्य, अर्वतीभिः ज्ञानादिभिः, सह, समानं नीलं समानस्थानं बदरिकाश्रमं, सं वसानाः अधिष्ठितवन्तः तत्र व्यासस्य समीपे निवसन्त इति भावः । जग्मिरे गताः अत एव तत्पदं नि सदा, पान्ति रक्षणं कुर्वन्ति । सदा तत्स्वरूपज्ञानयुक्ताः भवन्तीति भावः । तस्मादेव तस्य पराणि श्रेष्ठानि, नामानि आनन्दतीर्थ, पूर्णप्रज्ञ इत्यादीनि, गुहा हृदयगुहायां, दधिरे घृतवन्तः । सदा धारयन्तीति यावत् ।

अवगम्य तं मुनिगणा वरिष्ठतो
विधिवद्व्यधुर्विधिविदोऽस्य माननाम् ।
अपि सङ्कथा श्रुतिसुखाः कवीन्द्रयोः
अनयोर्निषम्य परमां मुदं ययुः । 7-58 ।

इति श्रीसुमध्वविजयोक्तेः ।

37) ऋतायिनी मायिनी सं दधाते
मित्वा शिशुं जज्ञतुर्वर्धयन्ती ।
विश्वस्य नाभिं चरतो ध्रुवस्य
कवेश्चित् तन्तुं मनसा वियन्तः । 10-5-3 ।

पदपाठः - ऋतायिनी इति । मायिनी इति । सं । दधाते (इति) । मित्वा । शिशुं । जज्ञतुः । वर्धयन्ती इति ॥ विश्वस्य । नाभिं । चरतः । ध्रुवस्य । कवेः । चित् । तंतुं । मनसा । विऽयन्तः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

ऋतायिनी ऋतं सत्यमिति ज्ञापयंती विश्वसत्यत्वप्रतिपादिका श्रुतिः । विश्वं सत्यं मधवानेत्यादिः । मायिनी माया विद्यते प्रतिपाद्यतया यस्यामिति मायिनी, अनृतेन हि प्रत्यूढा मायामात्रमिदं द्वैतमित्यादि मिथ्यात्वप्रतिपादिकाश्रुतिः । परस्परं सं दधाते विरोधं त्यक्त्वा कार्यतया बभुवतुः । अथ च मित्वा विचार्य, शिशुं स्वगर्भे धृतमभिप्रेतमर्थं जज्ञतुः प्रकटीचक्रतुरिति यत् तत् कवेः ज्ञानिनः वायोः - चित् अंशभूतं पुरुषं वर्धयन्ती । कीर्त्या वर्धयन्त्यौ । यावत्पर्यन्तं श्रीमध्वः (कवेः ज्ञानिनः चित् अंशः) स्वकीय श्रुतिव्याख्यानं नाकरोत् तावत् पर्यन्तं स्वाभिप्रेतार्थं न प्रकटी चक्रतुः, तदित्थं श्रीमध्वकीर्तिं जगति वर्धयन्त्यौ ते श्रुती मध्वावतारानन्तरं सदधाते तथा जज्ञतुः इति भावः । सत्यत्वमिथ्यात्वप्रतिपादिके श्रुती कस्यापि वचनेन विरोधं न तत्यजुः । केषांचित् संदेहं, केषांचित् विपरीतज्ञानं जनयतः स्म । न कस्यापि सम्यक्ज्ञानं अभवत् । एवं सति कस्यचिदेव वचनेनाविरुद्धे भूत्वा, स्त्रीपुमांसाविव शिशुं हृदयगर्भं स्वाभिप्रेतार्थं परमात्मानं जनयामासतुः । कथं भूतं शिशुं चरतो ध्रुवस्य, स्थावरजंगमात्मकस्य विश्वस्य सकलस्य, नाभिं तदीयसृष्ट्याद्यष्टकर्तृत्वात् श्रेष्ठम् । तन्तुं=तनितारं, विशदतया श्रुतिव्याख्यातारं । एतादृशार्थप्रतिपादकशास्त्रकर्तारं श्रीमुख्यप्राणांशं मध्वाचार्यं मनसा वियन्तः प्रा-

ब्रुवन्तः । सोऽयं यथास्थितार्थश्रुत्यर्थप्रशंसकोऽस्माकं मनसि सदा सन्निधानं करोतु । तेन तत्प्रसादद्वारा वयं सर्वे श्रुतीनां अभिप्रेतार्थज्ञातारः भवेम इत्यर्थः ।

38) ऋतस्य हि वर्तनयः सुजातमिषो
वाजाय प्रदिवः सचन्ते ।
अधीवासं रोदसी वावसाने
घृतैरन्नैर्वावृधाते मधूनाम् । 10-5-4 ।

पदपाठः - ऋतस्य । हि । वर्तनयः । सुजातं । इषः । वाजाय । प्रऽदिवः । सचन्ते ॥ अधीवासं । रोदसी इति । वावसाने इति । घृतैः । अन्नैः । वावृधाते इति । मधूनां ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

ननु पूर्वस्यां ऋचि कवेरिति सामान्यतो वचनात् व्याख्यातो यः कोऽपि भवितुमर्हति । शङ्कराचार्यादयोऽपि श्रुतीनां आपाततो विरुद्धतया भासमानानां विरोधं परिहरन्ति ॥ तत्र हि सत्यत्व श्रुतीनां व्यावहारिक सत्यतापरत्वं, मिथ्यावश्रुतीनां च मुख्यार्थप्रतिपादकतया प्राबल्यं उररीकृतम् । जीवब्रह्मैक्यस्यैव श्रुत्यभिप्रेतार्थताभ्युपगमात् । तथा च कवेरित्येतत् शङ्करपरोऽपि स्यात् इत्यतः सत्यत्वश्रुतेःप्राबल्यं तदनुसारिणां विशेषफलं चाह ऋतस्येति ॥

हि=यत् यस्मात्कारणात्, ऋतस्य=सत्यस्य, वर्तनयः= प्रवर्तकाः जगत्सत्यत्वप्रतिपादकश्रुत्यनुसारिणः इत्यर्थः । वाजाय इषः= प्रजायै कामयमानाः प्रजेष्टकारिण इति यावत् ।

प्रजानां सद्भाव प्रतिपादकत्वात्तेषां प्रजेष्टकारित्वं बोध्यम् । मायावादिनस्तु प्रजाभावबोधका इति प्रजाद्वेषिणः इत्यर्थः । ननु मायावादिनामपि ब्रह्मसत्यत्ववादित्वाविशेषात् ऋतस्येत्यनेन मायावादस्य इत्यर्थोऽपि किं न स्यात् ततश्च मायावादिनामेवेदं फलं चेन्मैवम् । ब्रह्मसत्यत्वश्रुतेः जगन्मिथ्यात्वश्रुतेश्च परस्परं विरोधाभावात् संदधात इत्ययोगात् । ब्रह्ममिथ्यात्वं तु न कयापि श्रुत्योक्तमिति मायिनी इति तद्ग्रहणायोगाच्च ॥ मायावादिभ्यः तदभ्युपगतमुक्तौ वक्ष्यमाणफलप्राप्तेरसम्मतत्वाच्च । सुजातं=पूर्वऋगुक्तरीत्या श्रुतिभ्यां प्रकटीकृतं परमात्मानं, सचन्ते=प्राप्नुवन्ति । अथ प्रदिवः (भवन्ति) = प्रकर्षेण दीव्यन्ति क्रीडन्ति स तत्र पर्येति जक्षन् क्रीडन् रममाणः इति श्रुतेः विश्वसत्यत्ववादिनो हि वैकुण्ठादौ मुक्ताः सन्तः यथेष्ट भक्षभोज्यान् भुञ्जते इति तदर्थतया तद्वादिभिरङ्गीकृतम् नैवमायावाद्यङ्गकार इति स्फुटम् । किञ्च - रोदसी = द्यावापृथिव्यौ अधिवासं=स्व सत्यत्वप्रतिपादकं पुरुषं अधिवासयति स्थापयति इति अधिवासः स एव अधीवासः तं पुरुषं वावसाने= स्वस्मिन् अतिशयेन वासयन्तौ सत्यौ धृतैः मधूनां अन्नैः वावृधाते = वर्धयांचक्रतुः ॥ तथा च जगन्मिथ्यात्व प्रतिपादकत्वात् शङ्कराचार्यस्य पूर्वर्चि कवेरिति ग्रहणं न योग्यम् । स्फुटश्चायमर्थः श्रुत्यन्तरे तथाहि -

सुविज्ञातं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत् सत्यं यतरहजीयस्तदित् सोमोऽवति हन्त्यासत् ॥
नवा सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् ।
हन्ति रक्षो हन्त्यासद् वदन्तमुभाविन्द्रस्य प्रसितौ शयाते ॥
(7-104-13)

39) सप्तस्वसॄररुषीर्वावशानो विद्वान्
मध्व उज्जभारा दृशे कम् ।
अन्तर्येमे अन्तरिक्षे पुराजा
इच्छन् वव्रिमविदत् पूषणस्य । 10-5-5 ।

पदपाठः - सप्त स्वसॄः । अरुषीः । वावशानः । विद्वान् । मध्वः । उत् । जभार । दृशे । कं ॥ अन्तः । येमे । अन्तरिक्षे । पुराऽजाः । इच्छन् । वव्रिं । अविदत् । पूषणस्य ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

पूर्वमंत्रे कवेस्तन्तुः मुख्यप्राणांशः कश्चित्सकलश्रुत्यैकवाक्यतया विष्णुं सर्वोत्तमत्वं प्रतिपाददयतीत्युक्तम् । कोसौ प्राणास्यांशः । इत्यतः शृंगिग्राहिकया विशिष्य तत्स्वरूपनिर्णयार्थं तन्नामकथनपुरस्सरं तदीयं चरित्रमत्र प्रपंच्यते । यः मुख्यप्राणस्यांशः <u>मध्वः</u> मध्वाचार्यः, <u>कं</u> ब्रह्मस्वरूपं कं ब्रह्मेति वचनात् । कशब्दस्य सुखवाचित्वाच्चानन्दरूपं नारायणं, <u>दृशे</u> ज्ञानाय, <u>उज्जभार</u> उद्धृतवान् । दुर्वादिभिः आनन्दादिस्वरूपं नारायणाख्यब्रह्म तिरोहितं कृतमासीत् । अनेन पुनरधिकारिणां ज्ञानोत्पत्यर्थं नारायणस्य यथावत्स्वरूपं प्रतिपादकसच्छास्त्रनिर्माणेन तदुद्धारः कृत इत्यर्थः । यदनेन नारायणोद्धारशास्त्रं कृतं तत् स्वकपोलकल्पितं न भवति किन्तु सकलश्रुतिस्मृत्यर्थकरूपत्वात् तन्मूलकत्वेन प्रमाणमेवेत्याशयेन मध्वं विशिनष्टि । <u>सप्त</u> <u>स्वसॄः</u>, सप्तसंख्याकाः ऋगाद्याः -

ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।
प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ॥ छान्दोग्य

8-5 ॥

ऋग्यजुर्सामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव सम्प्रोच्यन्ते सदागमाः ॥
दुरागमा तदन्येये तैर्न ज्ञेयो जनार्दनः । इति ब्रह्माण्डे ।

परस्परं विरोधाभावेनैकवाक्यतापन्नत्वात् स्वसारः भगिन्य इव ताः वाणीः, विद्वान् जानन्, अत एव वावशानः *वा-शृशब्दे* इत्यस्य रूपं । पुनरतिशयेन कथयन्, अध्यापयति व्याचष्टे । स्वोक्तार्थे प्रमाणत्वेनोपन्यस्यतीत्यर्थः । कीदृशीः वाणीः अरुषीः केनापि दूषयितुमशक्याः । रुष् रुषिहिंसाया-मिति धातोरूपम् । यद्वा ऋगताविन्यस्य रूपम्। तथात्वे कं ब्रह्मस्वरूपं ज्ञापयतीतीत्यर्थः । नन्वेतत्सर्वे कुर्वतो मध्वस्य कः पुरुषार्थ इत्यत आह सः मध्वः, पूषणस्य सकलजगत्पोषकस्य विष्णोः, वव्रिं प्रसादं, अविदत् लब्धवान् । ननु प्रसादस्य इ-ष्टप्राप्त्यनिष्टनिवृत्तिरूपत्वाभावात् कथं तस्य पुरुषार्थत्वमित्यत आह इच्छन् भगवद्दर्शनमेव इच्छन् । *तदेतत्प्रेयः पुत्रात्प्रेयः* इति श्रुतेः । अर्थो एकान्तानां च कस्यचित् इति वचनात् । पूषणस्य वव्रिं इच्छन्नेव, पुराजाः भगवत्प्रसादार्थमेव पुरापूर्वे जाताः प्राणांशाः हनुमद्भीमसेनमध्वाः अवतीर्णा इत्यर्थः । पुनः कीदृशः मध्वः इत्यत आह पूषणस्य वव्रि इच्छनेव अन्तः अन्तरिक्षे हृदयगुहाकाशे, स्थितः सन् सर्वान् जीवान् येमे नियमयति । *घर्मा समन्तात्* इति श्रुतेः ।

गोमञ्जरी

वावशानो अतिशयेन दीप्यमानः । वशकान्ताविति धातोः

यङ्लुगन्तस्येदम् रूपम् । कं आनन्दस्वरूपं नारायणं । कं ब्रह्मेति श्रुतेः । श्रुतोपनिषत्कगत्यभिधानाच्चेति सूत्रात् कशब्द-वाच्यत्वं ब्रह्मणः वर्तते । विद्वान् साक्षात्पश्यन् सकलवेदार्थतया पश्यन् मध्वः मध्वाचार्यः, अरुषीः रोषविरोधिशान्त्यादिगु-णदायकाः, वर्णव्यत्यासेन प्रलये भगवद्व्यतिरिक्त ऋषिरहिताः वा, अकारवाच्य हयग्रीवाख्य ऋषिसहिता वा, स्वसृः स्व-तन्त्रभगवन्मुखात् निसृताः, सप्त सप्तसंख्यकाः विद्याः ऋगा-दिचतुष्टय, पञ्चरात्र, पुराण, भारतभेदेन सप्तविद्याः । दृशे ज्ञानाय, उज्जभार ऊर्ध्वं जहार । हृगृहोर्थः छंदसीति वेद-व्याकरणसूत्रात् हकारस्य भकारे इदम् रूपम् । अप्रमाणत्व, पौरुषेयत्व, मिथ्यात्वावेदकत्वादिना अधःपतिताः प्रमाणत्वा-दिस्थापनेन उद्धृतवान् इत्यर्थः । अभिसंनवन्ते यत्र गवां नि-हिता सप्तनाम इति श्रुतिसमाख्ययापि सप्तविद्याः गृहीतव्याः । पूषणस्य पू पूर्णौ बलानन्दने बलनियमने वा यस्य सः पूषणः तस्य बलानान्दादिपूर्णस्य नारायणस्य षकारो बलं, णकारः प्राणः आत्मा, णश्च निवृत्तिवाचक इत्यादिप्रमाणात् । वव्रिं प्रसादम् वृन् वरणे इति धातोः रूपम् । इच्छन् मध्वाचार्यः अन्तरिक्षे पुराजाः जगत्सृष्टेः पुर्वं जाताः अपौरुषेयत्वेन कर्तु-रभावात् अशरीरवाणीवत् आकाशजाः , अ दुर्गायां वा पूर्वं जाताः प्रलयावसाने प्राक् दुर्गया वेदैः भगवतः नारायणस्य स्तोत्रकरणस्य प्रमाणसिद्धत्वात् अंतः ईक्षते सर्वमिति व्युत्पत्या अन्तरिक्षे परमात्मनि, पूर्वं जाताः वेदादि विद्याः इति यावत् । अविदत् स्वयं ज्ञातवान् । उपक्रमादितात्पर्यलिंगैः यथार्थ-तया सम्यङ्ज्ञातवानित्यर्थः । अतः साधूनां हृदयान्तःस्थित्वा ता एव विद्याः येमे प्रेरयामास ।

40 ) सप्तमर्यादाः कवयस्ततक्षुः
तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कंभ उपमस्य नीळे
पथां विसर्गे धरुणेषु तस्थौ । 10-5-6 ।

पदपाठः - सप्त । मर्यादाः । कवयः । ततक्षुः । तासां । एकां । इत् । अभि । अंहुरः । गात् ॥ आयोः । ह । स्कंभः । उपऽमस्य । नीळे । पथां । विऽसर्गे । धरुणेषु । तस्थौ ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

कवयः मध्वाचार्याः, पूर्वप्रसक्तत्वात् । पूजायां बहुवचनम् । सप्त सप्तसंख्याकाः विद्याः, मर्यादाः ततक्षुः दुर्वादिभिः हि इतस्ततः प्रक्षेपैः यत्किञ्चिदर्थवर्णनेन पुण्यपापादीनां च मिथ्यात्ववर्णनेन निःशंकमगम्यगमनादीनां व्यवहारापत्त्या विधिनिषेधाप्रतिपादकाः सप्तवाण्यः सर्वैः लंघ्यमानत्वादमर्यादा इव जाता स्थिताः, एभिः दुर्वाद्युद्भावितकंटकोद्धारणरूपतत्क्षणेन पुण्यपापादीनां सत्यत्वप्रतिपादनेन वास्तवनरकभीत्यावेदनेनानुल्लंघनीयाः कृता इत्यर्थः । तासां सप्तमर्यादानां, एकां इत् एकामपि, अभ्यगात् अतिक्रम्य वर्तते सः, अंहुरः अंहस्वी पातकीभवतीत्यर्थः । कोऽसौ इत्यत आह - उपमस्य उपगतान् स्वसमीपमायाती तान् मीनाति हिनस्ति असौ उपमः कृमिकीटाद्यरुंतुदप्राणिवर्गः । तस्य, नीळे आश्रयभूते, विसर्गे विसृज्यते मलमूत्रादिकमस्मिन्निति विसर्गः । नरकरूपः तस्मिन्, धरुणेषु पतितेषु । अयोः आसमंतात् यौति मिश्रयति संकरीकरणं करोति असौ आयुः । पुण्यपापादीनां मिथ्यात्वमावेदयता हि निःशंकागम्यगमनादौ प्रवर्तनेन सर्वसंकर एव

कृतो भवति ।तस्य संकरस्य पथां मार्गाणां, निर्गमनमार्गाणां, स्कंभः निरोधः तस्थौ स्थितः एव ।न तु निवृत्त इत्यर्थः ।ह एतत्सर्ववेदशास्त्रेषु प्रसिद्धम् । परोक्षेण दुर्वादिनः नामग्रहण-कृतम् ।

देवासुरलक्षणम् -
येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि ।
मिथ्या जगदिदं सर्वं भ्रमजतत्वान्न तिष्ठति ।
मिथ्यात्वान्नेश्वरोऽस्तीति परेभ्योऽपि न जायते ।
स्वस्मिन्नपि तथाऽन्यस्मिन् नियन्ताऽन्य इतीरिते ।
प्रद्विषन्त्यसुरास्तेतु सर्वे यात्यधरं तमः ।
अयोग्येशकामत्वात् लोभाच्चाऽत्मसमर्पणे ।
तत्त्ववेदिषु कोपाच्च तमस्तेषां न दुर्लभम् ।
अक्षागमानुमानां च स्वोक्तेरपि विरोधिनः ।
यस्मात् ततोऽसुरा ज्ञेया एवमन्येऽपि तादृशाः ।
ये तु विष्णुं परं ज्ञात्वा यजन्ते नान्यदेवताः ।
प्रत्यक्षाद्यविसंवादिज्ञानादेव विमुक्तिगाः ।इति ब्रह्मवैवर्ते ॥

41) प्र ये शुम्भन्ते जनयो न सप्तयो
यामन्रुद्रस्य सूनवः सुदंससः ।
रोदसी हि मरुतश्चक्रिरे वृधे
मदन्ति वीरा विदथेषु घृष्वयः ।1-85-1 ।

पदपाठः - प्र । ये । शुम्भन्ते । जनयः । न । सप्तयः । यामन् । रुद्रस्य । सूनवः । सुऽदंससः ॥ रोदसी इति । हि । मरुतः । चक्रिरे । वृधे । मदन्ति । वीराः । विदथेषु ।

घृष्वयः ॥

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

ये मरुतः मध्वावतारमूलभूताः मुख्यप्राणाः, यामन् यामनि, तत्वनिर्णयाय परवादिनः पराभावायितुं प्रयाणकाले, जनयः सुजाताः, जायन्त इति, असाधारण्येन व्यपदेशा भवन्तीति न्यायात् । *सर्वधातुभ्यः इन्* इति इन् प्रत्ययः, शुद्धज्ञानयुक्ता, सप्तयः न जात्यश्वा इव, प्र प्रकर्षेण शुम्भन्ते निभर्याः सन्तः गच्छन्ति । पूजायां बहुवचनम् । कीदृषाः रुद्रस्य, नारायणस्य, रुजं द्रावयते यस्मात् रुद्रस्तस्माज्जनार्दन इति वचनात् । ब्रह्मस्थो ब्रह्मनामासौ रुद्रस्थो रुद्रनामकः । तयोरपि नियन्तैकः स्वयमेव जनार्दन इति स्कान्दवचनात्, शत्रुनिरासमर्थाः । सूनवः = पुत्राः नन्दनाः, सुदंससः शोभनकर्माणः दंसश्शब्दस्य कर्मनामसु पाठात् । सदा भगवद्विषयककर्मकर्तार इत्यर्थः । ईश्वरप्रकरणकायाकरणवृत्तिरिति वचनात् । एतदेवोपपादयति, हि यस्मात् मध्वः, रोदसी द्यावापृथिव्यौ, वृधे वर्धनाय, चक्रिरे कृतवन्तः । किं च विदथेषु ज्ञानिषु, *विद ज्ञाने* इति धातोः *रुदिविदिभ्यां ङित्*, इति अथप्रत्ययः । मुदंति तुष्यंति, अनुगृह्णंतीति यावत् । कीदृशः घृष्वयः संघर्षणशीलाः, आक्षेपसमाधानशीलाः ।

स वादिसिंहस्य गिरं गरीयसीं
अखण्डयत् पण्डितमण्डलान्तरे ।
तीक्ष्णेन वाक्येन मितेन वेगिना
गदां शरेणेव विशारदो मुहुः ।

इति सुमध्वविजयवचनात् । अत एव वीराः परदुर्वादिशत्रुनिरासप्तमर्थाः, ज्ञानबलकार्यरूपद्वयनिपुणाः इति भावः ।

लेखिन्या मुहुरपिनह्य कृष्यमाणं
नाप्येकं तनुरुहमस्य तूदपाटि ।
नासाग्रे मृदुनि कृतैश्च मुष्टिघातैः
नास्येन्दोरतिबलिभिः प्रसन्नताऽसि ॥

इति सुमध्वविजयोक्तेः (16-34)

42) त उक्षितासो महिमानमाशत
दिवि रुद्रासो अधि चक्रिरे सदः ।
अर्चन्तो अर्कं जनयन्त इन्द्रियं
अधि श्रियो दधिरे पृश्निमातरः । 1-85-2 ।

पदपाठः - ते । उक्षितासः । महिमानम् । आशत । दिवि । रुद्रासः । अधि । चक्रिरे । सदः । अर्चन्तः । अर्कम् । जनयन्तः । इन्द्रियम् । अधि । श्रियः । दधिरे । पृश्निमातरः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

ये पूर्वोक्तगुणविशिष्यः ते, मुख्यप्राणाः मध्वाचार्याः, उक्षितासः देवैरभिषिक्ताः सन्तः,

इति निगदितवन्तस्तत्र वृन्दारकेन्द्रा
गुरुविजयमहं तं लालयन्तो महान्तम् ।
ववृषुरखिलदृश्यं पुष्पवारं सुगन्धं
हरिदयितवरिष्ठे श्रीमदानन्दतीर्थे ॥

इति सुमध्वविजयवचनम् (16-58) ।

रुद्रासः रुद्रं महारुद्रं अस्यंति क्षिपन्ति स्वसामर्थ्येनाधं कुर्वन्तीति अत एव तदुत्तमः । अधि अधिक्येन सदः स्थानं उपवेशनस्थलं, चक्रिरे कृतवन्तः । दिवि उत्तमस्थाने बदरीकाश्रमे -

अमुष्य शिष्या विनयेन तस्मै गुरोरभिप्रायविदो विदग्धाः।
तदानुरूपं ददुरासनं ते चतुर्मुखा एव मुकुन्ददासाः ॥ 7-56 सुमध्वविजये॥

बदरीकाश्रमे श्रीवेदव्यासस्य समीपे तस्योपदेशश्रवणार्थं यदा गतः तदानीमिति भावः । ते उक्षितासः गर्भे निशिक्ता एव, महिमानं माहात्म्यं, आशत प्राप्नुयन्त । अत एव अधि आधिक्येन, श्रियः लक्ष्मीः दधिरे घृतवन्तः । सर्वलोकापेक्षया अधिकलक्ष्मीविषयकज्ञानवन्त इति भावः । कुतः एषामेव अधिकज्ञानवत्त्वमित्यत आह पृश्निमातरः श्रीगर्भप्रसूता इत्यर्थः । *आदिन्मातॄराविशत्* इत्युक्तेः । अर्कं परमात्मानं, उक्तं हि ऐतरेय भाष्ये -

अग्निस्थमाश्रिता मर्त्या विष्णुमर्काभिधं परम् ।
आजनैरर्चितत्वात् स ह्यर्क इत्युच्यते हरिः ॥ ऐ-प्रघ-1-ब्रा-2-म-1

अरणं गमनं यस्मादर्कः शीघ्रगतित्वतः । ऐ-प्रघ-1-ब्रा-2-म-3

उदकं सुखहेतुत्वात्कमित्येवाभिधीयते ।
तदेव ह्यर्चतो जातमतोऽर्क इति कीर्त्यते ॥ इति व्यासनिरुक्तेः । बृ-उ-भा, अ-3-ब्रा-2-म-2

अर्चन्तः पूजयन्तः इन्द्रियं इन्द्रवीर्यं जनयन्तः उत्पादयन्तः, इन्द्रस्य सामर्थ्यमपि तदधीनमिति भावः ॥

43) गोमातरो यच्छुभयन्ते अञ्जिभिस्तनूषु
शुभ्रा दधिरे विरुक्मतः ।
बाधन्ते विश्वमभिमातिनमप
वर्त्मान्येषामनु रीयते घृतम् । 1-85-3 ।

पदपाठः - गोऽमातरः । यत् । शुभयन्ते । अञ्जिऽभिः । तनूषु । शुभ्राः । दधिरे । विरुक्मतः । बाधन्ते । विश्वम् । अभिऽमातिनम् । अप । वर्त्मानि । एषाम् । अनु । रीयते । घृतम् ॥

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

गोमातरः वेदाभिमानिलक्ष्मीमातृकाः मुख्यप्राणाः मध्वाचार्याः, अञ्जिभिः स्वव्याख्यानरूपाभरणैः, प्रकाशमानैः यत् यदा शुभयन्ते शोभयन्ति । वेदाभिमानिरमायाः अनुग्रहात् वेदान् सम्यक् व्याख्याय प्रकाशमाना भवन्ति इति यावत् । तस्मादेव स्वव्याख्याने अनेकप्रमाणानि उदाहरन्ति । तदानीं, शुभ्राः दीप्तिमन्तः सन्तः, अत्युज्ज्वलकान्तियुक्ताः भवन्तीति यावत् । तनुषू स्वदेहेषु, विरुक्मतः कान्तियुक्तान् आभरणविशेषान् चक्रशङ्खादीन् दधिरे धारयन्ति । सदा श्रीहरिगुणानां उपासनेन तेजोयुक्ताः भवन्तीति यावत् । तथा च विश्वं सर्वं, अभिमातिनम् शत्रुम् प्रतिवादिनम् वा अप बाधन्ते निग्रहं कुर्वन्ति । प्रतिवादिनां निग्रहे सर्वदा सन्नधाः भवन्तीति भावः

। यः एषां मध्वाचार्याणां, वर्त्मानि मार्गान् । अनु अनुसृत्य गच्छति, तस्य घृतम् सारं, वेदान्तसारं, रीयते आगच्छतं मध्वाचार्यं ये अनुसरन्ति तेषां वेदान्तशास्त्रज्ञानद्वारा सकलपुरुषार्थाः भवन्ति । ये श्रीमध्वं द्विषन्ति तेषां दुर्गतिः भवन्तीति यावत् ।

निभृतमोक्षहृदययोगयुजो हृदयं
मुनय उपासते तदरयोऽपि ययुः । 94-24

इति भागवतव्याख्यानसमये श्रीमदाचार्यैः प्रदर्शितम् ।

निभृतो मोक्षवित्प्राणः, तद्योगात् तत्प्रसादतः ।
जानन्ति परमं देवं नान्यथा तु कथंचन ॥

इति भागवतसंहितावचनमपि इममेव विषयं संवदति । तस्मात् अयमेव मन्त्रार्थः । शुभदीप्तौ इत्यस्मात् धातोः णिचि, संज्ञापूर्वकस्य विधेरनित्यत्वात् लघूपधगुणाभावः । विरुक्मतः । विशिष्टा रुक् विरुक् । तद्वन्तो विरुक्मतः । तान् मतुपि अयस्मादित्वेन पदत्वात् कुत्वम् । छान्दसत्वान्न जशत्वम् ।

44) वि ये भ्राजन्ते सुमखासह्
ऋष्टिभिः प्रच्यावयन्तो अच्युता चिदोजसा ।
मनोजुवो यन्मरुतो रथेष्व
वृष्व्रातासः पृषतीरयुग्ध्वम् । 1-85-4 ।

पदपाठः - वि । ये । भ्राजन्ते । सुऽमखासह् । ऋष्टिऽभिः । प्रऽच्यवयन्तः । अच्युता । चित् । ओजसा । मनःऽजुवः

। यत् । मरुतः । रथेषु । आ । वृषऽव्रातासः । पृषतीः । अयुग्ध्वम् ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

सुमखासः शोभनज्ञानयुक्ताः सम्यक्ज्ञानयुक्ता इति भावः । मरुतः मुख्यप्राणाः तदवतारभूताः मध्वाचार्याः वा, ऋष्टिभिः वेदांत, तर्कसायकादिभि आयुधैः तर्कसायकैः वाक्यैरतिबलीयोभि प्रत्यस्त्रैरिवं वैदिकैः इत्युक्तेः । वि भ्राजन्ते शोभन्ते, सदावेदशास्त्रादीनां विचारेण भ्राजमाना भवन्तीति भावः ।

वर्णसौष्टवगरिष्टमतूर्णं
तुल्यमात्रमतिमात्रसुलक्ष्मा ।
व्यूढहृद्यजलदघोषममुष्य
उच्चारणं विदधदभ्यधितार्थम् ॥ 6-2 ॥

इति सुमध्वविजयवचनात् ।

ते मध्वाचार्याः, अच्युता चित् सामान्यैः प्रच्यावयितुमशक्यानि, परवादिनां वाक्यानानि, ओजसा स्वयुक्तिबलेन, प्रच्यवयन्तः निरासकाः भवन्ति ।

एकविंशतिकुभाष्यदूषकं
ब्रह्मसूत्रगणभाष्यमद्भुतम् ।
अप्यदुष्यमतनोदनन्तधीर्भत-
भाविभवदात्मभिः क्वचित् ॥

इति सुमध्वविजयोक्तेः (9-13)

यत् अतः वृषव्रातासः अभीष्टवर्षणासमर्थाः यूयं रथेषु मनोजुवः मनोवेगवद्वेगवत्तरगतीः -

वानरेन्द्र इव वायुजवोऽसौ भीमसेन इव दानवभीमः ।
उल्ललास गिरिपुङ्गवशृङ्गे स व्रजन् वृजिननाशननामा ॥
सुमध्वविजये (6-54)

पृषतीः अभीष्टान् सेचयन्तः, आ आभिमुख्येन, अयुग्ध्वम् । आगच्छध्वम् इति संबन्धितव्यम् । लङ् छान्दसः ।

45) प्र यद्रथेषु पृषतीरयुग्ध्वं
वाजे अद्रिं मरुतो रंहयन्तः ।
उतारूषस्य वि ष्यन्ति
धाराश्चर्मेवोदभिर्व्युन्दन्ति भूम । 1-85-5 ।

पदपाठः - प्र । यत् । रथेषु । पृषतीः । अयुग्ध्वम् । वाजे । अद्रिम् । मरुतः । रंहयन्तः । उत । अरूषस्य । वि । स्यन्ति । धाराः । चर्मऽ इव । उदऽभिः । वि । उन्दन्ति । भूम ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे मरुतः हे मुख्यप्राणाः भवदवताराः मध्वाचार्याः, यूयं यत् यदा, रथेषु रथेषु स्थित्वा, पृषतीः सेचयन्तः, प्रायुग्ध्वं अगमध्वं, तदैव, अद्रिं स्वस्वसिद्धान्ते पर्वतमिव स्थितबुद्धियुक्तं प्रतिवादिनं, वाजे मोक्षं प्रतिगमनासमये, *वनगतौ* इति धातोः । रंहयन्तः निवर्तः । उत तदानीं अरुषस्य ज्ञानस्वरूपस्य नारायणस्य, भूम - भूम्नः, पूर्णस्य, छान्दसः,

षष्टीलोपः, धाराः प्रसादरूपाः विष्यन्ति निसरंति सज्जनान् प्रति इति शेषः । उदभिः उदकैः, वि उन्दन्ति क्लेदयन्ति, देहान् इति शेषः । यथा उदके निक्षिप्तं चर्म काठिन्यं, परित्यज्य, मृदुतरं, विस्तीर्णं च भवति तथा श्रीहरेः प्रसादेन, लिङ्गदेहः मृदुतरो भूत्वा जीवात् बहिर्निर्गच्छति । स्वोपदेशेन यथा श्रीनारायणस्य प्रसादः स्याद् तथा करोतीत्यर्थः ।

46) आ वो वहन्तु सप्तयो रघुस्यदो
रघुपत्वानः प्र जिगात बाहुभिः ।
सीदता बर्हिरुरुवः सदस्कृतं
मादयध्वं मरुतो मध्वो अन्धसः । 1-85-5 ।

पदपाठः - आ । वः । वहन्तु । सप्तयः । रघुऽस्यदः । रघुऽपत्वानः । प्र । जिगात । बाहुऽभिः । सीदत । आ । बर्हिः । उरु । वः । सदः । कृतम् । मादयध्वम् । मरुतः । मध्वः । अन्धसः ॥

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे मरुतः हे मुख्यप्राणाः, मध्वाचार्याः, रघुस्यदः शीघ्रगामिनः, सप्तयः, अश्वाः, अश्वस्थानीयाः गुरवः, वः युष्मान्, आ वहन्तु अस्मदभिमुखे प्रापयन्तु । अथ, वः युषाकमर्थे, सदः उन्नतस्थानं, उरु विस्तीर्णं, कृतं वर्तते, तत्र बर्हिः तत् आ सीदत निषण्णा भवेत । उपविशत इति भावः । तत्र स्थित्वा रघुपत्वानः रघोः रामचन्द्रस्य पदोः चरणयोः, वानः सम्यक्भक्तिः यस्यासौ, रामचरणभक्तः मध्वः, बाहुभिः स्वयुक्तिभिः, प्र जिगात । शत्रून् प्रतिवादिनः वा जितवान् इत्यर्थः

। ततः अन्धसः अन्धान् ज्ञानविकलान् मिथ्यामतप्रवर्तकान् स्यति नाशयतीति अन्धसः, मध्वः श्रीमध्वाचार्यः मध्वाचार्यो भूत्वा इति भावः । मादयध्वं सज्जनान् सम्यक्ज्ञानप्रदानेन परमानन्दरूपमोक्षं प्रयध्वम् । वन षणसंभक्तावस्माद्भावे यन् । वत्वं छांदसम् । यद्वा रघून् पातीति रघुपः - रघुपति, रघुपश्चासौ त्वं च रघुपत्वं, ऋचां त्व इत्यादाविव त्वशब्दः एवशब्दपर्यायः । तस्मिन् अनः प्राणः यस्येति रघुपत्वानः तदेकार्पितप्राणः इत्यर्थः । अथवा, नपुंसकलिङ्गानस्शब्दः रथवाचि । तथा च रघुपः नारायणः त्वं एकः मुख्यः रथः यस्येति । तस्य मध्वाचार्यस्य नारायण एव प्रेरक इति भावः । यद्वा रघुपस्य भावः रघुपत्वं, तेन रूपेण आ समन्तात् नमतीति स तथोक्तः । नमतेरैणादिको ऊः । सर्वत्र भगवद्रूपेषु रामत्वानुसन्धानेन भजमानः । अत एव मूलरामार्चक इति प्रसिद्धः ।

ननु *रघुपत्वानः जिगात्* इति कथं उद्देश्यविधेययोः भिन्नवचनमिति चेन्न यावः शर्म शशमानाय सन्तीत्यादाविव तस्यादोषत्वात् । विद्यारण्यस्तु अत्र विद्यमानस्य मध्वशब्दस्य षष्ठ्यन्तत्वं छांदसत्वं च अङ्गीकरोति । प्रथमान्तत्वेनैव व्याख्याने तदभावात् तदयुक्तम् ।

ननु अस्य सूक्तस्य मरुद्गणवाचित्वात् कथं मुख्यप्राणतदवतारपरत्वमिति चेन्न । मरुद्गणानां *रुद्रस्य सूनवः*, इति रुद्रपुत्रत्वानुपपत्तेः । कश्यपपुत्रत्वेन प्रसिद्धत्वात् । न च प्राणस्य रुद्रपुत्रत्वाभावात् समानो दोष इति वाच्यम् । अत्र पतितस्य रुद्रपदस्य विष्णुवाचित्वात् । आऊं नाऽनुमानमतच्छब्दात्

आऊं इति प्रथमाध्यायस्यतृतीयपादे तृतीयसूत्रे उदाहृतं ब्रह्माण्डपुराणे । रुजं द्रावयते यस्माद्रुद्रः तस्माद्जनार्धनः इति पुराणवचनाच्च ।अन्यथा मरुद्गुणानां अस्मिन् सूक्ते उक्तानां महागुणानामनुपपत्तेः ।तस्मादिदं वाक्यं आनन्दतीर्थोक्त्यनुसारेण परममुख्यवृत्या विष्णुपरम् ।मुख्यवृत्या मुख्यप्राणपरमिति ज्ञेयम् ।

47)तेऽवर्धन्त स्वतवसो महित्वना
नाकं तस्थुरुरु चक्रिरे सदः ।
विष्णुर्युद्धावद्वृषणं मदच्युतं
वयो न सीदन्नधि बर्हिषिप्रिये ।1-85-7 ।

पदपाठः - ते ।अवर्धन्त ।स्वऽतवसः ।महिऽत्वना ।आ ।नाकम् ।तस्थुः ।उरु ।चक्रिरे ।सदः ।विष्णुः ।यत् ।ह ।आवत् ।वृषणम् ।मदऽच्युतम् ।वयः ।न ।सीदन् ।अधि ।बर्हिषि ।प्रिये ॥

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

ते मुख्यप्राणाः श्रीमध्वाचार्याः, <u>स्वतवसः</u> स्वं स्वयमेव स्वसामर्थ्येनैव तवः बलं येषां ते स्वतवसः, तवशब्दस्य बलनामासु पाठात्, स्वसामर्थ्येनैव बलादियुक्तः । इन्द्रियादिप्रेरकानां स्वावरदेवानां सहायं विना । *इन्द्रियाभिमानिनो देवाः न वायोस्तु नियामका* इति वचनात् ।अन्येषां जीवानां च सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदिति सूत्रानुसारेण ज्ञानादिप्राप्तौ देवतानां सहकारः वर्तते ।न तथा श्रीमदाचार्यस्येति भावः ।<u>अवर्धन्त</u> वृद्धिं गताः ।<u>ते</u> <u>महित्वना</u> स्वमहिम्नैव

नाकं मोक्षं तत्साधनं ज्ञानं, आ सम्यक् तस्थुः प्राप्तवन्तः । *स एनान् ब्रह्म गमयति* इति वचनात् अन्येषां सज्जनानां वायोरपेक्षासत्वेऽपि तस्य भगवदन्यापेक्षाभावात् । तत्र च उरुं श्रेष्ठं सदः स्थानं चक्रिरे कृतवन्तः । नन्वेवं सति तेषां स्वातन्त्र्यं किं नेत्याह - यत् यस्मात् कारणात्, विष्णुः नारायणः, वृषणं कामाभिवर्षकं मदज्युतं मदं च्यावयतीति परवादीनां मदं अहंकारं नाशयतीति तं मध्वाचार्यं भगवद्रक्ष्यत्वेन एकवचनं, आवत् अरक्षत् ह प्रसिद्धेतत् ।

जनकवाचमिमामवधारयन्
कलमुदाहरदम्बुरुहेक्षणः ।
स्वपदमाव्रजतो व्रजतोऽप्यतो
ननु सखा मम काननगो विभुः ॥

इति वचनात् ( सुमध्वविजये 3-12)

तादृशाः ते श्रीमध्वाचार्याः, वायोः न पक्षिणः इव यथा पक्षिणः शीघ्रमागच्छन्ति तथा शीघ्रं, बर्हिषि अधि अस्माभिः क्रियमाणे ज्ञानयज्ञे, प्रिये प्रीतिकरे, सीदन् सीदन्तु आगच्छन्तु अस्मन्मनसि सन्निहिता भवन्तु ।

यद्वा यतः ते श्रीमध्वाचार्याः प्रिये प्रीतिविषये, तदेतत्प्रियःपुत्रात्प्रेय इत्यादिवचनात्, बर्हिषि नारायणे, बृह वृधावस्मात् औणादिकप्रत्यये, लघूपधगुणे रूपम् । ब्रह्मपर्यायः वायोः न विशिष्टा मुक्ता इव अधि आधिक्येन, सीदन् शरणं गच्छन्निति । सर्वदा तद्विषयकज्ञानवान् भवतीति भावः । सदितेः गत्यर्थस्यावगत्यर्थत्वात् । अट्भावः छान्दसः । तथैव

सायणभाष्येऽपि उक्तम् ।

निजहृत्कमलेऽतिनिर्मले सततं साधु निशामयन्नपि ।
अवलोक्य पुनः पुनर्नवं तमसौ विस्मित इत्यचिन्तयत् ॥
इति वचनात् ( सुमध्वविजये 7-17) ।

48 ) शूरा इवेद्युयुधयो न जग्मयः
श्रवस्यवो न पृतनासु येतिरे ।
भयन्ते विश्वा भुवना मरुद्भ्यो
राजान इव त्वेषसंदृशो नरः । 1-85-8 ।

पदपाठः - शूराःऽ इव । इत् । युयुधयः । न । जग्मयः । श्रवस्यवः । न । पृतनासु । येतिरे । भयन्ते । विश्वा । भुवना । मरुत्ऽभ्यः । राजानःऽ इव । त्वेषऽसंदृशः । नरः ॥

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

इत्=अपि च, जग्मयः=सन्ततगमनशीला (सदागतयः) वायवः मुख्यप्राणाः, नरः=मनुष्यरूपेण अवतीर्णाः सन्तः श्रीमध्वरूपेण इति भावः, शूराः इव=क्षत्रियाः इव श्रीभीमसेना इव, पृथनासु युयुधयः न= सेनासु युध्यमाना इव (सभासु), न श्वस्यवः= कीर्तिमनिच्छिन्तः केवल विष्णोः प्रीत्यर्थं, त्वेषसंदृशः=प्रकाशमानतया संयक् दृश्यमानाः सन्तः, येतिरे= प्रयत्नशीलाः अभवन् । विष्णुप्रसादसंपादने यत्नं कुर्वन्ति । यतयो भवन्ति इत्यर्थः ।
तथा
विश्वा=सर्वाणि, भुवना= भुवनानि दुर्वादिनां लोकाः,

राजान इव=दुर्योधन इव, मरुद्भ्यः= श्रीमध्वेभ्यः, भयन्ते= भयग्रस्ताः भवन्ति इत्यर्थः,
अथवा
राजान इव=चन्द्राः इव, त्वेषसंदृशः= प्रकाशमानाः भवन्तीत्यर्थः,

जग्मिशब्दस्य कोशे वायुवाचित्वाऽङ्गीकारात् । श्रवः कीर्तिं आत्मन इच्छन्तः श्रवस्यवः । *क्याच्छन्दसि* इति उप्रत्ययः (2-1-170), *यती प्रयत्ने*, *छन्दसि लुङ्लङ्लिटः*,(3-4-6) इति वर्तमाने लिट् । भयन्ते - *निभि भये* इति धातोः, *बहुलं छन्दसि* इति वचनात् शपः श्लेरभावः । आत्मनेपदित्वं च । *त्विष दीप्तौ* पचाद्यच । दृशिर प्रेक्षणे । सम्पूर्वादस्मात् संपदादिलक्षणौ भावे क्विप् ।

भवतोरितः सततसेवनामृते
मम मङ्क्षुमस्तु भगवन्ननुग्रहः ।
न लभेय वल्लभतमेदृशं सुखं
जगतां त्रयेऽपि जगदेकमङ्गलम् । 8-48 ।
इति सुमध्वविजयवचनात्

आनन्दतीर्थपुंसिंहो मायावादिदितेः सुतान् ।
विदार्य युक्तिनखरैरप्रतीपोऽभिभासते ।
पलायध्वं पलायध्वं त्वरया मायिदानवाः ।
सर्वज्ञहरिरायाति तर्कागमदरारिकृत् ॥

द्रवत द्रवताऽशु मायिनः प्रविशध्वमतन्विता गुहाः ।

कमलारमणं वराश्रयः समुदेत्यखिलज्ञभास्करः ॥

इत्यादिवचनानि अत्र संवादीनि (तद्वोद्योते)।

श्रीमन्तं शशिवदनं कुशेशयाक्षं
गम्भीरस्वरमतिदिव्यलक्षणाढ्यम् ।
पश्यन्तः स्वगुरुमथाऽर्चय्य् कृतार्था
वाण्या तं हरिरतिपूर्णकाममेते ।16-55 ।

इति सुमध्वविजयवचनमपि आचार्यस्य प्रकाशमानरूपत्वे प्रमाणम् ।तस्मादेव शशिपदम् प्रयुक्तम् ।

49) त्वष्टा यद्वज्रं सुकृतं हिरण्ययं
सहस्रभृष्टिं स्वपा अवर्तयत् ।
धत्त इन्द्रो नर्यपांसि कर्तवे
अहन्वृत्रं निरपामौब्जदर्णवम् ।1-85-9 ।

पदपाठः - त्वष्टा ।यत् ।वज्रम् ।सुऽकृतम् ।हिरण्ययम् ।सहस्रऽभृष्टिम् ।सुऽ अपाः ।अवर्तयत् ॥ धत्ते ।इन्द्रः ।नरि ।अपांसि ।कर्तवे ।अहन् ।वृत्रम् ।निः ।अपाम् ।औब्जत् ।अर्णवम् ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

<u>सु</u> <u>अपा</u> शोभनकर्मा, *अपस्* शब्दस्य कर्मनामासु पाठात् । <u>त्वष्टा</u> विश्वकर्ता, नारायणः, <u>सुकृतं</u> सम्यक् व्यक्तीकृतं, अपौरुषेयत्वात् । हिरण्मयम् नारायणप्रतिपादकं, *हितत्वात् रमणीयत्वात् हिरण्यं वर्णतोऽपि वा* इति वचनात् नारायणं

प्रापयतीति हिरण्ययं, सहस्रभृष्टिम् सहस्रशाखायुक्तम् । यत् व्रजम् दोषरहितम् वेदवाक्यम् ऽवर्तयत् दत्तवान् । येन वेदवाक्येन इन्द्रः मुख्यप्राणावतारः श्रीमध्वाचार्यः, वृत्रं संसारं, वृत्रशब्दस्यान्धकारवाचित्वात् तस्य च मार्गप्रतिबन्धकत्वात् तद्वत् संसारोऽपि मोक्षमार्गप्रतिबन्धकत्वात् वृत्रशब्दवाच्यः भवति । अहन् अवधीत् । नाशमकरोत् स्वव्याख्यानेन मोक्षमार्गमुपदिश्य, नारायणप्रसादद्वारा संसारं नाशयतीति भावः । तेन अपां अर्णवं संसारसमुद्रं निः औब्जत् निःशेषेणापातयत् । एतादृशः श्रीमध्वाचार्योऽपि नरि मनुश्यरूपे अपांसि परवादिनिग्रहादीनि कर्माणि कर्तवे कर्तुं, धत्ते दध्रे । *तेने ब्रह्म हृदा य आदिकवये* इति भागवतवचनात् ।

50) ऊर्ध्वं नुनुद्रेऽवतं त ओजसा
दादृहाणं चिद्बिभिदुर्वि पर्वतम् ।
धमन्तो वाणं मरुतः सुदानवो
मदे सोमस्य रण्यानि चक्रिरे । 1-85-10 ।

पदपाठः - ऊर्ध्वम् । नुनुद्रे । अवतम् । ते । ओजसा । दादृहाणम् । चित् । बिभिदुः । वि । पर्वतम् ॥ धमन्तः । वाणम् । मरुतः । सुऽदानवः । मदे । सोमस्य । रण्यानि । चक्रिरे ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

ते श्रीमध्वाचार्याः, ओजसा स्वसामर्थ्येन अवतं संसारकूपम्, ऊर्ध्वं उपरि, कूपस्य उपरि इति भावः । नुनुद्रे प्रेरितवन्तः सज्जनानितिशेषः । ददृहाणं अत्यन्तं दृढतरं,

चित् अपि पर्वतम् स्थितं संसारम् । वि भिद्रुः विशेषेण छेदनं चक्रुः । तन्निमित्तकं किंचिदपि दुःखं नानुभवन्तीति यावत् । तथा सुदानवः दानशूराः शत्रूणां खण्डयितारः, पूज्यानां पालयितारः, स्वसंकीर्तनादिना सज्जनानां शोधयितारः, वा मरुतः मध्वाचार्याः, वाणं शतसंख्याभिः युक्तिभिः युक्तं वादिविशेषं, परवादिनं, धमन्तः वादयन्तः निराकुर्वन्तः सन्तः, श्रीमध्वाचार्याः, सोमस्य ज्ञानयज्ञस्य, मुदे आनन्दनिमित्तं । रण्यानि परवादिनिराकरणरूपाणि वादकर्माणि, चक्रिरे कृतवन्तः । *णुद प्रेरणे* लिटि *इरयो रे* इति रे आदेशः । *दृह दृहि वृद्धौ* लिटि कानच् । *ध्मा शब्दाग्निसंयोगयोः*, *पाघ्रा* इत्यादिना धमादेशः । डुदाञ् दाने, दोऽवखण्डने, *दैप् शोधने*, एतस्मादौणादिकोऽनुक् प्रत्ययः । *आदे च उपदेशेऽशिति* इति आत्वं । तंत्रावृत्यैकशेषाणां अन्यतमानामनेकार्थाश्रयणम् ।

51) जिह्मं नुनुद्रेऽवतं तया
दिशासिञ्चन्नुत्सं गोतमाय तृष्णजे ।
आ गच्छन्तीमवसा चित्रभानवः
कामं विप्रस्य तर्पयन्त धामभिः । 1-85-11 ।

पदपाठः - जिह्मम् । नुनुद्रे । अवतम् । तया । दिशा । असिञ्चन् । उत्सम् । गोतमाय । तृष्णऽजे ॥ आ । गच्छन्ति । ईम् । अवसा । चित्रऽभानवः । कामम् । विप्रस्य । तर्पयन्त । धामऽभिः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे मध्वाचार्यः, भवन्तः जिह्मं कुटिलं, वंचकस्वभावयुक्तं दुर्वादिनं, तया दिशा मृत्युक्तमार्गेण, अवतं अन्धंतमः प्रति, नुनुद्रे प्रेषितवन्तः । तथा च तृष्णजे पिपासिताय, गोतमाय सदा वेदानां विचारेण ग्लानीभूताय, गोभिः ताम्यतीति गोतमः तस्मै, सर्वदा वेदशास्त्राणां विचारेण लौकिकधनकनकादिपदार्थरहिताय । *तेषां नैहिकसंपदस्ति विद्वुषामित्यज्ञगाथां कथाम्*, इति रुक्मिणीयवचनात् । तदर्थं, उत्सं जलं तृप्तिजनकं पदार्थविशेषमिति यावत् । असिञ्चन् सेचनमकुर्वन् । किं च अवसा रक्षणेन ईं ज्ञानश्रियं, आ गच्छन्ति दातुं तत्समीपं प्राप्नुवन्ति । चित्रभानवः दीप्तकिरणाः श्रीमध्वाचार्याः, विप्रस्य ब्राह्मणस्य, कामं मनोरथं, धामभिः स्वसामर्थ्येनैव तर्पयन्त पूरयामासुः ।

क्षेत्राग्र्यं त्रिभुवनवैश्वनाथिनाथं
प्रस्थाय प्रचुरतरान्तरः प्रभावी ।
श्रीकृष्णामृतपरमार्णवाभिधानां
चक्रे सद्वचनततिं स्वभक्तभूत्यै ॥ 16-40

इति सुमध्वविजयोक्तेः ।

52) या वः शर्म शशमानाय सन्ति
त्रिधातूनि दाशुषे यच्छताधि ।
अस्मभ्यं तानि मरुतो वियन्त
रयिं नो धत्त वृषणः सुवीरम् । 1-85-12 ।

पदपाठः - या । वः । शर्म । शशमानाय । सन्ति । त्रिऽधातूनि । दाशुषे । यच्छत ॥ अधि । अस्मभ्यम् । तानि

। मरुतः । वि । यन्त । रयिम् । नः । धत्त । वृषणः । सुऽवीरम् ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे मरुतः श्रीमध्वाचार्याः, वः युष्मत्संबन्धीनि, या यानि शर्म सुखरूपाणि, त्रिधातूनि रामकृष्णवेदव्यासाख्यानि, सन्ति तानि, शशमानाय युष्मान् स्तुतिभिः भजमानाय, दाशुषे दानशीलाय, स्वभक्ताय, अधि आधिक्यं, यच्छत प्रयच्छति । पुनः पुनरतिशयेन प्रयच्छन्तीति यावत् । यानि हनुमद्भीममध्वरूपेण कृतानि रामकृष्णवेदव्यास सेवारूपाणि कर्माणि, तानि अस्मभ्यं वि यन्त विशेषेण प्रयच्छत । अस्मद्विषये तत्प्रार्थनां कृत्वा तदनुग्रहोऽस्मासु यथा स्यात् तथा विधेयमिति यावत् । किं च वृषणः अभीष्टवर्षणकर्तारः, नः अस्मभ्यं सुवीरम् शोभनै वीरैः आरब्धान्तगामि पुत्रशिष्यैश्च युक्तम् । रयिं धनं, ज्ञानाख्यमिति । धत्त धारयत प्रयच्छत ।

एवं पुराणरामायणभारतोक्तलक्षणानां मरुतां चास्मिन् सूक्ते प्रतिपादितत्वात् त्रिकोटिमुख्यप्राणरूपप्रतिपादकमेतत्सूक्तमिति प्राप्ते तद्रूपतया प्रतिपाद्यमानस्य श्रीमध्वाचार्यस्यापि प्रतिपादकत्वात् श्रीमध्वाचार्यस्य प्राणावतारत्वं सिद्धम् । तस्मादेव षष्टे मन्त्रे तस्य साक्षात् मध्वेति नाम्ना निर्देशः ।

53) मध्वो वो नाम मारुतं यजत्राः
प्र यज्ञेषु शवसा मदन्ति ।
ये रेजयन्ति रोदसी चिदुर्वी
पिन्वन्त्युत्सं यदयासुरुग्राः । 7-57-1 ।

पदपाठः - मध्वः । वः । नाम । मारुतं । यजत्राः । प्र । यज्ञेषु । शवसा । मदंति ॥ ये । रेजयंति । रोदसी (इति) । चित् । उर्वी इति । पिन्वन्ति । उत्सं । यत् । अयासुः । उग्राः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे मरुतः, अस्य सूक्तस्य मरुद्देवताकत्वात् *मरुतः* इति संबोधनम् । यजत्राः यजनशीलाः *यज देवपूजायां*, भगवत्भक्ताः । वः युष्मद्संबन्धी, यः मध्वः नाम मध्वाचार्य इति नाम, प्र प्रकृष्टेषु, यज्ञेषु ज्ञानयज्ञेषु । शवसा बलेन, शवस् शब्दस्य बलनामासु पाठात् । उच्चैरित्यर्थः । मदन्ति नन्दन्ति स्तुवन्तीत्यर्थः । यद्यपि मुख्यप्राणावताराः बहवः सन्ति । तथापि ज्ञानकाले जिज्ञासवो मध्व इति नामानमुच्चस्वरेण स्तुवतीत्यर्थः । ये मरुतः ऊर्वी विस्तीर्णां सुपांसुलुक् । रोदसी द्यावापृथिव्यावपि, रेजयन्ति कंपयन्ति चेष्टयन्तीत्यर्थः ।

प्रकारं प्रकटीकर्तुमारभ्य विरराम नो
महीयोमतिमाहात्म्यान् द्वैवश्येन खलन् खलः ॥ 10-5 ॥
इत्युक्तेः (सुमध्वविजये)

यत् यस्मात् कारणात् उत्सं सर्वोत्तमं नारायणम् उत् सर्वोत्कर्षेण सरति गच्छति व्याप्नोतीति वा । पिन्वन्ति सादरमवलोकयन्ति । अत एव उग्राः एकादशरुद्राः, अपि अयासुः शरणं जग्मुः ।

विप्रात्मेशः क्षणार्थं कृतनतिरशिति श्रीहृषीकेशदेशे ।
स्पष्टं दृष्टोऽप्यदृष्टः सपदि विहितवान् विस्मयण् देहभाजम्
॥
स्वप्ने स्वप्रेरितान्यस्थलगनिजनरोपाहृतेर्भक्ष्यभोज्यैः ।
प्राज्यैः प्राभोजयत् स्वं गुरुमखिलगुरुण् वेदयन् वेदबन्धुम्
॥ 10-50 ॥
इति सुमध्वविजयोक्तेः ।

## गोमञ्जरी

यत् यस्मात्, उग्राः बाहुयुद्धे वाग्युद्धे चात्युग्राः, ये वायोः कुमारकाः हनुमद्भीममध्वावताराः, उर्वी उर्वीं भूमिं सुपांसुलुक् अयासुः आजग्मुः तस्मात् उत्सं स्वपदाम्बुजे उत्सुकं पुरुषं पिन्वन्ति तत्तत्योग्यतानुसारेण इष्टार्थान् सिञ्चन्ति, सेचनं कृत्वा च रक्षंति इत्यर्थः । पिन्व सेचने इति धातोः । भूमिं प्रति आगमनात् भूमिस्थसज्जनानां रक्षकत्वं मुख्यप्राणस्य प्रसिद्धमेव । ये केचित् एव, उर्वी उर्व्यौ उत्कृष्टे रोदसी द्यावापृथिव्यौ रेजयन्ति युगे युगे भूषयन्ति । भूषितभूमिभागः इत्युक्तेः । स्वबन्धनसर्पबन्धनादिना अयोग्यजनान् मोहयन्ति च इतिसूचनार्थं रेजयन्ति इति अलौकिकप्रयोगः । हे मरुतः, वः युष्मत्सम्बन्धी मध्वो नाम मध्वाचार्यस्यावतारः, तं मारुतं मुख्यप्राणावतारं मध्वाख्यावतारं यजत्राः याजकाः यज्ञरक्षकाः यजमानाद्याः ऋत्विजः सभ्याश्च, यज्ञेषु क्रियमाणेषु सत्सु, शवसा सुखेन, कठिणाब्राह्मणखण्डार्थकथनरूप कर्मनिर्णयाख्य ग्रन्थश्रवणजनित सुखेन , प्रमदन्ति बहुसन्तुष्टाः भवन्ति । *ज्ञात्वा कर्मसमाचरेत्* इति वचनात् कर्मखण्डगतानां वाक्यानां अर्थस्य कर्मनिर्णयग्रन्थे श्रीमध्वाचार्यैः विवृतत्वात्, तत्श्रुत्वा

कर्मकाण्डवाक्यानां अर्थं ज्ञात्वा यजमानाद्याः सर्वे जनाः स-न्तुष्टाभवन्तीति भावः ।

एवं वेदवाक्येषु मध्वाचार्यस्य वाय्ववतारत्वे सिद्धे तदनुकूलपुराणवचनानि अपि सन्ति । तस्मात् श्रीमध्वाचार्यस्य वायुरूपत्वात् तदुक्तमेव ग्राह्यमिति सिद्धम् । प्रत्युत शंकराचार्यस्य दैत्यस्वरूपत्वबोधकानि अपि अनेकवाक्यानि सन्ति । तस्मात् प्रथमाष्टके श्रूयमानमिदम् वाक्यम् । उपह्वये सुधामिति वक्ये स्थितं *सुहस्ता* इति शब्दः शंकराचार्यस्य बोधकं न संभवति । एवमेव विरुद्धार्थबोधकानां पुराणानामपि व्यवस्था कार्या । वेदानुसारि यद् वाक्यम् तदेव प्रमाणत्वेन स्वीकरणीयम् । नान्यथा । इति सौरशिवादिपुराणोक्तानां विषयाणां ग्रहणं न कर्तव्यम् । तदेव मनसि निधाय पुराणानां सात्विकत्वादिव्यवस्था स्वीकृता । सर्वेषां जीवानां वेदविद्यायां मोक्षे च अधिकाराभावात्, तत्तत्योग्यतानुसारेण वक्तव्यम् इति अयोग्यान् प्रति रहस्योपदेशः न कार्यः । तेषां अन्यथाज्ञानमेवोत्पाद्य तेषां नरकाद्यनर्थसाधनाय तामसानि तथा राजसानि पुराणानि प्रवृत्तानि । तस्माद् तदुक्तम् न ग्राह्यम् । उक्तं हि गरुडपुराणे -

वायोर्नामानि वक्ष्येऽहं श्रुणु पक्षीन्द्र सत्तम ।
संकर्षणाच्च गरुड यो जयायां बभूव ह ॥
स वायुः प्रथमो ज्ञेयः प्रधानेति च कीर्तितः ।
लोकचेष्टाप्रदत्वात् सः सूत्रनाम्नापि कीर्तितः ॥
बद्रीस्थश्च विष्णोश्च धैर्येण सवनाय सः ।
धृतिरूपं ययौ वायुःतस्मात् धृतिरिति स्मृतः ॥
एवमेव विजानीयान्नन्यथा तु कथं चन ।

एतस्य श्रवणादेव मोक्षं याति न संशयः ।

इति गरुडवचनात् मध्वाचार्यस्य श्रीवायुरूपत्वं ज्ञायते । गरुडपुराणे उक्तं हि अन्यत्र -

हरि प्राप्तौ साधनाः सन्ति तेषु
मुख्यं किंसिच्चान्तयामास देवी ।
तेषां मध्ये श्रवणं श्रेष्ठमाहुः
पुराणानां सात्विकानां सदापि ॥
विष्णोरुत्कर्षे वर्तते यत्र वायोः
तथोत्कर्षः सज्जनानां पुराणे ।
श्राव्यं सदा विष्णुबुद्ध्या सदैव
नान्यच्छ्राव्यं साधनं तत्र नैव ॥

श्रुत्वा तत्त्वानां धारणानन्तरं च
सद्वैष्णवानां स्पर्शनं दुर्घटं च॥
एते दोषा ज्ञानपूतानपीह
कुर्वन्ति सन्देहयुतान् सदैव ॥
इत्यादि वचनैः विष्णोरुत्कर्षकतया तथा वायोर्महिमाश्रवणस्य नित्यत्वं ज्ञायते ।

54) निचेतारो हि मरुतो गृणन्तं
प्रणेतारो यजमानस्य मन्मः ।
अस्माकमद्य विदर्थेषु
बर्हिरावीतये सदत पिप्रियाणाः । 7-57-2 ।

पदपाठः - निचेतारः । हि । मरुतः । गृणंतं । प्रणेतारः । यजमानस्य । मन्म ॥ अस्माकं । अद्य । विदथेषु । बर्हिः । आ । वीतये । सदत । पिप्रियाणाः ॥

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे मरुतः श्रीमुख्यप्राणाः श्रीमध्वाचार्याः, हि यस्मात् कारणात्, गृणन्तं स्तुवन्तं नारायणं, निचेतारः नितरां वेत्तारः । भगवद्विषयकज्ञानवन्तः । किं च यजमानस्य स्वभक्तस्य, मन्म अभिप्रेतं कामं, प्रणेतारः मापयितारः प्रदेतारः । अत एव अस्माकं विदर्थेषु ज्ञानसाधनीभूतेषु यज्ञेषु, पिप्रियाणाः प्रीतिमन्तः सन्तः, अद्य अस्मिन् दिवसे, वीतये ज्ञानार्थं, बर्हिः दर्भस्यानीयेषु मनसि आ सदत उपविशत प्रविश्य सर्वदा सन्निहिता भवत ।

55) नैतावदन्ये मरुतो यथेमे
भ्राजन्ते रुक्मैरयुधैस्तनूभिः ।
आ रोदसी विश्वपिशः पिशानाः
समानमञ्ज्यञ्जते शुभे कम् । 7-51-3 ।

पदपाठः - न । एतावत् । अन्ये । मरुतः । यथा । इमे । भ्राजन्ते । रुक्मैः । आयुधैः । तनूभिः ॥ आ । रोदसी इति । विश्वपिशः । पिशानाः । समानम् । अञ्जि । अञ्जते । शुभे । कम् ॥

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

इमे मरुतः श्रीमुख्यप्राणाः श्रीमध्वाचार्याः रुक्मैः रोचमानैः, आयुधैः गदादिभिः शंखचक्रादिचिन्हैः वा, यदा दधाति । तथा तनूभिः शरीरैः यथा भ्राजन्ते शोभन्ते । एतावत् अन्ये एतद्व्यतिरिक्ता देवाः न शोभन्ते । ते मध्वार्याः इति अन्वयः । विश्वपिशः पूर्णप्रज्ञाः, साधनकारणीभूतसर्वावयवयुक्ता इति भावः । तस्मादेव आ समन्तात् रोदसी द्यावापृथिव्यौ पिशानाः स्वप्रभया भासमानाः द्यावापृथिवीस्थं सदधिकारिवर्गान् जनान्, सत्रत्वं ज्ञापयन्ते वा । अत एव समानं बहुप्रमाणसहितं, पूर्णगुणं, अञ्जि प्रकाशमानं, कम् नारायणं, शुभे सदधिकारिवर्गे अञ्जते प्रापयंति छान्दसमात्मनेपदम् । मुक्तियोग्यान् जीवान् मोक्षं प्रापयतीत्यर्थः । यद्वा कम् नारायणम्, अञ्जि सज्जनवर्गे, *अञ्ज् - व्यक्तिभक्षणकान्तिगतिषु* इति कान्त्यर्थत्वात् । समानं सप्रमाणं यथा भवति तथा आ सम्यक् अञ्जते प्रापयन्ति ।

इति तं ब्रुवाणमयमब्रवीद्विभुर्भुवि
सन्तिसोम्यपुरुषा गुणोचिताः
विमलान् मणीनिव गुणोज्झितानिमान्
दयया विशोधय विशुद्धगोगणैः ॥ 8-50 ॥
इति सुमध्वविजयवचनात् ।

56) ऋधक् सा वो मरुतो दिद्युदस्तु
यद् व आगः पुरुषता कराम ।
मा वस्तस्यामपि भूमा यत्रजाः अस्मे
वो अस्तु सुमतिश्चनिष्ठा । 7-51-4 ।

पदपाठः - ऋधक् । सा । वः । मरुतः । दिधुत् ऽस्तु । यत् । वः । आगः । पुरुषता । कराम ॥ मा । वः । तस्यां । अपि । भूम । यजत्राः । अस्मै (इति) । वः । अस्तु । सुऽमतिः । च । निष्ठाः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे मरुतः श्री मुख्यप्राणाः श्रीमध्वाचार्याः, वः युष्माकं, सम्बन्धिनी, सा प्रसिद्धा, दिद्युत् द्योतमाना गदा रूपा हेतिः, अस्मान् ऋधक् पृथक् अस्तु । यत् यद्यपि, वः युष्माकं, आगः अपराधं, पुरुषता पुरुषतया, सुपां सुलुक्, कराम कुर्मः । यद्यपि वयं प्रमादाद्वा पुरुषधर्माद्वा, भ्रान्त्या वा भवदीयाराधनं कुर्मः तथापि भवद्भिः तत्क्षंतव्यमेव गदाप्रहारादिकं पृथगेव कर्तव्यम् । ये अस्मादृशः कादाचित्कभ्रमप्रमादेनैवापराधिनः न किन्तु निरूढद्वेषाः ते एव तद्विषया इति भावः । अस्मे अस्माकं, वः भवत्सम्बन्धिनी, सुमतिः भवद्भिरचितशास्त्रजन्यं विष्णुसर्वोत्तमत्वादि सम्यक्ज्ञानं अपि यत्र निष्ठा श्रद्धा । वः सकाशात्, भवत्प्रसादात् अस्तु तेन वयं यजत्राः विष्णोः, युष्माकं च भक्त्या सम्यक् पूजकाः, सन्तः, तस्याम् दिद्युति, मा भूम भवदीयगदाप्रहारविषय न भवेम । किन्तु ये नैतादृशाः भवदीयशास्त्रोक्तज्ञानरहिताः तन्निष्ठा वा न भवन्ति, अत एव विष्णुपूजकाः वा वायुपूजकाः वा न भवन्ति प्रत्युत द्वेषमेव चरन्ति तेष्वेव गदा पातनीयेति भावः ।

57) कृते चिदत्र मरुतो रणन्ता
अनवद्यासः शुचयः पावकाः ।

प्र णोऽवत समतिभिर्यजत्राः
प्र वाजेभिस्तिरत पुष्यसे न । 7-57-5 ।

पदपाठ - कृते । चित् । अत्र । मरुतः । रणंत । अनवद्यासः । शुचयः । पावकाः ॥ प्र । नः । अवत । सुमतिभिः । यजत्राः । प्र । वाजेभिः । तिरत । पुष्यसे । नः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

ये मरुतः मुख्यप्राणाः श्रीमध्वाचार्यः, पुर्वोक्तरीत्या निष्ठादौ कृते चेत् कृतं एव, रणन्त=तत्त्वोपदेशमाकार्षुः । *रण शब्दे* इत्यस्माल्लङ्गात्मनेपदे प्रथमपुरुषबहुवचनान्तम् रूपम् । छान्दसोऽऽभावः । अत एव अनवद्यासः विपरीत ज्ञानादिशून्यः, शुचयः शुद्धरूपाः, परशुक्लत्रयान्तर्गताः । पावकाः शोधकाः । अत एव यजत्राः पूजनीयाः । श्रीहरिपूजकाः यूयं नः अस्मान् सुमतिभिः सम्यक्ज्ञानादिभिः ज्ञानादिकं दत्वा इति भावः । प्र सम्यक् अवत रक्षणं कुरुत । ज्ञेय एतैः सदा युक्तैः भक्तिमद्भिः सुनिष्ठितैरिति वचनात् । अस्माभिः पूजिता यूयं सम्यक्ज्ञानप्रदानेनास्मान् पालयतेति समुदायार्थः । किं च नः अस्मानं पुष्यसे पुष्ट्यर्थं, वाजेभिः अन्नैः अपि सह प्रस्तिरत शीघ्रम् आगच्छत । यद्वा वाजेभिः भवत्प्रसाद्लब्धज्ञानादिना अस्माभिः संपादितैः पुत्रैः शिष्यैश्च नः अस्मान् प्र तिरत संसारसागराद्बहिः निःसारयत ।

58) उत स्तुतासो मरुतो व्यन्तु
विश्वेभिर्नामभिर्नरो हवींषि ।
ददात नो अमृतस्य प्रजायै

जिगृत रायः सूनृता मघानि ।7-57-6 ।

पदपाठ - उत । स्तुतासः । मरुतः । व्यंतु । विश्वेभिः । नामऽभिः । नरः । हवींशि ॥ ददात । नः । अमृतस्य । प्रऽजायै ।जिगृत ।रायः ।सूनृता ।मघानि ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

उत अपि च मरुतः हे मुख्यप्राणाः, हे मध्वाचार्याः, विश्वेभिः सर्वैः । नामभिः आनन्दतीर्थैः, पूर्णप्रज्ञ इत्यादि-नामभिः, स्तुतासः यद्वा सर्वलोकैः, नरः *नेता* इति स्तुताः । नृनय इति धातुः ।अथ रायः अपेक्षितप्रदातारः, रा दाने इति धातुः ।यूयं नः अस्माकं प्रजायै संतस्यै, अमृतस्य मोक्षं ददात दत्त, मोक्षाधिकारिणी एव अस्माकं संततिरस्तु इति भावः ।भवन्तः हवींषि भवदर्थं अस्माभिः उपाहृतानि व्यन्तु भक्षयन्तु ।मोक्षप्रदाने क उपाय इत्यताह नः अस्मान्, प्रति, सूनृता भवत्कृतशास्त्ररूपाणि सुभाषितान्येव, मघानि धनानि, जिगृत उपदिशत मोक्षसाधनीभुत ज्ञानोपायानि भवदीयसुभा-षितान्येवातः तदस्माकमुपदेष्टव्यमिति यावत् ।

59) आ स्तुतासो मरुतो विश्व ऊती
अच्छा सूरीन् सर्वतात जिगात ।
ये नस्त्मना शतिनो वर्धयन्ति
यूयं पात स्वस्तिभिः सदानः ।7-56-7 ।

पदपाठ - आ ।स्तुतासः ।मरुतः ।विश्वे ।ऊती । अच्छा ।सूरीन् ।सर्वताता ।जिगात ॥ ये ।नः ।त्मना ।

शतिनः । वर्धयंति । यूयं । पात । स्वस्तिऽभिः । सदा । नः ।

अत्र वैश्वनाथिनारायणपण्डिताचार्यव्याख्यानसारः

हे मरुतः, श्रीमुख्यप्राणाः श्रीमध्वाचार्याः, आ स्तुतासः एवमस्माभिः सम्यक् स्तुताः, यद्वा आ समन्तात् स्तुताः सर्वैःस्तूयमानाः, अत एव विश्वे पूर्णाः, ऊती यूयं, सर्वताता सर्वतः, सूरीन् ज्ञानिनः शेषरुद्रगरुडादीन्, अच्छा सम्यक्, जिगात जयस्व । रुद्रादिसर्वपण्डितोत्कृष्टः इत्यर्थः । यद्वा, सूरीन् स्वभक्तान् प्रति, ऊती रक्षणार्थं, आ सम्यक् शीघ्रं जिगात आगच्छत । ये श्रीमध्वाचार्याः, त्मना स्वेच्छयैव, शतिनः शतसंख्यायुक्तज्ञानिनः, नः अस्मान् वर्धयन्ति ज्ञानभक्त्यादिमोक्षोपयोगिगुणैरभिवृद्धान् कुर्वन्ति । यूयं सदा सर्वकालेऽपि नः अस्मान् स्वस्तिभिः मङ्गलकरैः मङ्गलकरगुणप्रदानैः सदा सर्वदा पात पालयत ।

60) प्रसेनानिः शूरो अग्रे रथानां
गव्यन्नेति हर्षते अस्य सेना ।
भद्रान्कृण्वन्निन्द्रहवांत्सखिभ्य
आसोमो वस्त्रारभसानि दत्ते । 9-96-1 ।

पदपाठः - प्र । सेनाणीः । शूरः । अग्रे । रथानां । गव्यन् । एति । हर्षते । अस्य । सेना ॥ भद्रान् । कृण्वन् । इन्द्रऽहवान् । सखीभ्यः । आ । सोमः । वस्त्रा । रभसानि । दत्त ।

गोमञ्जरी

शूरः शौर्यवान्, गव्यन् भक्तेभ्यः वेदानां अर्थं निरूपयन्,

तस्मादेव सेनानिः वैष्णवानां धुरंधरः, रथानां प्रतिवादिस्थानां अग्रे, एति गच्छति । तदा तस्मिन्नेव काले, अस्य मध्वस्य सेना, शिष्यसमूहः प्रहर्षति, सन्तुष्टो भवति। इन्द्रहवान् इन्द्रेणाहूयंत इति । योगेन कवीन्द्रस्य वेदव्यासस्याऽतिप्रियोऽयं दुर्वादिभञ्जने पराक्रमे इति आह्वानयोग्यान्, भद्रान् परममंगलान् कृण्वन्=कृवि हिंसा करणयोः कुर्वन् सोमः मध्वाचार्यः सखिभ्यः वैष्णवेभ्यः, रभसानि शीघ्राणि वस्त्रा वस्त्राणि ऐश्वर्यादीनि दत्ते ददाति । इति श्रीमध्वाचार्यपरत्वोऽर्थः । एवमेव हनुमत्परतया, भीमसेनपरतयाऽपि योज्यम् ।

अत्र गोशब्दस्य वेदवाचित्वप्रसिद्ध्या गव्यम् इत्यस्यार्थः वेदानां यथार्थनिरूपयन् इति भवति । भीमसेन पक्षे तु रथं विहार भूमौ पदा गच्छन्नित्यर्थः । *अस्मिन् युद्धे त्वयि भारः समाहितः* इति श्रीकृष्णवचनात् तस्य सेनाधिपतित्वाभावेऽपि सेनाजित्वमुपपन्नं भवति । हनुमत्पक्षे तु इन्द्रवाहान् सीताप्रतिकृतिस्थितेन्द्रस्य स्तुतिरूपाह्वानयोग्यान् इत्यर्थः । सखिभ्यो वस्त्राणि दत्ते इति तु अग्नेः वाय्ववतारत्वात् स्थूलपृष्टवेष्टनाय दैत्यजनैः दत्तानि वस्त्राणि प्रदत्तवान् इत्यर्थः । एवं इदं वाक्यं वायोरवतारत्रयपरतयाऽपि योज्यम् ।

ननु एतेषां वाक्यानां सायणादिभाष्यकारैः अन्यपरत्वेन व्याख्यातम् । तस्मात् इमानि वाक्यानि तत्र प्रमाणानि भवितुं नार्हन्ति इति चेन्न । तदुक्तार्थेषु दोषसद्भावात् । तदत्र किञ्चित् प्रदर्श्यते । प्रसेनानीः इति वाक्यं स्कन्दपरमिति मन्यन्ते । तन्न । स्कन्दाख्य सेनान्याः पूज्यमाने प्रस्तावायोगात् । गव्यत्पदोक्त पदाचरणयुद्धायोगाच्च । आ समन्तात् सखिभ्यः

वैष्णवेभ्यो रभसानि नाना विधचित्रप्रतिमादि संभ्रमन्ति, व-स्त्रा-वस्त्राणि, दत्त-दत्तवानिति ।इदं च स्कन्दस्य न युज्यते । अत्र च भीमसेनः युवराजे स्थित्वा वस्त्राणि दत्तवानिति संगच्छते ।एवमेव अस्य वाक्यस्य मध्वाचार्यपरत्वमपि वर्ण्य-ते ।तथाहि मध्वाचार्यस्य वैष्णवधुरत्वं , नारायणगुणवर्णनेन साधुजनानां आनन्ददायित्वं, मोक्षे संकल्पमात्रेण वस्त्रादिदानं च प्रतिपाद्यते। एतदुक्तं श्रीवादिराजतीर्थैः स्वीययुक्तिमल्लिका-यां फलसौरभे (507-512 श्लो ) -

प्रसेनानीरिति श्रुत्या यद्भीमहनुमत्कथा ।
स्पष्टंनिरूपितात्रैव तत्सोमस्सोमवंशजः ॥
अग्रे रथानां सेनानी उश्मरोऽसौ भुवि यस्सदा ।
एति प्रहर्षते भीमसेनसेना तदा किल ॥
भीमसेनो ह्यसौ सेनानित्वं यस्तस्य शोभते ।
कवीन्द्रयादवेन्द्राद्धनोचितान् सुरराट् स्तुतान् ॥
भद्रान् पराक्रमान् कुर्वन् युवराजपदे स्थितः ।

सखिभ्यो विष्णुभक्तेभ्योः वस्त्रावस्त्राणि संभ्रमाः ।
युतानि च समन्तात् सः दत्ते किल दिने दिने ॥
इति भीमं स्तौति सैव हनुमन्तं च शंसति ॥
एकप्रकारकार्यत्वात् एकरूपत्वात्ततोऽपि वा ॥ इति ॥

**61) अजीतयेऽहतये पवस्व
स्वस्तये सर्वतातये बृहते ।
तदुशन्ति विश्व इमे
सखायस्तदहं वश्मि पवमान सोम। 9-96-4।**

पदपाठः - अजितये । अहृतये । पवस्व । स्वस्तये । स-र्वऽतातये । बृहते ॥ तत् । उशन्ति । विश्वे । इमे । सखायः । तत् । अहं । वश्मि । पवमान । सोम ।

## गोमञ्जरी

हे सोम, सोमनामकपवमान मुख्यवायो , त्वं पवस्व इतः ततः गमनं कुरु । तव संचारं । उशन्तीनेनान्वयः विश्वे सर्वे इमे मदीयाः, सखायः मम मित्रभूताः वैष्णवाः, अजीतये असुरेभ्योऽस्मज्जयाभावाय, अहृतये तेभ्यां एवास्मद् हनना-भावाय, स्वस्तये अस्माकं क्षेमाय, सर्वतातये सर्वत्र विस्ता-रवते, सर्वाभिष्टकराय वा, बृहते सर्वगुणपूर्णाय नारायणाय तत्सेवार्थमित्यर्थः, उशंती इच्छन्ति, हे पवमान सोम अहं अहमपि वश्मि त्वद्रक्षणमिच्छामि । तव हनुमद्रूपे राममूढ्वा सुग्रीवं प्रति पवनेन सीतान्वेषणार्थं मेरो दक्षिणदिग्भागे सर्वत्र पवनेन, लंकायां पवनेन, युद्धे संजीवनार्थं पवनेन, रथस्थ-रावणं प्रति रामं ऊढ्वा इतस्ततः पवनेन, भगवत्सेवारूपस्य फलस्य दर्शनात् इत्यर्थः । भीमसेनावतारे, लाक्षाकारागृहाद् युधिष्टिरादीन् ऊढ्वा गुहायां पवनेन, एकचक्रनगरे बकव-धार्थं पवनेन, कृष्णेन सह जरासन्धवधार्थं पवनेन, वनवासे सौगन्धिकानयनार्थं पवनेन, युद्धे गदां गृहीत्वा इतस्ततः प-वनेन, साधूनां राक्षसेभ्यः अहतिस्वस्ति रूपफलस्य दर्शनात् । मध्वाचार्य रूपे च बाल्ये विमानगिरीन्द्रात् मातृगृहं प्रति पवनेन, गोरक्षणार्थं पवनेन, रामसेवार्थं पवनेन, ज्ञानदा-नार्थं देशेदेशे पवनेन, द्वारकापुरादागतकृष्णनमनार्थं ज्ञानदृ-ष्ट्यैव दृष्ट्वा विप्रैः सह समुद्रं प्रति पवनेन, दुर्मतप्रवर्तकेभ्यो दैत्येभ्यः तवावतारप्रतिपादकसाधूनां अज्ञान इत्याख्य फलस्य

सत्यत्वस्थापनेन, जगतः सत्याख्यफलस्य मोक्षसाधनज्ञानात् परमस्वस्तिरूपमोक्षस्यफल्स्य, सूत्रापव्याख्या प्रत्याव्यनेन यथास्थितार्थप्रतिपादकभाष्यकरणेन च हरेः मूलरूपे सर्वावतारेषु निर्दोषत्वं व्याप्तत्व, सर्वोत्तमत्व, सर्वगुणत्वस्थापनेन, भगवत्सेवारूपस्य फलस्य दर्शनात् । *द्वैपायनस्य सेवार्थं बदर्यां तु कलौ युगे वायुश्च यतिरूपेण कृत्वा दुःशास्त्रखण्डनम्* । इत्यादि पुराणवचना नि ज्ञायते । अस्यवाक्यस्य केवल सोमार्थत्वे सर्वतातये सर्वैः इन्द्रियाभिमानिदेवैः स्तूयमानाय यज्ञाय पवनस्य अस्मदभिमुखं आगच्छेति यदुक्तं तन्न संगच्छेत । इदं च पवमानसूक्तमिति प्रसिद्धम् , पवमानशब्दवाच्यत्वं परममुख्यवृत्या हरेः मुख्यवृत्या वायोरेवेति ज्ञेयम् ।

62) सोमः पवते जनिता मतीनां
जनिता दिवो जनिता पृथिव्या ।
जनिताग्नेर्जनिता सूर्यस्य
जनितेन्द्रस्य जनितोत विष्णोः । 9-96-5 ।

पदपाठः - सोमः । पवते । जनिता । मतीनां । जनिता । दिवः । जनिता । पृथिव्याः । जनिता । आग्नेः । जनिता । सूर्यस्य । जनिता । इन्द्रस्य । जनिता । उत । विष्णोः ।

## गोमञ्जरी

सोमः=श्रीमध्वाचार्यः, ज्ञानामृतं सूते इति । पवते बदरीकाश्रमं प्रति गच्छति । श्रीवेदव्यासस्य सेवार्थमिति शेषः । कीदृशः सः । उपदेशादिना, मतीनां बुद्धीनां, जनिता उत्पादकः । जीवजडत्मकस्य विश्वस्य मिथ्यात्वप्रतिपादने-

न उत्सन्नायाः सज्जनबुद्धेः तत्सत्यत्वस्थापनेन पुनः प्रसवात् । *अयमिह सुमतिं वायुदेवो विदध्यादिति वचनात्*। दिवः पृथिव्याः अग्नेः सूर्यस्य इन्द्रस्य, जनिता सत्यत्वस्थापकः । तथा सर्वोत्तमत्वज्ञापनाद् विष्णोः नारायणस्य प्रकटीकरणात् । *जनिता यस्ता विजानात् स पितुः पिता* इति श्रुतेः ।

63) ब्रह्म देवानां पदवीः कवीनां
ऋषिविर्प्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणां स्वधितिर्वनानां
सोमः पवित्रमत्येति रेभन् । 9-96-6 ।

पदपाठः - ब्रह्मा । देवानाम् । पदऽवीः । कवीनाम् । ऋषिः । विप्राणाम् । महिषः । मृगाणाम् ॥ श्येनः । गृध्राणाम् । स्वऽधितिः । वनानाम् । सोमः । पवित्रम् । अति । येति । रेभन् ।

गोमञ्जरी

देवानां सुराणां सज्जनवर्गाणां मध्ये ब्रह्मा पूर्णः, उत्तमः, जीवोत्तमः इति यावत् । *वैष्णवानां यथा शम्भुरिति* भागवतोक्तेः । *इयदामननात्* इति सूत्रात् । विप्राणां ज्ञानिनां मध्ये, ऋषिः ज्ञानोपदेशकः गुरुः इति यावत् । *बहवो गृहिणोऽन्यस्मात् समग्रानुग्रहं ययुः* इति सुमध्वविजयवचनात् ।

गृध्राणां मध्ये श्येनः बलदायकतया थेने स्थितः ।
वनानां छेदेश्वदितिः बलदायकतया परश्वधेस्थितः ।
द्वयोः कुठारश्वधितिः परशुश्च परश्वध । इत्यमरः ।

एतादृशगुणोपेतः सोमः श्रीमध्वाचार्यः, रेभन् गर्जनं कुर्वन् । भा शब्द इति धातोः, प्रकाशमानो वा, भा दीप्तौ इति धातोः । कवीनां ज्ञानिनां, मोक्षं प्रति गन्तृणां, पदवीः मार्गान्, मोक्षमार्गभूतार्चिरादिविद्युदंतदेवतालोकान् पवित्रं ज्योतिश्चक्रं । अत्येति । अतिक्रम्य वर्तते । सर्वस्मादुपरितनलोकाधिपतिरिति यावत् । *वैद्युतेनैव ततस्तच्छ्रुतेरिति* (4-3) ब्रह्मसूत्रवचनात् ।

विद्युत्पतिर्वायुरेव नयेदत् ब्रह्म नचापरः ।
कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकमिति बृहत्तन्त्रे ।

*ततो देवानां समवर्ततासुरे कः कस्मै देवाय हविषा विधेमेति* (10-121-8) मन्त्रे सायणमाधवेनापि, *ततः तस्माद्धेतो, देवानां देवादीनां, सर्वेषां प्राणिनां, असुः प्राणभूतः, एकः मुख्यः प्रजापतिः समवर्तत समाजायत* इति प्राणस्य सर्वदेवोत्तमत्वं प्रतिपादितम् । तस्मादस्मद्गुरुवर्यैः प्रदर्शित अर्थ एव समीचीनः ।

64) स पूर्व्यः पवते यं दिवस्परिश्येनो
मथायदिषितस्तिरोरजः ।
स मध्व आयुवते वेविजान
इत्कृशानोरस्तुर्मनसाह बिभ्युषा । 9-77-2 ।

पदपाठः - सः । पूर्व्यः । पवते । यं । दिवः । परि । श्येनः । मथायत् । इषितः । तिरः । रजः ॥ सः । मध्वः । आ

। युवते । वेविजानः । इत् । कृशानोः । अस्तुः । मनसा । अह । बिभ्युषा ।

## गोमञ्जरी

पूर्व्यः सर्वेभ्यः जीवेभ्यः पूर्वं विद्यमानः *सर्वजीवोत्तमः* इति यावत्। सः पवमानः, वायुः, पवते श्वासरूपेण पवनं शुद्धिं करोति । यं वायुं पवनं, दिवः द्युनामकवैकुण्ठलोकस्य, परि परितः विद्यमानम् वदन्ति । श्येनः वायुः शी निरतिशय-सुखवान् नारायणः स एव । आ सम्यक् इनः स्वामी यस्य सः श्येनो वायुः । ईषितः सज्जनानां इष्टः यः पवमानः रजो रजोगुणं तदुपलक्षिततमोगुणनिर्मितं च दुःशास्त्रं, तिरः निराकृत्य, मथायत् वेदशास्त्राख्यसमुद्रस्य विचाररूपं मथनं अकरोत् । सः दुःशास्त्र निराकरणपूर्वक सच्छास्त्र निर्मापकः वायुः, मध्वः मध्वाचार्यनामा सन्, वेविजानः विजृ पृथक्भावे इति धातोरिदं रूपम् । ईशजीवजडात्मकस्य प्रपञ्चस्य विशेष-तः भेदभावं प्रदर्शयन् ।

जीवेशयोः भिदाचैव जीवभेदः परस्परम् ।
जडेशयोः जडानां च जडजीवभिदा तथा ।
पञ्चभेदा इमे नित्या सर्वावस्थासु सर्वदा । (परमोपनिषदि)

इत्यादि प्रमाणवाक्यानां उदाहरणेन इत्यर्थः । आयुवते स-मंतात् सज्जनेषु सर्वदा मिश्रितो भवति । भेदशास्त्रं उपपादयन् तेषां कृपां करोति इत्यर्थः । दुर्जनेषु अमिश्रितो भवति च इ-त्यर्थः । तेषां अभिमतं अद्वैतशास्त्रं निराकरणात् तेषां असह्यो भवति । यु मिश्रणामिश्रणोः इति धातोः इदं रूपम् ।

ननु "युते" इति एकवचनेन भाव्यमिति चेन्न । सर्वेषां सज्जनानां तथा सर्वेषां दुर्जनानां हृदये स्थित्वा तत्तत्योग्यतानुसारेण कार्यं करोति इति सूचनार्थत्वात् बहुवचनस्य व्यत्ययो बहुलमिति वा । इत् एव मध्वरूपवदेव कृशनोः ब्रह्मप्रलयकाले जलावरणोपरि तेजोरूपावरणतया स्थितस्य अग्नेः अस्तुः निरसनशीलः स्यात् । असुक्षेपणे इति धातोः औणादिके उन् प्रत्ययः । तेजसः वायौ लयः शास्त्रे तावत् प्रसिद्धः । बिभ्युषा भयंकरेण मनसा संहाररूपत्वात् भयंकरचित्तेनसहितः, आयुवते ऊर्ध्वमधश्च विद्यमाने आवरणरूपे वायौ मिश्रितो भवति । तत्र तत्र स्थितस्य अग्नेः संहाराय बहुरूपवान् भवति इति यावत् । अहो इदम् आश्चर्यमिति सूचयति ॥ अत्र वेविजान शब्दस्य परभाष्यकारैः *चलन्नघो गच्छन्* इति व्याख्यातम् । तत्तु न शब्दमूलम् । विज् धातोः पृथक्भावेऽर्थे एव प्रवृत्तेः । न तु चलनाभावे । श्येनपदस्य पक्षिपरत्वेन व्याख्यानं तावत् न युक्तम् । वायुपरतया विष्णुभक्तपरत्वेन तदेव युक्तम् । *ईशितः* शब्दस्य प्रेरकत्वार्थकमपि न धातुमूलम् । इष इष्टायामिति धातोरिदम् रूपं इष्टार्थकम् । *कृशानो* शब्दस्य सोमपालकत्व बोधकतया ब्रह्मणवाक्यस्योदाहरणमपि प्रसंगानुकूलमिति ।

अयं श्रीमध्वः न केवलं श्वासादिना जगत्पवित्रं करोति, वैकुण्ठादिलोकेषु वर्तते दुःशास्त्राणि भञ्जयित्वा सच्छास्त्रं सद्युक्तिभिर्व्याख्याति, पञ्चभेदानुपदिश्य विष्णुं सर्वोत्तमं प्रतिपादयति सज्जनेषु मिश्रितो दुर्जनेषु अमिश्रितश्च भवति अपि तु प्रळयादिकाले ब्रह्माण्डावरणभूत अग्निरपि अस्मिन् लीनो भवति तादृश अतिशयित महमहिमासौ भयंकरचित्तः इति ज्ञेयम् । एतेन ईदृशस्य तुच्छदुर्मतखण्डनाय कठिनचित्तता न

आश्चर्यावहे इति भावः ।

65) ते न पूर्वासः उपरास इन्दवो
महेवाजाय धन्वन्तु गोमते ।
ईक्षेण्यासो अह्यो न चारवो
ब्रह्मब्रह्मये जुजुषुर्हविर्हविः । 9-77-3 ।

पदपांठः - ते । नः । पूर्वासः । उपरासः । इंदवः । महे । वाजाय । धन्वंतु । गोऽमते ॥ ईक्षेण्यास्यः । अह्यः । न । चारवः । ब्रह्मऽब्रह्म । ये । जुजुषुः । हविःऽहविः ।

गोमञ्जरी

नः अस्माकं पूर्वासः उपदेष्टृतया प्रेरकतया वा ज्ञानोदयात् पूर्वं विद्यमानाः इन्दवः इष्टदानशीलाः स्वेष्टरमापतेरुपदेष्टारश्च, ते वायोरवताराः उपरास मोक्षप्रापकतया तदुपयुक्तसंहारकर्तृतया च ज्ञानोदयात् उपरि विद्यमानाः, ते वायोरवताराः गोमते ज्ञानवते, महे महते, वाजाय अन्नाया, होतॄणां व्याख्यातॄणां च पोषणयुक्ताय अन्नाय, यज्ञसाधनाय यज्ञोपयुक्ताय अन्नाय, धन्वन्तु धनधाः भवन्तु । धन धान्य इति धातोर्रूपम् । अह्यः अहिसंबन्धिन्य रत्नप्रभाः न इव, ईक्षेव्यासः ईक्षणीयाः रत्नप्रभावत् द्योतमानदेहाः चारवः अगण्यलावण्ययुक्तमनोहराः, सन्तः ब्रह्मा देहिनां देहे देहे विद्यमानं श्रीहरिं जुजुषु सेवां अकरोत् । हविः यज्ञे यज्ञे याज्ञिकैः वायवे स्वाहेति दत्तं हविः, भोक्तृभिः वैदिकैः प्राणादिरूपेण दत्तं हविः, भीमसेन रूपेण एकचक्रनगरे बकाय गृहे गृहे दत्तं हविः, मध्वाचार्यरूपेण भिक्षादातृभिः दत्तं हविः, जुजुषुः मातरिश्वा जगाम इति

श्रुतिः । वरेण्यमिति वत् ईक्षेव्यासेति रूपम्। तयोः जुष्टिं स्त्रीपरत्वापेक्षया सर्पसम्बन्धिन्येति रत्नप्रभापरत्वं च युक्तं । शब्दलम्बत्वात् । *इयदामननात्* इति सूत्रमपि संवदन्ति इममेवार्थजातमिति तदेव हृद्यम् ।

66) विष्टंभो दिवो धरुणः पृथिव्या
विश्वा उत क्षितयो हस्ते अस्य ।
असत्त उत्सो गृणते नियुत्वान्
मध्वो अंशुः पवते इन्द्रियाय । 9-89-6 ।

पदपाठः - विष्टंभः । दिवः । धरुणः । पृथिव्याः । विश्वाः । उत । क्षितयः । हस्ते । अस्य ॥ असत् । ते । उत्सः । गृणते । नियुत्वान् । मध्वः । अंशुः । पवते । इन्द्रियाय ।

गोमञ्जरी

हे पवमान, दिवः स्वर्गलोकस्य, विष्टंभः आधारभूतः, गृहस्य स्तम्ब इव । पृथिव्याः धरुणः धारुणः धारकः सर्वस्य जगतः मिथ्यात्वाख्य नाशत उद्धारात्, सज्जनानां गुरुत्वेन उद्धारात् वा । उत्सः नारायणस्य स्तोत्रकरणे अथवा हयग्रीवस्य स्तोत्रश्रवणे उत्सुकः आसक्तियुक्तः इति यावत् । नियुत्वान् सर्वदा श्रीहरिविषयकयोगवान् सम्बन्धवन् । युत् योगः तद्वान् इत्यर्थः । हे वायो, ते तव अंशुः अंशरूपः मध्वः मध्वाचार्यः मूलरूपावताररूपयोः ताद्धीलिकत्वसूचनार्थं उकारः । असन् अयोग्यैः ज्ञातुमशक्यत्वात् असत् शब्दवाच्यम् नारायणम् गृणते गृणीते स्वयं स्तोत्रं करोति । बहुरूपापेक्षया बहुवचनम् । इन्द्रियाय सज्जनानां वागिन्द्रियाय नारायणस्तु-

तिं कुर्वत्सज्जनानां इन्द्रियोद्बोधनाय इत्यर्थः । पवते देशे देशे पवनं करोति । हरिस्तुतिरूपं श्रुतिपुराणपञ्चरात्रादिकं उपदिश्य सज्जनवागिन्द्रियेण हरिं स्तावयितुं सर्वत्र संचारं करोति इत्यर्थः । अस्य मध्वस्य विश्वाः सम्स्ताः क्षितयः उत भूमंडलं च, हस्ते तिष्टति । सकलदेशसज्जनगुरुत्वात् सर्वापि क्षितिः तादृशा इत्यर्थः ।

67) उन्मध्व ऊर्मिर्वनना आतिष्टिपदपो
वसानो महिषो विगाहते ।
राजा पवित्ररथो वाजमारुहत्
सहस्रभृष्टिर्जयतिश्रवो बृहत् । 9-86-40 ।

पदपाठः - उत् । मध्वः । ऊर्मिः । वननाः । आतिष्टिपत् । अपः । वसानः । महिषः । वि । गाहते ॥ राजा । पवित्रऽरथः । वाजं । आ । अरुहत् । सहस्रऽभृष्टिः । जयति । श्रवः । बृहत् ।

गोमञ्जरी

वसानः सत्यलोकादागत्य भूलोके वासं कुर्वन्, ऊर्मिः उ उत्कर्षेणोरुरुर्वीमिर्मतिः यस्य सः, निरुक्तत्वात् उकारस्य नाशः । सर्वेभ्यो ऊर्ध्वं मिः मतिः यस्य सः, इति वा उत्कृष्टज्ञानत्वात् । अत एव महिषः सकलाधिकारिवर्गेषु उत्तमः, मध्वः मध्वाचार्यः वनना वननीया भजनीया वन संभक्ताविति धातोः । कृत्यलुटो बहुलमिति अर्हार्थे ल्युट् प्रत्ययः । अथवा वन्यते भगवान् आभिः इति वननाः विद्याः । अपः आपयंति ज्ञापयंति नारायणमिति अपः विद्याः सप्तविद्याः

विगाहते सदा विचारयति यस्मात् उत अतिष्टत् उदस्थापयत् ताः तस्मात् सः मध्वः <u>महिषः</u> इत्यन्वयः । अन्यार्थे पातनं पातः, स्वस्वार्थे प्राप्तिः उत्थितिः इति भावः । <u>पवित्ररथः</u> पवित्र नामक सुदर्शनचक्रमेव रथः यस्य सः चक्रोपरिस्थितः चक्रस्थितं चक्रिणमष्टबाहुमिति वचनात् । <u>सहस्रभृष्टिः</u> चक्रसहस्रदलेषु सहस्रधाव्याप्तस्वकरचरण शिरोरुहादि ज्वालामालः । भस्ज पाकः इति धातोः परदहनकिरणशीला इत्यर्थः । मध्यान्हसुर्यप्रतिभाप्रकाशमिति वाक्यात् सुदर्शनाख्य हरेः अग्निरिव जाज्वल्यमानसर्वावयवा , <u>राजा</u> सर्वेषां नियमकः सुदर्शनरूपी नारायणः, <u>बृहत्</u> सर्वेभ्यो उत्कृष्टं, वाजं अन्नमिव अतिप्रियम्, श्रवः मध्वाचार्यैः साक्षाद्भगवन्मुखाच्छ्रुतवेदपंचरात्रादिश्रवणम् । <u>आरुहत्</u> सदा विषयतया सन्निहितोऽभवत् । <u>जयति</u> उत्कृष्टो वर्तते परानभिभावयति च । स्वकृतश्रवणपरितुष्टसुदर्शनकृपया मध्वाचार्यस्य पूर्वोक्तसकलविद्योद्धारणसामर्थ्यं विरोधभूतसकल दुर्मतनिराकरण सामर्थ्यं च भगवन्मुखादेव श्रुतश्रवणबलात् श्रवणपरितुष्टदुष्टसंहारक सुदर्शनात्मकात्युग्रभगवत्कृपया चेति दर्शयितुं उत्तरार्धम् । दुर्मतप्रवर्तकानां मुखभंगस्य सुदर्शनकार्यत्वादिति भावः । अत एव *आरुहन् जयति* इति क्रियापदद्वयम् । दुष्टसंहारकर्ता भक्तरंजकर्ता च दर्शयितुं <u>पवित्ररथ सहस्रभृष्टिरिति</u> विशेषणद्वयम् ।

68) प्रावीविपत्वाच ऊर्मिं न सिंधुः
गिरस्सोमः पवमानो मनीषाः ।
अन्तः पश्यन्वृजने मावरण्या
तिष्टति वृषभो गोषु जानन् । 9-96-7 ।

पदपाठः - प्र । आवीविपत् । वाचः । ऊर्मिं । नः । सिंधुः । गिरः । सोमः । पवमानः । मनीषाः ॥ अन्तः (इति) । पश्यन् । वृजना । इमा । अवरणि । आ । तिष्टति । वृषभः । गोषु । जानन् ।

गोमञ्जरी

गिरः प्रतिक्षणं स्वमुखात् निसरद्वाक्य समुदायस्य, जात्यैकवचनम् । सिंधुः समुद्रः इव विद्यमानः, यथा तरंगानां आधारः समुद्रः एवं अनन्तवेदानां उपदेष्टृत्वात् श्रीमध्वाचार्योऽपि आधारः इति भावः । सोमः सोमनामकः पवमानः मध्वाचार्यरूपी वायुः । मनसः इष्टाः इष्यम्ते इति ईषाः=दैर्ध्यं विशेषद्योतकम् शकन्ध्वादिषु पाठात् टि लोपे मन् ईषाः=मनीषाः इति रूपम् । मनीषाः मनसां इष्टाः वाचः वेदब्रह्मसूत्रादिवाचः, ऊर्मिं न ऊर्मिमिव, प्रावीवपत्=सज्जनेषु विशेषेण अभिवृद्धिं अकरोत् । प्रपूर्वकात् विपूर्वकात् विप प्रवर्तने इति धातोः रूपम् । ब्रह्मसूत्रोपनिषदां भाष्यकर्तरि वैष्णवमतप्रवर्तके मध्वरूपे वायौ एव एतादृशसामर्थ्यसद्भावात् तस्यैव श्रीमध्वाचार्यस्यैव प्रसक्तिरिति भावः । गोषु विद्यासु, वृजना अयोग्यैरपि स्वीकृतानि, इमा=इमानि, अवराणि अनुत्तमानि मध्यमधमानि राजसतामस पुराणशास्त्रादीनि सात्विकेष्वपि मोहकानि सदागमविरोधेन जानन् अन्तं पश्यन् - स्वहृदयकमले नारायणं पश्यन्, वा तेषु प्रसक्तान् दोषान् पश्यन्, वृषभ सकलाधिकारिषु श्रेष्ठः श्रीमध्वः पवमानस्य आ तिष्ठति सकल हृदयेषु तत्तत्बुद्धिशोधकतया तिष्ठति । सन्निहितो भवति । इमा इति *सुपां सुलुक्* इति सूत्रेण डादेशः । यथा सोमः चन्द्रः पौर्णिभ्यां समुद्रस्य वृद्धिं करोति । तद्वत् श्रीमध्वाचार्यः वेदशास्त्राणां स्वव्याख्यानेन समृद्धि करोति । तद्व्याख्यानाभावे तदर्थाः न

परिस्पुरति इति भावः । तस्मादेव मनीषाः इति सज्जनानां इष्टाः इति वाचः विशेषणं प्रदत्तम् ।

69) सिंहं नसंत मध्वो अयासं
हरिमरुषं दिवो अस्य पतिम् ।
शूरो युत्सु प्रथमः पृच्छते
गा अस्य चषसा परिपात्युषा । 9-89-3 ।

पदपाठः - सिंहं । नसंत । मध्वः । अयासं । हरिम् । अरुषम् । दिवः । अस्य । पतिम् ॥ शूरः । युत्ऽसु । प्रथमः । पृच्छते । गा । अस्य । चषसा । परि । पाति । उषा ।

गोमञ्जरी

युत्सु वाग्युद्धेषु, शूरः शौर्य्वान्, प्रथमः उत्साधकवर्गेषु उत्तमः, मध्वः मध्वाचार्यः, अस्य सज्जनवर्गस्य, दिवः ज्ञानस्य, पतिं नियामकं, सज्जनानां ज्ञानदातारमिति यावत्, अरुषम् सज्जनवर्गेषु कोपरहितम्, अय पय गतौ इत्यस्य क्कसुन्प्रत्यये, अत्वसंतस्यचाधातोरिति उपधादीर्घे रूपम्। हरिम् दुर्जनसंहारकत्वात् हरिनामकं, न संत=नसो नासापुरयोः अन्तः अवकाशो यस्य सः तम् विवृतनासापुटम्, *सुपां सुलुक्* इत्यादिना सुलोपे रूपम् । सिंहं *नामैकदेशे नामग्रहणम्* इति नृसिंहं, गाः सद्विद्याः पृच्छतं शिष्यो भूत्वा वेदादिसकलसच्छास्त्राणां अर्थं विचारयति ।बुद्धिशाणत्वसिद्धये, तस्योत्तरश्रवणेन विशेषज्ञानवान् च भवति अस्य नृसिंहस्य चक्षुसा ज्ञानचक्षुषा श्रीहर्युपदिष्टज्ञानप्रसादेन, उषा ज्ञानामृतसेचकः सन्, श्रीमध्वाचार्यः परिपाति=सज्जनानां वृन्दं परितः रक्षणं क-

रोति । उष सेचने इति धातोः श्वन्नुक्षन् पूषम् इत्यादिना उणादिसूत्रेन कनिप्रत्यये रूपम् ।

70) प्रधारा मध्वो अग्रियो महीरपो विगाहते ।
हविः हविष्षु वन्द्यः । 9-7-2 ।

पदपाठः - प्र । धाराः । मध्वः । अग्रियः । महीः । अपः । वि । गाहते ॥ हविः । हविष्षु । वन्द्यः ।

गोमञ्जरी

अग्रियः=श्रेष्ठः उत्तमः हविः=विष्णोः हविरिव प्रियः, प्रलयकाले हविर्भूतो वा, पुल्लिङ्गो छांदसः हविष्षु हविर्भूतेषु देवेषु, वंद्यः स्तुत्यः, हविः ज्ञानयज्ञे विष्णोः परिवारतया ध्यानार्थमाहूयमानः, आहूयमानदेवेषु स्तुत्यः, तत्रैवाहूयमानदेवेषु स्तुत्यो वा, मध्वः श्रीमध्वाचार्यः, प्रधाराः प्रकृतज्ञानधारासहिताः, महीः महतीः अपः ज्ञानसाधनीभूतऋगादिसर्वविद्याः विगाहते स्वबुध्या अवगाहते, सूत्रभाष्यकरणार्थं विचारयतीत्यर्थः । विपूर्वकात् गाहू विलोडने इति धातोः रूपमेतत् ।

अथवा बदरीकाश्रमगमनकाले, अग्रियः स्वशिष्याणां अग्रणीभूत्वा अग्रतो गच्छन् । हविः गङ्गातरणकाले म्लेच्छभटैः माऽयाहि इति आहुतः, हविष्षु वन्द्यः, स्वशिष्येषु स्तुत्यः, मध्वः मध्वाचार्यः, प्रधाराः प्रकृतधारारूपप्रवाहसहिताः, महीः पूज्याः, महपूजायाम् इति धातोः रूपम् । अपः गङ्गाजलानि विगाहते स्वशिष्यान् स्कन्धभुजादिषु विभ्रद् बलात् विगाहते । उक्तं हि सुमध्वविजये दशमसर्गे -

वारयत वारयत वैरिसुहृदोऽमून्
मारयत मारयत पारगमनात् प्राक् ।
आपतत आलपत इत्यवदद्दुच्चैः
सत्वरकराजपुरुषानुचितवाच ॥ 10-10 ॥

71) यस्मिन्वृक्षे मध्वदः सुपर्णा
निविशन्ते सुवते चाधि विश्वे ।
तस्येदाहुः पिप्पलं स्वाद्वग्रे
तन्नोन्नशद्यः पितरं न वेद । 1-164-22 ।

पदपाठः - यस्मिन् । वृक्षे । मधुऽ अदः । सुऽपर्णाः । निऽविशन्ते । सुवते । च । आधि । विश्वे ॥ तस्य । इत् । आहुः । पिप्पलं । स्वादु । अग्रे । तत् । न । उत् । नशत् । यः । पितरम् । न । वेद ॥

यस्मिन् वृक्षे साधनभूते शरीरे, यथा वृक्षस्य सर्वफलाश्रयत्वं तथा शरीरस्येति भावः । वर्तमानः सन्तः, मध्वदः मध्वं श्रीमध्वं ददातीति लोकाय इति मध्वदः श्रीहरिः, च शब्दः आवृत्ययोज्यः । सुपर्णाश्च श्रीवाय्ववताराश्च हनुमद्भीममध्वाश्च ज्ञानावतारत्वात् विशेषात् मध्वस्य नामतः गृहणम् । विश्वे आधि नारायणविषये जीवस्य बुद्धिं, निविशन्ते प्रवेशयन्ति सुवते प्रकाशयन्ति च । अन्तणीत णिच् । श्रीहरिमध्वयोर्नुग्रहसत्वे एव, सज्जनवर्गस्य मनः श्रीहरिविषयकं भवति । नान्यथेति भाव । एवं श्रीमध्वाचार्यस्य सन्निधाने सत्व एव तस्य वृक्षस्य शरीरस्य, पिप्पलं रसं फलं, मोक्षरूपं फलम् ।

रोति । उष सेचने इति धातोः श्वन्नुक्षन् पूषम् इत्यादिना उणादिसूत्रेन कनिप्रत्यये रूपम् ।

70) प्रधारा मध्वो अग्रियो महीरपो विगाहते ।
हविः हविष्षु वन्द्यः । 9-7-2 ।

पदपाठः - प्र । धाराः । मध्वः । अग्रियः । महीः । अपः । वि । गाहते ॥ हविः । हविष्षु । वन्द्यः ।

गोमञ्जरी

अग्रियः=श्रेष्ठः उत्तमः हविः=विष्णोः हविरिव प्रियः, प्रलयकाले हविर्भूतो वा, पुल्लिङ्गो छांदसः हविष्षु हविर्भूतेषु देवेषु, वंद्यः स्तुत्यः, हविः ज्ञानयज्ञे विष्णोः परिवारतया ध्यानार्थमाहूयमानः, आहूयमानदेवेषु स्तुत्यः, तत्रैवाहूयमानदेवेषु स्तुत्यो वा, मध्वः श्रीमध्वाचार्यः, प्रधाराः प्रकृतज्ञानधारासहिताः, महीः महतीः अपः ज्ञानसाधनीभूतऋगादिसर्वविद्याः विगाहते स्वबुध्या अवगाहते, सूत्रभाष्यकरणार्थं विचारयतीत्यर्थः । विपूर्वकात् गाहू विलोडने इति धातोः रूपमेतत् ।

अथवा बदरीकाश्रमगमनकाले, अग्रियः स्वशिष्याणां अग्रणीभूत्वा अग्रतो गच्छन् । हविः गङ्गातरणकाले म्लेच्छभटैः माऽयाहि इति आहुतः, हविष्षु वन्द्यः, स्वशिष्येषु स्तुत्यः, मध्वः मध्वाचार्यः, प्रधाराः प्रकृतधारारूपप्रवाहसहिताः, महीः पूज्याः, महपूजायाम् इति धातोः रूपम् । अपः गङ्गाजलानि विगाहते स्वशिष्यान् स्कन्धभुजादिषु विभ्रद् बलात् विगाहते । उक्तं हि सुमध्वविजये दशमसर्गे -

वारयत वारयत वैरिसुहृदोऽमून्
मारयत मारयत पारगमनात् प्राक् ।
आपतत आलपत इत्यवददुच्चैः
सत्वरकराजपुरुषानुचितवाच ॥ 10-10 ॥

71) यस्मिन्वृक्षे मध्वदः सुपर्णा
निविशन्ते सुवते चाधि विश्वे ।
तस्येदाहुः पिप्पलं स्वाद्वग्रे
तन्नोन्नशद्यः पितरं न वेद । 1-164-22 ।

पदपाठः - यस्मिन् । वृक्षे । मधुऽ अदः । सुऽपर्णाः । निऽविशन्ते । सुवते । च । आधि । विश्वे ॥ तस्य । इत् । आहुः । पिप्पलं । स्वादु । अग्रे । तत् । न । उत् । नशत् । यः । पितरम् । न । वेद ॥

यस्मिन् वृक्षे साधनभूते शरीरे, यथा वृक्षस्य सर्वफलाश्रयत्वं तथा शरीरस्येति भावः । वर्तमानः सन्तः, मध्वदः मध्वं श्रीमध्वं ददातीति लोकाय इति मध्वदः श्रीहरिः, च शब्दः आवृत्ययोज्यः । सुपर्णाश्च श्रीवाय्ववताराश्च हनुमद्भीममध्वाश्च ज्ञानावतारत्वात् विशेषात् मध्वस्य नामतः गृहणम् । विश्वे आधि नारायणविषये जीवस्य बुद्धिं, निविशन्ते प्रवेशयन्ति सुवते प्रकाशयन्ति च । अन्तणीत णिच् । श्रीहरिमध्वयोर्नुग्रहसत्वे एव, सज्जनवर्गस्य मनः श्रीहरिविषयकं भवति । नान्यथेति भाव । एवं श्रीमध्वाचार्यस्य सन्निधाने सत्व एव तस्य वृक्षस्य शरीरस्य, पिप्पलं रसं फलं, मोक्षरूपं फलम् ।

शरीरस्य ब्रह्मज्ञानसम्पादनद्वारा मोक्षफलकत्वादिति भावः । स्वादु रसवत् । अग्रे उपासनानन्तरं, भवतीति आहुः ज्ञानिन इति शेषः । यः यः पुरुषः पितरं पालकं श्रीहरिं तथा श्रीमध्वाचार्यं यतः श्रीमध्वस्य हरिः जनकः । यतो वा श्रीहरेः ज्ञानदानेन लोके प्रकटीकरणात् श्रीमध्वोऽपि पिता । जनितोत विष्णोरित्युक्तेः । यद्वा जगतः जनकत्वात् श्रीमध्वोऽपि पिता तं । न वेद न जानाति । सः तत् न उत् नशत् तत्फलं साधनभूतस्य शरीरस्य फलं मोक्षादिकं न प्राप्नोति इति भावः ।

तत्त्वज्ञान् मुक्तिभाजः सुखयसि
हि गुरो योग्यतातारतम्यात् ।
आधत्से मिश्रबुद्धींस्त्रिदिवनिरय
भूगोचरान् नित्यबद्धान् ॥
तामिस्रान्धाधिकाख्ये तमसि सुबहुलं
दुःखयसि अन्यथाज्ञान् ।
विष्णोराज्ञाभिः इत्थं श्रुतिशतं
इतिहासादि च आकर्णयामः ॥ 16 ॥

इति वायुस्तुतिवचनात् ।

72) यत्रा सुपर्णा अमृतस्य भागमनिमेषं
विदथाभिस्वरन्ति ।
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः
पाकमत्रा विवेश । 1-164-23 ।

पदपाठः - यत्र । सुऽपर्णाः । अमृतस्य । भागम् । अनिऽमे-

षम् ॥ विदथा । अभिऽस्वरन्ति ॥ इनः । विश्वस्य । भुवनस्य । गोपाः । सः । मा । धीरः । पाकम् । अत्र । आ । विवेश ।

यत्र यस्मिन् देहे वर्तमानाः, सुपर्णाः वायुवः वायोरवताराः श्रीमध्वाचार्याः, सु=शोभनः, पर्णः=पक्षः येषान्ते - श्रीरामश्रीकृष्णश्रीवेदव्यासपक्षस्थिता श्रीहनुमद्भीममध्वाचार्याः श्रीमुख्यप्राणावताराः । अमृतस्य मोक्षस्य भागम् भक्तिं इति यावत् । घश्तिनो भावरूपैकार्थत्वात् । अनिमिषं सततं सर्वदा इत्यर्थः, विदथा विदज्ञाने थप्रत्ययः अलोपः छान्दसः, वेदनेन ज्ञानेन अभिस्वरन्ति प्रापयन्ति ।

अस्मिन् देहे स्थित्वा श्रीमध्वाचार्यः सर्वदा जीवानां ज्ञानप्रदानपूर्विकां भक्तिं प्रयच्छतीति भावः । अत्र अस्मिन् देहे स्थितः सन् , सः श्रीमध्वः विश्वस्य सर्वेषां इन्द्रियाणां इनः स्वामी । ईश्वरः । न केवलमिन्द्रियाणां नियामकः किन्तु भुवनस्य समस्तजगतः गोपाः रक्षकः धीरः । धिया रमन्त इति । विषयभोगाभावेऽपि श्रीहरौ मनसः निवेशनेन सदा सन्तुष्ट मनाः, मा मां, पाकम् पक्तव्यं अपक्वज्ञानयुक्तं, आ विवेश अनुग्राह्यतया प्रविशतु । मयि स्थित्वा सर्वदा मोक्षसाधनानि ज्ञानादीनि शरीरं दत्वा सर्वदा अनुग्रहं करोतु इत्यर्थः । लोडर्थे लिट् छान्दसः । (पा 3-4-6) । अत्र सुपर्णशब्दस्य प्राणवायुपरत्वं च सायणेनापि एकः सुपणः इति (8-6-16) मन्त्रस्य व्याख्याने स्वीकृतम् ।

ते इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् (2-4-18) इति सूत्रं

मुख्यप्राणस्य सर्वेन्द्रियनिमाकत्वे प्रमाणम् ।

प्रकारं प्रकटीकर्तुमारभ्य विररामनो ।

महीयो मतिमाहात्म्याद्वैवश्येन खनन् खलः ॥ 10-5 ॥ इति सुमध्वविजयोक्तेश्च । तद्वचनैश्च अवगम्यते श्रीमध्वाचार्यस्य सर्वेन्द्रियनियामकत्वम् । पूर्वार्धोचरार्धयोः वचनव्यत्यसः श्रीमध्वाचार्यस्य मूलरूपादत्यन्ताभेदं पुज्यत्वं च सूचयितुं इति ज्ञेयम् ।

## 73) मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः । 1-92-6 ।

पदपाठः - मधु । वाताः । ऋतायते । मधु । क्षरन्ति । सिन्धवः । माध्वीः । नः । सन्तु । ओषधी ॥

एषु मन्त्रेषु मध्वशब्दस्य निष्पत्तिः स्तवनं च क्रियते । ऋतायते यथार्थज्ञानं, श्रीहरिं च इच्छते, साधकाय *ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयते* इत्यभिधानं (गीताभाष्ये 7-9) । सर्वगतत्वात् ऋतो हरिः (ऋग्भा॰ दी॰ अ-1-सू-2-म्6) इति वचनात् ।

वाताः वाय्ववताराः मुख्यप्राणाः, मधु आनन्दं क्षरन्ति ददाति । सिन्धवः तत्तीर्त्ःआनि, तत्प्रतिपादकानि, तदुक्तानि च शास्त्राणि । मधु क्षरन्ति आनन्दं ददति । अत एव इमे श्रीमध्वाचार्याः -

मधु आनन्द उद्दिष्टो वेति तीर्थमुदाहृतम्
मध्व आनन्दतीर्थस्यात् मारुतेः तृतीया तनुः

इति सत्तत्ववचनात् (ऐ-3-2-6) अयमर्थः ज्ञायते । नः अस्माकं, साधकानां, माध्वीः मध्वसंबन्धिन्याः वाचः, ओषधीः संसाररूपरोगनिवर्तकाः, सन्तु भवन्तु ।

74) मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः
मधु द्यौरस्तु नः पिता । 1-92-7 ।

पदपाठः - मधु । नक्तम् । उत । उषसः । मधुऽमत् । पार्थिवम् । रजः ॥ मधुः । द्यौः । अस्तु । नः । पिता ॥

नः अस्माकं साधकानां, नक्तम् देहवियोगकले, तथा उषसः देहयोगकाले च, मधु उत् आनन्द एव । अस्तु । नः साधकानां, पार्थिवं पृथ्यामवतीर्णस्य श्रीमदानन्दतीर्थस्य संबन्धि, रजः पाद्पांसुः । मधुमत् आनन्दकरः अस्तु भवतु । द्यौः द्युलोकिनः अपि, मधु अस्तु । पिता पितृलोकिनः अपि मधु अस्तु ।

75) मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः । (1-92-8)

पदपाठः - मधुऽमान् । नः । वनस्पतिः । मधुऽमान् । अस्तु । सूर्यः । माध्वीः । गावः । भवन्तु । नः ।

न: अस्माकं । वनस्पतिः सज्जनरक्षकदेवः । समुदाये एकवचनम् । मधुमान् आनन्दवान् भवतु । सूर्यश्च मधुमान् भवतु । माध्वीः श्रीमध्वाचार्यसम्बन्धिन्यः, गावः वाचः, नः अस्माकं, तथा विद्याः भवन्तु । इन्द्रसूर्यादिसर्वदेवतोषकाः भवन्तु इति भावः ।

एवं भावप्रकाशिकायां पण्डिताचार्यैः आदिपदेन सूचितानि इमानि वेदवाक्यानि, पूर्वैः श्रीवादिराजतीर्थैः, वैश्वनाथिनारायणपण्डितैः सूचितमार्गनुसारेण अत्र निवेशितानि । एतेषामेव सूक्तानां ग्रहणे मध्वपदप्रत्यक्षश्रुतिरेव निदानम् । सुधियः इदं महासाहसं क्षाम्यन्तु ।

श्रीवादिराजतीर्थैः स्वग्रन्थे युक्तिमल्लिकायां तथा च वैश्वनाथिनारायणपण्डिताचार्यैः मध्वमन्त्रार्थमञ्जरिनामके ग्रन्थे इमानि वाक्यानि व्याख्यातानि । तेषां वाक्यानां पर्यालोचनं कृत्वा अत्र सम्यक् श्रीमध्वाचार्यपरतया योजना कृता । अत्र च विषये बहूनि प्रमाणानि उदाहृतानि । तस्मात् श्रीमध्वाचार्यस्य वाय्ववतारत्वे वेदवाक्यानां सत्वात् तद्विरुद्धानां पुराणवाक्यानां च अन्यथा योजना कार्या । अथवा तेषां पुराणवाक्यानां अप्रामाण्यं, उत अन्यपरतया वा योज्यम् ।

किं च -

देवा वा दानवो वा स्याद्भाष्यकारो न मानवः ।
तत्र विष्णौ रता देवा दैत्या ब्रह्मशिवादिषु ।
अतोऽपि वैष्णवं भाष्यं देवमूलं न संशयः ।

इति स्वीययुक्तिमल्लिकायां फलसौरभे श्रीवादिराजचरणैः युक्तिपूर्वकं श्रीमध्वाचार्यस्य देवत्वं स्थापितम् । अतः केनापि मार्गेण श्रीमध्वाचार्यस्य दैत्यत्वमुपपन्नं न भवति ।

श्रीमदानन्दतीर्थानां दैत्यत्वलपनं मुधा ।
दैत्यानां तु भवेद्युक्तं न योग्यानां कथञ्चन ॥

॥ इति श्रीमध्वाचार्यस्य वाय्ववतारत्वसमर्थनम् ॥

# तप्तमुद्राधारणे प्रमाणानि

तप्तमुद्राधारणं कार्यमित्यस्मिन् विषये बहूनि प्रमाणानि वर्तन्ते । कानिचिदेव अत्र दिक्सूचनार्थं प्रदर्श्यन्ते ।

पवित्रं ते विततं ब्रह्मणस्पते
 प्रभुः गात्राणि पर्यैषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते
 श्रृतास इद्वहन्तस्तत्समाशत ॥9-83-1॥

अस्य मन्त्रस्य अर्थः । ब्रह्मणस्पते इदं श्रीहरेः सम्बोधनम् । ब्रह्मणः वेदस्य चतुर्मुखस्य, वा ब्राह्मणजातेर्वा सर्वेषां वा पते रक्षक, त्वं प्रभुः नियामकः, त्वं विश्वतः सर्वतः सर्वेषां, गात्राणि देहेषु, पर्यैषि व्याप्तो वर्तसे । अन्तर्यामिरूपेणेति यावत् । एवं भूतस्य ते तव, पवित्रं सुदर्शनं, विततं सर्वत्र व्याप्तं, विष्णुभक्तेषु वा, एवं प्रकरेण विद्यमानेन अग्नितप्तेन चक्रेण, अतप्ततनूः असंस्कृतशरीरः, आमः पापनाशरहितः सन्, पापयुक्तः इति यावत् । तत् ब्रह्म नाश्नुते न प्राप्नोति । तस्मादेव श्रृतासः अग्नितप्तचक्रेण तप्ताः, तत्समाशत तस्य नारायाणस्य स्थानं मोक्षं प्राप्नुवन्ति । न एकवारेणैव तापेन अलं किन्तु वहन्तः इत् सर्वदा गोपीचन्दनादिना नाममुद्रादि वहन्त एव इत्यर्थः ।

ननु अत्र पवित्रशब्दस्य कथं सुदर्शनपरत्वं प्रसिद्धार्थत्यागे दोषापातात् इति चेन्न । *सुदर्शने च दर्भे च पवित्रं शणसूत्रके* इति वेदनिघण्टौ, सुदर्शनं सहस्रारं पवित्रं चरणं पविः इति

निघंट्वन्तरे च प्रसिद्धत्वात् न प्रसिद्धार्थस्य त्यागः ।

पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम् ।
पर्यायवाचका ह्येते चक्रस्य परमात्मनः ।
इति श्रीपञ्चरात्रशास्त्रे ॥

पवित्रं चरणं नेमिररिश्चक्रं सुदर्शनम् ।
सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसम् ।
नामानि विष्णुचक्रस्य पर्यायेण निबोध मे । इति

पाद्मे उत्तरखाण्डे 224-253 तमे श्लोके सुदर्शनस्य पर्यायत्वेन पवित्रमिति पदम् प्रयुक्तम् । *सहस्रारः पवित्रः नेमिः वा चक्रस्य वाचकाः* इति माधवाचार्येणाऽपि तन्नामानुक्रमणिकायां पर्यायत्वेन स्वीकृताः । पवित्रशब्दनिर्वचनेनापि तस्य सुदर्शनचक्रपरत्वं ज्ञायते । पुनाति च त्रायते चेत्यतः पवित्रम् इति एकायनब्राह्मणे निरुक्तम् । पविं व्रजं त्रायते इति पवित्रम् । कुलिशं भिदुरं पविरिति अभिधानात् । सुदर्शनस्य अन्वर्थसंज्ञापि भवति । पुवः संज्ञायां कर्तरि चेति, ऋषिदेवतयोरिति सूत्राभ्यामिति कर्तरि करणे च त्रप्रत्यये रूपं पवित्रम् इति। तस्मात् पवित्रशब्दस्य सुदर्शनवाचकत्वे न कोऽपि दोषः ॥

चतुर्णामायुधानां तु धारणं मुनिभिः स्मृतम् ।
अग्निहोत्रं यथा नित्यम् वेदस्याध्ययनं तथा ।
ब्राह्मणस्य तथैवेदम् तप्तमुद्रादिधारणम् इति ।
पाद्मे उत्तरखण्डे 66 - तमे अध्याये 81 - तमे श्लोके ।

नित्यं गोपीचन्दनधारणं च कर्तव्यमिति श्रूयते ।

गोपीचन्दनतो नित्यं लाञ्छितो यस्य विग्रहः ।
चक्रशंखगदापद्मैः देहे तस्य सदा हरिः ॥ इति
पाद्मे-उ-67-90 ।

कृष्णायुधाकिंतं पुण्यम् गोपीचन्दनमृत्स्नया ।
प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति । इति पु-
राणवचनम्

वचनात् च । तत् ब्रह्म समाशत नित्यं तादृशा एव प्राप्नुवन्निति । ननु तत् शब्दस्य कथं परब्रह्मपरत्वमिति चेन्न । ॐ तत्सदिति निर्देशो ब्रह्मणः त्रिविधः स्मृतः इति गीतायां तथैव तदिति वा एतस्य महतो भूतस्य नाम भवति इति श्रुतिस्मृतिसिद्धम् ॥

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ।
तेन पवित्रेण शुद्धेन पूता अतिपाप्मानरातिन्तरेम ॥
लोकस्य द्वारमाधिष्मत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत् ।
अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधि-
तान्दधातु ॥ इति

तैत्तरीयश्रुतिरपि प्रमाणं भवति । तथाहि - येन चक्रांकितेन, पूतः शुद्धः, दुष्कृतानि दुष्टकर्माणि पापानि इति यावत् । तरति तीर्त्वा गच्छति संसारात् इति शेषः । विततं विस्तृतं, पुराणं सनातनं, तत् चरणं सुदर्शनं, पवित्रं पावनकरणम् भवति। शुद्धेन दोषसंस्पर्शरहितेन पवित्रेण संसारतरण हेतु-

ना तेन चरणेन पूताः तदंकनेन संस्कृतशरीराः, पाप्मानरातिं पापरूपशत्रुं, अतितरेम अतिक्रम्य वर्तामहे । लोकस्य जनस्य द्वारं मोक्षप्राप्त्युपायभूतम्, अधिष्मत् ज्वालावत्, ज्योतिष्मत् किरणवत्, महस्वत् प्रकाशवत्, तस्य धारणया एवं भवति । अत एव भ्राजमानं शोभमानं, अमृतस्य मोक्षस्य, धाराः अनुभवविशेषान् बहुधा नानाप्रकारैः दोहमानं स्वयमेव दुहानं चरणं सुदर्शनचक्रं नोऽस्मान्, लोके इह परत्र च, सुधितान् सुप्रतिष्ठितान्, दधातु करोतु ।

धीरेन्द्रतीर्थैः एवं व्याख्यातं -
*स्नानानन्तरं मुद्राधारणमन्त्रानाह - चरणमिति । यत्पवित्रं पावित्र्यकारि, विततं भक्तेषु धारणादिना व्याप्तं, पुराणं पुरातनं, यच्चरणं चक्रं पवित्रम् । चरणं चक्रं रथनेमिः सुदर्शनं चेति पर्यायवाचकाः । हन्येति चक्रस्य परमात्मानः इति वेदनिघण्टौ । येन परमात्मचक्रेण, पूताः अरातिं पाप्मानं अतितरेम इति संबन्धः । व्यवहिताश्छन्दसीति शास्त्रात् । माध्यन्दिनशाखायां च गोपीचन्दनादिना चक्रादिधारणस्य विहितत्त्वात् ।*

धृतोर्ध्वपुण्ड्रतिलकः समदुःखसुखः क्षमी ।
सदा परमया भक्त्या स्मरन्पुरुषविग्रहम् ॥
दिव्यैस्तु पञ्चभिः खड्गचक्रशङ्खगदाम्बुजैः ।
मुद्रैः कृत्वाऽखिलांगासौ सूरिरित्युच्यते बुधैः ॥ इति

एवमन्यान्यपि श्रुतिस्मृतीतिहासवचनानि सन्ति ।

किंच -

चमूषच्छ्येनः शकुनो विभृत्वा
गोविन्दुः द्रप्स आयुधानि बिभ्रत् ।
अपामूर्मिं सचमानः समुद्रं
तुरीयं धाम महिषो विवक्ति ॥

इयं च श्रुतिः ऋग्वेदे वर्तते तथैव सामवेदेऽपि । गाः वागादीनि विन्दति लभत इति गोविन्दः । गवादिषु विन्देः संज्ञायाम् इति शप्रत्ययः । यद्यपि विदलृ लाभे इति धातोः अनियतत्वात् न नुम् प्रत्ययो भवति तथापि शे मुचादीनामिति नुम् ज्ञेयः । गोविन्दशब्दस्य तृज्वद्भावः छान्दसः । गोविन्दुः गोविन्दस्य आयुधानि चक्रादीनि बिभ्रत् पुमान्, चमूषत् षदलृ विशरणार्थः पापसमूहविशरणकारणीभूतः, चमूः पापसमूहः, सत् विशरणः यस्मात् सः । श्येनः शंसनीयस्य गन्ता, शंसनीयां गच्छतीति निरुक्तत्वात् । शकुनः आत्मोन्नयन समर्थः, शकुनः शक्नोत्युन्नेनुमात्मानं इति निरुक्तवचनात् । विभृत्वा स्वसंबन्धिनामपि भरणसमर्थः डुभृञ् धारणपोषणयोः इति धातुवचनस्य अन्येभ्योऽपि दृश्यते इति क्वनिप् । द्रप्सः आदित्यसमः असौ आदित्यो द्रप्स इति वाजसनेयवचनात् । समुद्रं समुद्रिकम्, अपां गर्भस्थापो विवक्ष्यन्ते तासां ऊर्मिं ऊर्मिरूपं संसारं तत्र सचमानः स्वेच्छया संचारणशीलः, षच समवाये इत्यस्मात्धातोः ताच्छील्ये चानश् प्रत्यये इदम् रूपम् । महिषः पूजितः । एवं चमूषदित्यादिसप्तपदैः निरुक्तगुणयुक्तः सन् तुरीयं धाम वासुदेवाख्यं तेजो विवक्ति भजते प्राप्नोति । एवं संसारनिवृत्तिपूर्वकं तुरीयस्थानप्राप्तिकामः गोविन्दस्य आयुधानि बाहुमूलादिषु विभृयात् इत्यर्थः । पाद्मेऽपि एतत्संवादकवाक्यानि वर्तन्ते । तान्युत्तरत्र उदाहरिष्यन्ते ।

अत्र बृहदारण्यकेऽपि श्रूयते ।

विचिक्षेप सुषणं भिद्यमानं मध्ये बाहुमदधत्सुदर्शनम् ।
विष्णोरिदं भूरिदं भूरितेजः प्रर्घषति
दिवानक्तं विभृयुस्तज्जनासः । इति

मध्ये बाहुं बाहुमध्ये इत्यर्थः सुप्रसिद्धः । सुदर्शनं चक्रं यः अदधत् धारणं अकरोत् । सः भिद्यमानं नाना प्रकारेण विभज्यमानं, कर्मणि प्रयोगः छान्दसः । सुषणं पापानां अन्तकरं, *षोऽन्तकर्मणि* इत्यस्य ल्युटि रूपम् । निचिक्षेप अतिशयेन निक्षिप्तवान् । यस्मात् भूरिदं बहुफलप्रदं विष्णोरिदं श्रीनारायणसंबन्धि सुदर्शनचक्रं, भूरितेजः बहुतेजोयुक्तं सन्, प्रघर्षति अन्तः पापं नाशयति । तस्मात् जनासः प्रजाः आज्जनेरसुक् इति असुगागमः । दिवानक्तं सर्वदा, विभृयुः धारयेयुः । तथा बाल्कलशाखायाम् -

प्रते विष्णो अब्जचक्रे पवित्रे
जन्माम्बोधिं तर्तवे चर्षणीन्दाः ।
मूले बाहोः दधतेऽन्ये पुराणा
लिङ्गानि अंके तावकानि अर्पयन्ति ॥

हे विष्णो, नारायण, पवित्रे शुद्धे, चर्षणीन्दाः ज्ञानयुक्ताः, बाहोः मूले, अब्जचक्रे शङ्खचक्रे, प्रदधते प्रकर्षेण धारयन्ति । अन्ये पुराणाः पुरातनाः ऋषयः । तावकानि लिङ्गानि पञ्चायुधानि, अंगे बाहुमूले ललाटादिषु अर्पयन्ति बिभ्रति ।

तथा आर्थवेदमहोपनिषदि ब्रह्मसूक्ते च ।

दक्षिणे तु भुजे विप्रो
विभृयाद्वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयाद्
इति ब्रह्मविदो विदुः ॥ इति ।

तथैव कठशाखायामपि श्रूयते ।

धृतोर्ध्वपुण्ड्रः कृतचक्रधारी
विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदि
स्थितं परात्परं यन्महतो महान्तम् ॥

चक्रं बिभर्षि वपुषाऽभितप्तं
बलं देवानाममृतस्य विष्णोः ।
स ऐति नाकं दुरितं विधूय
प्रयान्ति यद्यसो वीतरागाः ॥ इति

आथर्वणे -

ऐभिर्वर्यमुरुक्रमस्य चिन्हैः
अङ्किता लोके सुभगा भवेम ।
तद्विष्णोः परमं पदं
येऽनुगच्छन्ति लाञ्छिताः ॥ इति

बहवः श्रुतयः तप्तमुद्राधारणविषये वर्तन्ते । स्मृतयोऽपि तत्र प्रमाणम् । वृद्धमनुः -

ऊर्ध्वपुंड्रं तथा चक्रं नित्यं धारयते हि यः ।

तेन तस्याशुभं नश्येत् शुभमस्य विवर्धते ॥

शाण्डिल्येऽपि -

पशुपुत्रादिकं सर्वं गृहोपकरणानि च ।
अङ्कयेच्छंखचक्राभ्यां नाम कुर्याच्च वैष्णवम् ॥

शङ्खेऽपि -

उपवीतादिवत्धार्यं शङ्खचक्रगदादिकम् ।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥ इति

यमोऽपि -

उपवीती शिखी विप्रः चक्रलाञ्छन संयुतः ।
चक्रलाञ्छनहीनस्य विप्रस्य विफला क्रिया ॥ इति

व्यासोऽपि -

ललाटे तु गदा धार्या मूर्ध्नि चापशरौ तथा ।
हृन्मध्ये नन्दकश्चैव शंखचक्रे भुजद्वये ॥ इति

भीष्मपर्वणि -

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु ॥

अत्र लक्षणशब्देन सर्ववर्णसाधारणं तप्तचक्राद्यङ्कनमेव विवक्षितम् । तस्य चिन्हपर्यायत्वात् । चिन्हं लक्ष्म च लक्षणमित्यभिधानात् ।

हरिवंशे -

चक्रांकिता प्रवेष्टव्याः यावदागमनं मम ।
नाममुद्राः प्रवेष्टव्या यावदागमनं मम ॥

विष्णुधर्मे यमकिंकरसंवादे -

भवतां भ्रमतामत्र विष्णुसंश्रयमुद्रया ।
विनाज्ञाभंगकृन्नैव भविष्यति नरः क्वचित् ॥ इति

पूण्डरीकाख्याने -

केचित् चक्रांकिताः तत्र प्राणिनः पुण्यदर्शिनः ।
विचरन्ति यथाकामं पुण्यतीर्थप्रशंसिनः ॥ इति

गारुडे -

अग्निनैव तु संयुक्तं चक्रमादाय वै द्विजः ।
दाहयेत्सर्ववर्णानां हरिसालोक्यसिद्धये ॥ इति

पुण्ड्रानां धारणे चैव केशवादींश्च संस्मरेत् ।
मुद्राणां धारणे चैव शंखचक्रगदास्तथा ॥
पद्मनारायणीं मुद्रां कृद्धोल्कादींश्च संस्मरेत् ॥

पाद्मेऽपि -

तस्योपासना भेदांश्च श्रुणु वच्मि पुनः पृथक् ।
आद्यं तु वैष्णवं प्रोक्तं शङ्खचक्रांकनं हरेः ॥

धारणं चोर्द्ध्वपुण्ड्राणां तत्तन्मन्त्राणां परिग्रहः ।
अर्चनं च जपो ध्यानं तन्नामस्मरणं तथा ॥

पूजनीयो हरिर्नित्यं ब्राह्मणानां विशेषतः ।
तस्मात्ब्राह्मणो नित्यं विधिवत्पूजयेद्धरिम् ॥
तच्चिन्हैरंकितः श्रीशपदंप्राप्नोत्यसंशयम् ।
शंखचक्रांकनं कुर्याद्ब्राह्मणो बाहुमूलयोः ॥
चक्रं वा शंखचक्रैर्वा तथा पंचायुधानि वा ॥
धारयित्वैव विधिवद्ब्रह्मकर्म समारभेत् ॥
अग्नितप्तं पवित्रं च धृत्वा वै भुजमूलयोः ॥
त्यक्ताः यमपुरं घोरं याति विष्णोः परंपदम् ॥
चक्रचिह्नविहीनस्तु यः पूजयति केशवम् ।
तत्सर्वं विफलं याति पूजामंत्रजपादिकम् ॥
अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः ।
अंकयित्वा जपन्मंत्रं संसारान्मोक्षमाप्नुयात् ॥
सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः ।
पश्चात्कर्मसु योजयेत् ॥
विष्णुचक्रविहीनः तु यः श्राद्धे भोजयिष्यति ।
व्यर्थं भवति तत्सर्वं निराशा पितरोगताः ॥
विष्णुचक्रांकितं विप्रं पूजयेच्छ्राद्धकर्मणि ।
विष्णुचक्रविहीनं तु प्रयत्नेन विवर्जयेत् ॥
दद्याद्गोभूहिरण्यादि चक्रांकितभुजाय वै ।
यद्दत्तं चक्रहीनाय तत्सर्वमसुराय वै ॥
अग्नितप्तेन चक्रेण बाहुमूले तु लांछिताः ।
सर्वपापविनिर्मुक्ता यांति विष्णोः परं पदम् ॥
हुताग्नितप्तचक्रेणशरीरं यस्य चिह्नितम् ।
तस्य तीर्थानि यज्ञाश्च सम्प्राप्ता नात्र संशयः ॥
अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् ॥
ऊर्ध्वपुण्ड्रविहीनस्तु शंखचक्रविवर्जितः ।

तं गर्दभे समारोप्य बहिःकुर्यात्स्वपत्तनात् ॥
प्रकृतिस्पर्शरहितो वासुदेवो जनार्दनः ।
बाहुमूले लिखेच्चक्रं तप्तं तु ब्राह्मणस्य वै ॥
तप्तेनैवाङ्कनं कुर्याद्ब्राह्मणस्य विधानतः ।
श्रौतस्मार्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यर्थमेवच ॥
हरेः पूजाधिकारार्थं चक्रं धार्यविधानतः ।
वैष्णवत्वस्य सिद्ध्यर्थं ज्ञानसिद्ध्यर्थमेव च ॥
प्रतपेच्चक्रशङ्खाभ्यां हुत्वाहोमं विधानतः ।
अन्यैर्न दाहयेद्गात्रे ब्राह्मणो हरिलांछनात् ॥
शङ्खचक्रगदाखड्ग शार्ङ्गदन्यैर्हरेरपि ।
लक्षणेन दहेद्देहं नान्यदग्धोर्हतिक्रियाम् ॥
अचक्रधारिणं विप्रं दूरतः परिवर्जयेत् ।
श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम् ॥
वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयम् ।
तस्मात्तु विधिना चक्रं धार्यं विप्रैः शुभानने ॥
ब्राह्मणमन्त्रसिद्ध्यै च ज्ञानसिध्यै च मुक्तये ।
अप्राकृत महात्मनो विष्णुचक्रेणलांच्छिताः ॥
विष्णुचक्रविहीनास्तु ब्राह्मणाः प्राकृता स्मृताः ।
सर्वाश्रमेषु वसतां ब्राह्मणानां विशेषतः ॥
विधिना वैष्णवं चक्रं धार्यं हि श्रुतिचोदनात् ।
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ॥
वामे तु शङ्खं विभृयादिति ब्रह्मविदोविदुः ।
एवं महोपनिषदि प्रोक्तं चक्रादिधारणम् ॥
तथैव साम्रियजुषिक्रचिप्रोक्तं शुभानने ।
प्रतेविष्णो अब्जचक्रे पवित्रे जन्माम्बोधिं तर्तवे चर्षणीन्द्राः॥
मूले बाह्वोर्दधत्तेऽन्ये पुराणालिङ्गान्येन्येतावकान्यर्पयन्ति ।

चरणं पवित्रं विततं पुराणं वाङ्मयं शुभम् ॥
तेन चक्रेण सन्तप्तास्तरेयुः पातकाम्बुधिम् ।
पवित्रं ब्राह्मणस्पत्यं जगद्व्याप्तंहरेः सदा ॥
तेनातप्ततनूर्येषां न ते यान्ति परं पदम् ।
पवित्रं चरणं नेमिहरेश्चक्रं सुदर्शनम् ॥
सहस्रारंप्राकृतघ्नं लोकद्वारं महोजसम् ।
नामानिविष्णु चक्रस्य पर्यायेण निबोध मे ॥
शुद्धेनवन्हितप्तेन ब्रह्मत्त्वेन पुनीहि नः ।
यत्ते पवित्रमर्चिवदग्रे तेन पुनीहि नः ॥
येन देवाःपवित्रेन आत्मानं पुनते सदा ।
तेन सहस्रधारेण पावमान्यः पुनंतु माम् ॥
प्राजापत्यं पवित्रं तु शतोद्यामं हिरण्मयम् ।
वयं ब्राह्मविदस्तेन पूतं ब्रह्म पुनीमहे ॥
सनोमिचक्रमजरं चक्षुरस्य महात्मनः ।
अस्मिन्हि विधृते देवा महोन्नतपदं ययौ ॥
तस्माद्वै विधिवद्धार्याः शङ्खचक्रादिहेतयः ।
ब्राह्मणानां विशेषेण वैष्णवानां विशेषतः ॥
धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णोः पदं
ध्यायति यो महात्मा ।
स्वरेण मंत्रेण सदा हृदिस्थं परात्परं याति
विशुद्धचेताः ॥
ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नित
शङ्खचक्राः ॥
ये वा ललाटफलके लसदूर्ध्वपुंड्रास्ते वैष्णवा
भुवनमाशु पवित्रयंति ॥
दिवःपतेःसुविततं पवित्रं ये तु रक्षिणः ।

न वहंति भुजे सम्यक् न हि शोचंति जन्तवः ॥
ये वहंति भुजे चक्रं सुस्थिरं विधिना द्रुतम् ।
परं व्योम्नि तु ते स्थानमधितिष्ठन्ति तेजसा ॥
होमाग्निसंतप्तपवित्रलांछिता मूलेतु बाहोः
परमात्मनो हरेः।
संतारयित्वा भवसागरमहच्छुद्धं परंयाति परेशलोकम् ॥
अङ्कयेतप्तचक्राद्यैरात्मनोबाहुमूलयोः ।
कलत्रापत्यभृत्येषु पश्वादिषुच अङ्कयेत् ॥
इत्येवं श्रुतयः सर्वाः कथयंति वरानने ।
तथैव सेतिहासेषु पुराणेष्वपि कथ्यते ॥
द्विविधं वैष्णवं प्रोक्तं बाह्यमाभ्यतरं तथा ।
शङ्खचक्रादिभिर्बाह्यमान्तरंवीतरागता ॥
बाह्याभ्यंतरसाम्यं यत्तद्वैष्णवमुदाहृतम् ।
तस्माच्चक्रादिचिह्नंतुप्रथमं वैष्णवं स्मृतम् ॥
आंतरं स्मरदोषादिविमुक्तं स्वात्मदर्शनम् ।
सर्वभूतदयाशांतिरिंद्रियार्थेष्वलोलता ॥
पुत्रदाराद्यसंगत्वं योगाभ्यासरतिः तथा ।
अनन्यभक्तियोगेन परेशस्याभिषेवणम् ॥
तस्माच्चक्रादिहेतूनां अंकनं वैष्णवं स्मृतम् ।
चक्रादिचिह्नहीनत्वात् वैष्णवत्वं न लभ्यते ॥

228 तमे अध्यायः । शंकर उवाच -

ऊर्ध्वपुण्ड्रस्य माहात्म्यं वक्ष्यामि शुभदर्शने ।
धारणादेव मुच्येत भवबाधात् द्विजोत्तमः ॥ 1 ॥
ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे ।
लक्ष्म्यासार्धं समासीनो देवदेवो जनार्दनः ॥ 2 ॥

तस्माद्यस्य शरीरे तु ऊर्ध्वपूण्ड्रं धृतो भवेत् ।
तस्य देहं भगवतो विमलं मंदिरं शुभम् ॥ 3 ॥
सस्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
धारयेदूर्ध्वपुंड्रं यो मृदाशु शुभ्रेण वैष्णवः ॥ 4 ॥
ऊर्ध्वपुंड्रधरो विप्रः सर्वलोकेषु पूजितः ।
विमानवरमारुह्य याति विष्णोः परं पदम् ॥ 5 ॥
धारयेदूर्ध्वपुंड्रन्तु त्रिसंध्यं तु द्विजोत्तमः ।
सर्वपापविशुद्ध्यर्थमिष्टापूर्तफलाप्तये ॥ 6 ॥
ऊर्ध्वपुंड्रंधरं दृष्ट्वा सर्वपापैः प्रमुच्यते ।
नमस्कृत्वा भक्त्या सर्वदानफलं लभेत् ॥ 7 ॥
ऊर्ध्वपुंड्रधरं विप्रं यः श्राद्धे भोजयिष्यति ।
आकल्पकोटिपितरस्तस्य तृप्ता न संशयः ॥ 8 ॥
ऊर्ध्वपुंड्रधरो यस्तु कुर्याच्छ्राद्धं शुभानने ।
कल्पकोटिसहस्राणि गयाश्राद्धफलं लभेत् ॥ 9 ॥
यज्ञदानतपश्चर्याजपहोमादिकं च यत् ।
ऊर्ध्वपुण्ड्रधरः कुर्यात् तस्य पुण्यमनन्तकम् ॥ 10 ॥
ऊर्ध्वपुंड्रविहीनस्तु किंचित्कर्म करोति यः ।
इष्टापूर्तादिकं सर्वं निष्फलं स्यान्नसंशयः ॥ 11 ॥
यच्छारीरं मनुष्याणामूर्ध्वपुंड्रविवर्जितम् ।
द्रष्टव्यं नैव तत्किंचित् श्मशानसदृशंभवेत् ॥ 12 ॥
ऊर्ध्वपुंड्रविहीनस्तु सन्ध्याकर्मादिकं चरेत् ।
तत्सर्वं राक्षसैर्नीतं नरकं चावगच्छति ॥ 13 ॥
ऊर्ध्वपुंड्रधरो विप्रो मृदाशुभ्रेण वैदिकः ।
न तिर्यग्धारयेद्विद्वानापद्यपि कदाचन ॥ 14 ॥
विप्राणामूर्ध्वपुंड्रं स्यात्तिलकंतु महीभृतः ।
पट्टाकारं तु वैश्यानां शूद्राणां वै त्रिपुंड्रकम् ॥ 15 ॥

ऊर्ध्वपुंड्रं मृदा कार्यं कस्तूर्यास्तिलकं तथा ।
पट्टाकारंतु गंधेन भस्मनैव त्रिपुंड्रकम् ॥ 16 ॥
ऊर्ध्वपुंड्रंतु सर्वेषां न निषिद्धं कदाचन ।
धारयेत्क्षत्रियाद्योपि विष्णुभक्तो भवेद्यदि ॥ 17 ॥
विप्राणां नैव कार्यं स्यात्तिर्यक्पट्टादिधारणम् ।
नारायणात्परेशानादन्येषामर्चनं न तु ॥ 18 ॥
ब्राह्मणः कुलजो विद्वान् भस्मधारी भवेद्यदि ।
वर्जयेत्तादृशं देवि मद्योच्छिष्टं घटं यथा ॥ 19 ॥
त्रिपुंड्रंशूद्रकल्पानां शूद्राणां च विधिस्तथा ।
त्रिपुंड्रधारणाद्विप्रःपतितःस्यान्नसंशयः ॥ 20 ॥
एकांतिनो महाभागाःसर्वभूतहिते रताः ।
सांतरालं प्रकुर्वीरन् पुंड्रं हरिपदाकृतिम् ॥ 21 ॥
हरेः पादाकृतिं कुर्यादूर्ध्वपुंड्रं विधानतः ।
मध्यच्छिद्रेण संयुक्तं तद्धि वै मंदिरं हरेः ॥ 22 ॥
ऊर्ध्वपुंड्रमृजुं सौम्यं सुपार्श्वं सुमनोहरम् ।
दंडाकारं सुशोभाढ्यं मध्ये छिद्रं प्रकल्पयेत् ॥ 23 ॥
तस्माच्छिद्रान्वितं पुंड्रंदण्डाकारं सुशोभनम् ।
विप्राणां सततं कार्यं स्त्रीणां च शुभदर्शने ॥ 24 ॥
ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे ।
सान्तराले समासीनो हरिरस्ति श्रिया सह ॥ 25 ॥
निरन्तरालं यः कुर्यादूर्ध्वपुंड्रंद्विजाधमः ।
स हि तत्र स्थितं विष्णुंश्रियं चैव व्यपोहति ॥ 26 ॥
अच्छिद्रमूर्ध्वपुंड्रं तु ये कुर्वंति द्विजाधमाः ।
तेषां ललाटे सततं शुनः पादो न संशयः ॥ 27 ॥
तस्माच्छिद्रान्वितं पुंड्रं सहरिद्रं शुभान्वितम् ।
धारयेद्ब्राह्मणोनित्यं हरिसालोक्यसिद्धये ॥ 28 ॥

आदाय परया भक्त्या वेङ्कटाद्रौ हृदे मृदम् ।
धारयेदूर्ध्वपुण्ड्राणि हरिसायुज्यसिद्धये ॥ 29 ॥
श्रीकृष्णतुलसीमूलेमृदमादायभक्तिमान् ।
धारयेदूर्ध्वपुंड्राणि हरिस्तत्रप्रसीदति ॥ 30 ॥
द्वारवत्यां शुभे रम्ये वासुदेवहृदे तथा ।
तत्रोद्भवां मृदं रम्यामादाय द्विजसत्तमः ॥ 31 ॥
धारयेदूर्ध्वपुंड्राणि सर्वकामफलाप्तये ।
आदाय परया भक्त्या गङ्गातीरोद्भवां मृदम् ॥ 32 ॥
तया धृतोर्ध्वपुंड्राणि सर्वयज्ञफलं लभेत् ।
चंदनं च हरिद्रा च तथाभस्माग्निहोत्रजम् ॥ 33 ॥
सर्ववश्यकरं प्रोक्तमूर्ध्वपुंड्रस्य धारणात् ।
यत्र पुण्यं हरिक्षेत्रं तत्र वै मृदमाहरेत् ॥ 34 ॥
पर्वताग्रे नदीतीरे बिल्वमूले जलाशये ।
सिंधुतीरे च वल्मीके हरिक्षेत्रे विशेषतः ॥ 35 ॥
विष्णोःस्नानोदकं यत्र प्रवाहयति नित्यशः ।
पुंड्राणां धारणार्थाय गृह्णीयात्तत्र मृत्तिकाम् ॥ 36 ॥
श्रीरङ्गे वेङ्कटाद्रौ च श्रीकूर्मे द्वारकेशुभे ।
प्रयागे नारसिंहाद्रौ वाराहे तुलसीवने ॥ 37 ॥
गृहीत्वा मृत्तिकां भक्त्या विष्णुपादजलैः सह ।
धृत्वा पुंड्राणि चांगेषु विष्णुसायुज्यमाप्नुयात् ॥ 38 ॥
यस्मिन्कस्मिन्महाभागा वैष्णवा धारयंति वै ।
तस्मिन्वै मृत्तिका ग्राह्या ऊर्ध्वपुंड्रस्य धारणे ॥ 39 ॥
स्यामं शांतिकरं प्रोक्तं रक्तं वश्यकरंतथा ।
श्रीकरं पीतमित्याहुः श्वेतं मोक्षकरं शुभम् ॥ 40 ॥
वर्तुलं तिर्यगच्छिद्रं ह्रस्वं दीर्घं ततं तनुम् ।
वक्रंविरूपंबद्धाग्रं छिन्नमूलंपदच्युतम् ॥ 41 ॥

अशुभं रूक्षमासक्तं तथानंगुलिकल्पितम् ।
विगंधमवसह्यं च पुंड्रमाहुरनर्थकम् ॥ 42 ॥
आरभ्यनासिकामूलं ललाटं तं लिखेन्मृदा ।
समारभ्यभ्रुवोर्मध्यमंतरालंप्रकल्पयेत् ॥ 43 ॥
अंतरालं द्व्यंगुलंस्यात्पार्श्वावंगुलिमात्रको ।
मृदा शुभ्रेण विलिखेत्पुंड्रं ऋजुतरं शुभम् ॥ 44 ॥
ललाटे केशवं ध्यायेन्नारायणमथोदरे ।
वक्षस्थले माधवं च गोविंदं कंठकूबरे ॥ 45 ॥
विष्णुं च दक्षिणे कुक्षौ बाहौ च मधुसूदनम् ।
त्रिविक्रमं कंधरे तु वामनं वामपार्श्वके ॥ 46 ॥
श्रीधरं बाहुके वामे हृषीकेशं तु कंधरे ।
पृष्ठे वै पद्मनाभं तु त्रिके दामोदरं न्यसेत् ॥ 47 ॥
तत्प्रक्षालनतोयेन वासुदेवं तु मूर्द्धनि ।
ललाटे भुजयुग्मे तु पृष्ठयोः कंठकूबरे ॥ 48 ॥
धारयेदूर्ध्वपुंड्रं तुचतुरंगुलमात्रतः ।
कुक्षौतत्पार्श्वयोःप्रोक्तमायतं तु दशांगुलम् ॥ 49 ॥
बाह्वोर्वक्षस्थले पुंड्रमष्टांगुलमुदाहृतम् ।
एवं द्वादशपुंड्राणि ब्राह्मणः सततं धरेत् ॥ 50 ॥
तत्तत्पुण्ड्राणि तन्मूर्तीर्ध्यात्वा मंत्रेण धारयेत् ।
अंतरालेषु सर्वेषु हरिद्रां धारयेच्छ्रियम् ॥ 51 ॥
चत्वारि भूभृतामाहुः पुण्ड्राणि द्वेविशां स्मृते ।
एकपुण्ड्रं तु नारीणां शूद्राणां च विधीयते ॥ 52 ॥
ललाटे हृद्बाह्वोश्चचतुः पुंड्राणि धारयेत् ।
ललाटे हृदये द्वे तु फलेत्वेकं विधीयते ॥ 53 ॥
ऊर्ध्वपुंड्रं ललाटे तु सर्वेषां प्रथमं स्मृतम् ।
ललाटादिक्रमेणैव धारणं तु विधीयते ॥ 54 ॥

मूर्तीस्तुवासुदेवाद्याश्चतुः पुंड्रेषु धारयेत् ।
द्वयोर्गोविंदकृष्णौ तु एकं नारायणं धरेत् ॥ 55 ॥
एवं पुंड्रविधिः प्रोक्तः सर्वेषां गिरिजे मया ।
आश्वत्थपत्रसंकाशो वेणुपत्राकृतिस्तथा ॥ 56 ॥
पद्मकुड्मलसंकाशो मोहनं त्रितयं स्मृतम् ।
महाभागवतः शुद्धः पुंड्रं हरिपदाकृतिम् ॥ 57 ॥
दंडाकारं तु वा देवि धारयेदूर्ध्वपुंड्रकम् ।
सुदर्शनेनांकितबाहुमूलास्तथोर्ध्वपुंड्रांकितसर्वगात्राः ॥ 58 ॥
मालारविंदाक्षधरा विशुद्धा रक्षंति
लोकान्दुरितौघसंगात् ॥ 59 ॥

इति श्रीपाद्मे महापुराणे पंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे उमामहेश्वरसंवादे ऊर्ध्वपुंड्रमाहात्म्यं नाम पंचविंशत्यधिकद्विशततमोऽध्यायः॥

तप्तमुद्राङ्कितो यस्तु हयग्रीवपरो भवेत् ।
भस्ममालाङ्कितो यस्तु तमोमार्गानुगो भवेत् ।

# विष्णुसर्वोत्तमत्वे प्रमाणानि तस्य सर्वशब्दवाच्यत्वम् च

*सर्वे वेदाः यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति* इति कठोपनिषत् ।
*वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृत् वेदविदेव चाहम्* इति गीतावाक्यम् (15-15) ।
*ता वा एतास्सर्वा ऋचस्सर्वे वेदास्सर्वे घोषा एकैव व्याहृतिः । प्राण एव प्राण ऋच इत्येव विद्यात्* इति ऐतरेयवाक्यम् ।
*अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम् । वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्* इति कैवल्य श्रुतिवाक्यम् ।
*नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति* इति ।
*सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वा अभिवदन्यदास्ते ।*
*धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवंविद्वानमृत इह भवति ।*
*यो देवानां नामधा एक एव तं संप्रश्नं भुवनायन्त्यन्या ।*
*चतुर्भिः साकं नवतिं च नामभिः चक्रं न वृत्तं व्यतीरवीविपत् । परो मात्रया तन्वा वृधान न ते महित्वं अन्वश्नुवन्ति । न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ।*
*यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।*
इत्यादिवचनैः श्रीहरेः सर्वोत्तमत्वं सर्ववेदप्रतिपाद्यत्वं च ज्ञायते ।

ननु नेदं विचाररमणीयम् । मुमुक्षुज्ञेयं परतत्वं कैलासवासि गिरिजापतिरुद्ररूपमेव । न नारायणाभिधम् । *सदेव सौम्येदमग्र आसीत् , ब्रह्मा वा इदमग्र आसीत् , यतो वा इमानि भूतानि जायन्ते , आत्मा वाऽरे द्रष्टव्यः* इत्यादिसत्ब्रह्मशब्दघटितवाक्यप्रतिपाद्यः रुद्र एव भवति । उत्तरत्र विद्यमानस्य सोऽकामयत, बहुस्यां प्रजायेय, इत्यादिवाक्यस्य पर्यालोचनया चेतनमेव किंचिदिति ज्ञायते । तच्च रुद्ररूपमेव भवति नान्यथा । *किं कारणं ब्रह्म कुतश्च जाताः* इत्यादिश्वेताश्वेतरवाक्येन सदादिशब्दितं किंचित् जगत्कारणमस्तीति सामान्यतो निश्चीयते । तत् किं देवतारूपमिति संशये, तन्निरासाय उत्तरत्र *संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भवते विश्वमीशः । अनीशश्चात्मा बुध्यते भोक्तृभोग्यान् ज्ञात्वा देवं मुच्यते सर्वपापैः* इति शिवसाधारणेशशब्दघटितश्रुत्या - *यदा तमस्तं न दिवा न रात्रीर्न सन्न चासन् शिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणीति* उपक्रम्य शिवापरनामक रुद्रस्यैव जगत्कारणत्वंज्ञायते । तस्मात् पूर्वत्र सदादिविद्यमानानामपि शब्दानां तत्परत्वं ज्ञातव्यम् । न च *एको ह वै नारायण आसीत्* इति महानारायणोपनिषद्वाक्येन नारायणस्य जगत्कारणत्वप्रतिपादकेन विरोध इति चेन्न । तस्य ह वै शब्दघटितत्वेनानुवादकतया स्वयमर्थप्रतिपादकासमर्थत्वात् ।

किंच -

ततः परं ब्रह्मपदं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् ।

विश्वस्यैकं परिवेष्टितारमीशं तम् ज्ञात्वा ह्यमृताः भवन्ति ॥
वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात् ।
तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥

इति श्वेताश्वेतरोपनिषदि अन्यज्ञानस्य मोक्षपरत्वनिरासेन शिवाभिधरुद्रज्ञानस्यैव मोक्षसाधनमुक्तम्न च पुरुषसूक्ते विष्णुज्ञानस्यैव मोक्षकारणमुक्तमिति वाच्यम् तस्य विष्णुपरत्वे प्रमाणाभावात् । उतामृतत्वस्येशान इति रुद्रबोधकेशानश्रुत्या तस्यापि रुद्रपरत्वोपपत्तेः । न च *ह्रीश्च ते लक्ष्मीश्च पत्न्या* इति श्रीपतित्वलिंगेन तस्य विष्णुपरत्वं वाच्यम् । श्रुतितः लिंगस्य दुर्बलत्वात् ।

न च नारायणात् ब्रह्मा जायते, नारायणात् रुद्रो जायते, इति वाक्ये सर्वभूतकारणहिरण्यगर्भोत्पत्त्यनन्तरं रुद्रोत्पत्तिः ज्ञायते । रुद्रस्य कार्यकोटिप्रविष्टत्वेन कारणं न स्यादिति वाच्यम् । *देवा ह वै स्वर्गं लोकं आयन्* इति अथर्वशिरसि रुद्रस्य सर्गाद्यकालीनत्वागमेन तदितरेषां तदाभावावगमात् । नारायणोपनिषद्वाक्यप्रतिपाद्यः रुद्रः अन्यत्र एव वक्तुं किमपि बाधकाभावात्तस्मादेव श्वेताश्वेतरोपनिषदि केवलशब्दः वर्तते । रुद्रस्य जगत्कारणत्वाभावे, यो देवानां प्रथमं पुरस्तात् विश्वाधिको यो रुद्रो महर्षिः, हिरण्यगर्भं पश्यति जायमानमिति सकलकारणहिरण्यगर्भस्य तस्मादुत्पत्तिप्रतिपादकतानुपपत्तेः । न चायं नारायणाद्रुद्रोत्पत्तिप्रतिपादक *नारायणात् रुद्रो जायते* इति वाक्यार्थानुवाद इति वाच्यम् । रुद्रनारायणशब्दयोः पर्यायत्वाभावेन तद्वाक्यात्प्राप्तेरभावेनानुवादायोगात् । ततश्च

सर्वाधिकत्वेन, जगत्कारणत्वेन, मोक्षप्रदत्वेन, सकलवेदप्रतिपाद्यत्वेन गेगीयमानः शिव एव मुमुक्षुज्ञेयं परतत्वमिति ज्ञेयम् । तस्मात् स एव उत्तमः । इति ।

तत्र ब्रूमः ।

नारायणरूपमेव सकलमुमुक्षूपास्यमानं परतत्वं नान्यत् । *एको ह वै नारायण आसीत् न ब्रह्मा नेशानः नेमे द्यावापृथिवी, न नक्षत्राणि नापः नाग्निषोमौ न सूर्यः स एकाकी न रमते तस्य ध्यानान्तस्थस्यैका कन्या दशेन्द्रियाणि* , अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत तस्य ध्यानान्तस्थस्य ललाटात् स्वेदोऽपतन् । इमाः आपः तद्धिरण्यमण्डमभवत् तत्स्वेदात् बुद्बुदमभवत् बुद्बुधात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत । ( महोपनिषत् प्रथमाध्यायः ) इत्यादिना वाक्यसमुदायेन, *अथ पुरुषो ह वै नारायणोऽकामयत् प्रजा सृजेयेति अथापः ससर्ज, नारायणात् ब्रह्मा जायते, नारायणाद्रुद्रो जायते, नारायणात् प्रजापतिः प्रजायते, नारायणादिन्द्रो जायते, नारायणाद्वादशादित्याः रुद्राः वसवस्सर्वे देवास्समुत्पद्यन्ते, सर्वे लोकास्सर्वाणि च भूतानि नारायणादेव समुत्पद्यन्ते, नारायणे प्रलीयन्ते* इति नारायणोपनिषद्वाक्येन सृष्टिकालात्पूर्वकाले हिरण्यगर्भरुद्राद्यभावपूर्वकं नारायणस्यैव सत्ववेदनेन सकलकारणप्रजापतिरुद्रादिकारणत्वावेदनेन च नारायणस्यैव जगत्कारणत्वावगमात् ।

एतेनैव स एष भगवानीश सर्वतत्त्वादिरव्ययः ।
सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः ॥

सोऽसृजद्दक्षिणादङ्गात् ब्रह्माणं लोकसम्भवम् ।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ॥
युगान्ते चैव सम्प्राप्ते रुद्रंशंभुरथासृजत् ।
त्रिमूर्तिकारणं देवो न कस्माज्जायते शिवः ।
त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात् ॥
चराचरस्य विश्वस्य सृष्टिस्थित्यन्त हेतवः ।
पित्रा नियमिता पूर्वं त्रयोऽपि त्रिषु कर्मसु ॥
ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः ।
तथाप्यन्योमात्सर्यादन्योन्यातिशयार्थिनः ॥
तपसा तोषयित्वा तं पितरं परमेश्वरम् ।
ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेसृजत् ॥
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णु जगन्मयः ।
विष्णुश्च भगवान् रुद्रं ब्रह्माणमसृजत्पुनः ॥
नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ।
एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ।
परस्परस्माज्जायन्ते परस्परजयैषिणः ॥
तत्तकल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।
प्रभावः कथ्यते तेषां विद्वांस्तत्र न मुह्यति ॥
अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः ।
यातुधाना भवन्त्येव पिशाचाश्च न संशयः ॥ इति

इत्यादिना कल्पभेदेन जगत्कारणत्वादिकं इति व्यवस्था न घटते अन्यस्मात् सृष्टिसंहारौ स्थितिश्च परमात्मनः । निरूपिता न विद्वद्भिः प्रमाणाभावतो हरेः ॥ इति ब्रह्मतर्कवचनादपि कल्पभेदेन व्यवस्था निरस्ता वेदितव्याः । एतेषामुक्तवाक्यानां तु मूलरूपादाविर्भूतभगवद्रूपविवक्षया प्रवृत्तत्वात् न विरोधः ।

इदं सर्वमपि *अनेन सर्वगतत्वमायामयशब्दादिभ्यः* इति सूत्रव्याख्याने (3-2-38) सर्वदेशकालवस्तुष्वनेनैव सृष्ट्यादिकं प्रवर्तते ।
एष सर्व एष सर्वगत एष सर्वेश्वर एषोऽचिन्त्य एष परमः। इति हि भाल्लवेयश्रुतिः ।

सर्वत्र सर्वमेतस्मात् सर्वदा सर्ववस्तुषु ।
स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः ॥
अतो मायामयं विष्णुं प्रवदन्ति सनातनम् ।

इति चतुर्वेदशिखायाम् इत्यादिना आकरेषु निरूपितं द्रष्टव्यम् ।
न च मोक्षसाधनज्ञानविषयत्वं रुद्रवृत्ति इति वाच्यम् ।
पुरुषसूक्ते तस्य विष्णुपरत्वस्य उक्तत्वात् ।
न च पुरुषसूक्तम् न विष्णुपरमिति वाच्यम् ।
तस्य विष्णुपरत्वे ।

यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम् ।
न तथा सर्ववेदाश्च वेदांगानि च नारद ।

इति बृहत्संहितावाक्येन यथा हि पौरुषं
सूक्तं नित्यं विष्णुपरायणम् ।
तथैव मे मनो नित्यं भूयात् विष्णुपरायणम् ॥
इति ब्राह्मवचनेन पुरुषसूक्तस्य विष्णुमात्रपरत्वावगमात् ।

श्रीमद्भागवतेऽपि -

जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ।
तत्र गत्वा जगन्नाथं देववेवं वृषाकपिम् ।

पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ।

इत्यादिना पुरुषसूक्तस्य विष्णुपरत्वं ज्ञायते ।
ननु अस्मिन् वाक्ये पुरुषसूक्तप्रतिपाद्यः विष्णुरिति नास्तीति चेन्न पुरुषसूक्तस्य विष्ण्वितरपरत्वे क्षीरसमुद्रस्य समीपे गत्वा तेन वाक्येन तत्स्तुत्यनुपपत्तेः
ब्रह्मरुद्रादयः अनेन सूक्तेन स्तुतिं कुर्वन्ति, तस्मात् सूक्तमिदं तत्परं भवितुं नार्हति स्तुत्यः तत्र श्रीहरिरेवेति पुरुषसूक्तस्य प्रतिपाद्यः विष्णुरेव

श्रुतितः लिंगस्य दुर्बलत्वेऽपि निरवकाशलिंगस्य श्रुतितः प्राबल्यस्य शास्त्रसिद्धत्वात् लिंगमेव प्रबलम् । भवता श्रुतेरनुदाहरणाच्च । पुरुषसूक्ते कुत्रापि शिवस्तुतेर्वा शैवलिङ्गस्यवाऽदर्शनाच्च । *आकाशस्तल्लिंगात्* इत्यत्र सावकाशाकाशश्रुतितः निरवकाशपरोवरीयत्वादिलिंगस्य प्राबल्यम् सिद्धम् । दुर्बलेनापि निरवकाशेन प्रबलस्यापि सावकाशस्य बाधोपपत्तेरिति टीकावचनम् ।
किञ्च त्वच्छांकरभाष्ये विष्णोः श्रीनारायणस्य जगत्कर्तृत्वादि स्पष्टमुक्तं तथाहि तद्वाक्यं -
**नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् । अण्ड्स्यान्तस्त्विमे लोका सप्तद्वीपा च मेदिनी स भगवान् सृष्ट्वेदं जगत् तस्य च स्थितिं चिकीर्षुः ००० ग्राहयामास** इति । तद्व्याख्याने आनन्दगिरीये -

*आपो नरा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्यताः पूर्वं तेन नारायणः स्मृतः* (*मनु* 1-10) इति स्मृतिसिद्धः स्थूलदृगा नारायणशब्दार्थः ॥ सूक्ष्मदर्शिनः पुरराचक्षते नरशब्देन चचरात्मकं शरीरजातं उच्यते । तत्र नित्यसन्निहितास्त्विदाभासाः जीवाः नाराः इति निरुच्यन्ते । तेषामयनं आश्रयो नियामको अन्तर्यामी नारायण इति । यमधिकृत्यान्तर्यामिब्राह्मणं श्रीनारायणाख्यं मन्त्राम्नायं चाधीयते । तदनेन शास्त्रप्रतिपाद्यं विशिष्टं तत्त्वमादिष्टं भवति । इति उक्तम् । अतः अपसिद्धान्तग्रस्तमिदं शिवस्य जगत्सृष्ट्त्वादिकथनं ॥

ननु ऋग्वेदे -

सोमः पवते जनिता मतीनां
जनिता दिवो जनिता पृथिव्या ।
जनिताग्नेर्जनिता सूर्यस्य
जनितेन्द्रस्य जनितोत विष्णोः ॥ 9-96-5 ॥

इति वाक्ये, (अस्मिन्ग्रन्थे वेदसंख्या 62 श्रीमध्वस्यवायुत्वसमर्थन्प्रकरणे)

उमया सहितो देवः सोमः इत्युच्यते बुधैः ।
स एव कारणं नान्यो विष्णोरपि च वै श्रुतिरिति ।

आदित्यपुराणानुसारेण सोमशब्दस्य रुद्रवाच्यत्वात् रुद्रादिव विष्णुरुत्पन्न इति चेन्न । सोमशब्दस्य लताविशेषणे रूढत्वेन पूर्वोत्तरवाक्यपर्यालोचनया तत्परत्वस्यैव न्यायात्वात् । *नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते* , इति श्रुत्या रुद्रस्य ब्रह्मोत्पत्यन्तरं नारायणादुत्पन्नत्वावेदनेन तस्य विष्णुशाब्दितनारायणजनकत्वायोगात् । किञ्चैवं सोमशब्दस्य चन्द्रपरत्वमेव

किं नाश्रयितव्यम् । तस्य तत्र रूढत्वात् शिवे तस्य यौगिकत्वात् । रूढिः योगमपहरतीति हि न्यायः । न च पुरुषसूक्ते *चन्द्रमा मनसो जातः* इति विष्णुमनोजन्यत्वश्रवणात् न विष्णुजनकत्वं युक्तमिति वाच्यम् । *नारायणाद्रुद्रो जायत* इति शिवस्यापि नारायणजन्यत्वश्रवणेन साम्यात् ।

न च नारायणजन्यत्वेन श्रुतो रुद्रोऽन्य एव, प्रकृते तु विष्णुजनकत्वेन श्रुतः परमशिवस्साम्योऽन्य एवेति न विरोध इति वाच्यम् । नारायणोपनिषदि *नारायणाद्रुद्रो जायते* इति पराभिमतशिवस्यैव प्रधानस्य नारायणजन्यत्वमावेद्यत इति स्वीकार्यत्वात् तथैवोत्तरत्र *नारायणाद्द्वादशादित्या रुद्रा वसव* इति बहुवचननान्तरुद्रशब्देन रुद्रमात्रग्रहसिद्धेः प्रथमंवचनान्त रुद्रशब्दस्य प्रधानरुद्रपरत्वावश्यंभावात् । न च सोऽपि संहाररुद्र एव न तु साम्बशिवशब्दितः प्रधानरुद्रः इति वाच्यम् । संहारातिरिक्तस्य साम्बशिवस्य सत्वे विवादात् । तस्मात् *सोमः पवत* इति वाक्ये विरोधे गुणवादस्यादिति न्यायेन सोमलतायाः स्तुतिरेव क्रियत इति स्वीकार्यं न त्वन्यथा । तथा सति रूढिबाधापत्तेः । किन्च प्रसिद्धसोमलताया एवादृष्टद्वारा मत्स्यादिजनकत्वात् विष्ण्वभिव्यक्तिरूपजन्मकारणत्वमुपपन्नमिति न यौगिकार्थाश्रयणे विशेषकारणं पश्यामः । विष्णोर्जनिस्तु तत्कालीन सुकृतिदर्शनात्मिकैव न त्वस्मदादिवदिति ज्ञेयम् । तस्मादयं मन्त्रः विष्णोरुत्पत्तौ प्रमाणं भवितुं नार्हति ।

ननु श्रीमद्भागवते -

अहं ब्रह्म च शर्वश्च जगतः कारणं परम् ।
आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषिणः ॥ 1 ॥
आत्ममायां समाविश्य सोऽहं गुणमयी द्विज ।
सृजन्रक्षन्हरन्विश्वं दध्रे संज्ञां क्रियोचिताम् ॥ 2 ॥
तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि ।
देहात्मबुद्धिर्भूतानि भेदेनाज्ञोऽनुपश्यति ॥ 3 ॥
यथा पुमान्न स्वांगेषु शिरःपाण्यादिषु क्वचित् ।
पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः ॥ 4 ॥
त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ।
सर्वभूतात्मना ब्रह्मन् स शान्तिमधिगच्छति ॥ 5 ॥

इत्यादिवाक्यानि ब्रह्मविष्णुमहेश्वराणां स्फुटतरं अभेदस्य निरूपणादिति चेन्न ।

अन्तर्यामिस्वरूपेण ब्रह्मरुद्राद्यभिन्नता ।
ननु जीवस्वरूपेण जीवा भिन्ना यतो हरेः ।
विशेषाभेदवचनं सन्निधानविशेषतः ।
सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं हरेः ॥

इति भविष्यत्पर्वणि ,

हरेः वशत्वदृष्टिस्तु भूतानामपृथग्दृशिः ।
प्रियत्वदृष्टिरथवा ब्रह्मादीनां विशेषतः ॥ इति गारुडे ।

*सर्वभूतात्मना सर्वभूतान्तर्यामित्वमेव* इत्यादिना प्रमाणेभ्यः अभेदवाक्यव्यवस्थापनात् ।

किञ्च एकत्रविष्ण्वपेक्षया परत्ववचनं, अपरत्र तयोरभेद-वचनं पुनः अन्यत्र शिवेन विष्णुसंहारादि निग्रहवचनं अस्य ग्रन्थकारस्य नूनं पैत्त्यमावेदयति ।
तथा हि एषां वाक्यानाम् एवं हि अर्थः - अहं विष्णुनामा, ब्रह्मा ब्रह्मान्तर्यामी ब्रह्मनामा, च शर्वश्च रुद्रान्तर्यामी रुद्र-नामा त्रिरूपो जगतः सृष्ट्यादौ परं कारणम् उत्तमकारणम् । आत्मा अन्तर्यामि, ईश्वरः स्वामी । उपद्रष्टा उत्तमद्रष्टा, सा-क्षीति यावत् । स्वयं दृक् स्वप्रकाशः, विशिष्यते इति विशेषणं न विद्यते विशेषणं यस्मात् सोऽविशेषणः । तारतम्यानन्तर्गत इति यावत् । (1)

हे द्विज! योऽहं त्रिरूपः, सोऽहं आत्ममायां सत्वादिगुण-मयीं, स्वाधीनां जडप्रकृतिं आविष्य रजोगुणोपादानेन ब्रह्माणं सृष्ट्वा, ब्रह्माख्यमद्रूपेण तं प्रविश्य जगत्सृजन्, सत्वादिगुणप्र-वर्तकत्वेन विष्णुरूपेण विश्वं रक्षन्, तमोगुणोपादानत्वेन शिवं सृष्ट्वा शिवाख्यमद्रूपेण तं प्रविश्य हरन् संहरन्, तत्क्रियोचिताः सर्जनादिक्रियोचिताः, संज्ञां ब्रह्मविष्णुहरेति दध्रे धारयामि । बृंहणात्सर्जनात् ब्रह्मा, वेशनात् रक्षणात् विष्णुः, हरणात् संह-रणात् रुद्रः इति संज्ञानां क्रियावाचित्वं ज्ञातव्यम् । तथा च ब्रह्मरुद्रयोः मत्सन्निधानविशेषाधिष्ठानत्वात् तत्सृष्टिसंहारवचनं नोचितमिति भावः । (2)

योऽहं विश्वस्य सृष्ट्यादिकर्ता, यस्मिन् ब्रह्मणि गुणपूर्णे, अ-द्वितीये समाधिकरहिते, केवले जडामिश्रे, परमात्मनि सर्व-जीवोत्तमे, मयि स्थितानि मदधीनानि यानि भूतानि भेदेन

पृथक्त्वेन, मदधीनसत्तेति यावत् । योऽनुपश्यति स्वशास्त्रमनुसृत्य जानाति । जातावेकवचनम् । स देहात्मबुद्धिः देहादावहमेव कर्तेति ज्ञानवान् । भ्रान्त इति यावत् । कुतो यतोऽज्ञो मम भूतानां च स्वरूपज्ञानशून्यः, तथा च हरेः जगज्जन्मादिकर्तृत्वात् गुणपूर्णात्वात्, अद्वितीयत्वात् इत्यादियुक्तत्वाच्च ब्रह्मादिभूतानि हर्यधीनानीत्येव दृष्टिः कार्येति भावः । (3)

एवं रुद्रद्रोहस्तव नोचित् इत्युक्त्वा इदानीं स्वोत्तमेषु रुद्रादिषु प्रत्युताधिकारिणा विशेषाकारेण प्रियत्वदृष्टिरेव कार्येत्याशयेनाधिकारिबुद्धिं सदृष्टान्तमाह- यथेति । क्वचित् कदाचित् पारक्यबुद्धिं अस्वकीयत्वबुद्धिमिति यावत् । न कुरुते । किन्तु स्वकीयत्वबुद्धिमेव करोति । एवं तथा मत्परः अहमेव पर इति ज्ञानी, भूतेषु प्राणिषु पारक्यबुद्धिं न कुरुते । किन्तु स्वकीयत्वबुद्धिमेव करोति । स्वोत्तमेषु विशेषाकारेणेत्यपि पूरणीयम् । तथा च तवापि मत्परत्वात् रुद्रादिस्वोत्तमेषु स्वकीयत्वबुद्धिरावश्यकीति भावः । (4)

एकभावानां एकधर्माणां सर्वत्र ज्ञानानन्दादिगुणपूर्णत्वेन प्रमितानामिति यावत् । अनेन सर्वान्तर्यामित्वेन भेदानुमानेन बाधितमिति सूचयति । त्रयाणां ब्रह्मविष्णुहरसंज्ञानां मद्रूपाणां सर्वात्मना सर्वान्तर्यामित्वेन, हेतुना प्राप्तां वै भिदां न पश्यति न जानाति । हे ब्रह्मन् दक्ष । स शान्तिं मोक्षं अधिगच्छति गच्छतीत्यन्वयः । तस्मादिमानि वचनानि अभेदपराणि भवितुं नार्हन्ति । अभेदपरत्वं च पूर्वापरविरोधः संभवति । (5)

ब्रह्मापि ब्रह्मरूपोऽसौ शिवरूपां शिवेस्थितं इत्युक्तेः ।

माध्वैः कुत्रापि रुद्रद्वेषस्याकरणात् । अतः मणिमञ्जरीकृद्भिः श्रीमन्नारायणपण्डिताचार्यैः **शिवस्तुतिः** विहिता ॥ श्रीमदाचार्यैरपि *ध्येयः पञ्चमुखो रुद्रः* (तन्त्रसारे) इत्यादिना रुद्रस्य जीवैःपूज्यत्वमुक्तम् ।

एवमेव *मत्तः परतरं किञ्चिन्नान्यदस्ति न संशयः । ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणेष्वहम्* । इति लिंगपुराणवचनम् । *यो वै विष्णुः स वै रुद्रो यो रुद्रः स पितामहः । एकमूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः* । इति हरिवंशवचनमपि व्याख्येयम् । एवमेव सनत्कुमारसंहितावचनम्, वामनवचनम्, कूर्मपुराणादिवचनानि अपि योज्यानि ।

वामने उत्तरत्र -

पुत्रस्यैतद्वचः श्रुत्वा प्रह्लादः क्रोधमूर्च्छितः ।
धिग्धिगित्याह स बलिं वैकुण्ठाक्षेपवादिनम् ॥
धिक्त्वां पापसमाचार दुष्टबुद्धे सुबालिश ।
हरिं निन्दयतो जिह्वा कथं न पतिता तव ॥
यत्त्रैलोक्यगुरुं विष्णुमभिनिन्दसि दुर्मते ।
सर्वेश्वरेश्वरं देवं कथं निन्दितवानसि ॥
( ० ० ० )
इति वचनात् नैक्ष्यं बोध्यम् ।

*यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः । साधयेदुदरव्याधियुक्तो भवति मानवः* इति कर्मविपाकवचनस्य यो जीवः

ब्रह्मविष्णुरुद्राणां भेदम् अभिप्रायभेदं साधयेत् तस्य उदरव्याधिः भवति इत्यर्थः ।यद्वा अन्तर्यामिभगवद्रूपाणां इति ज्ञेयम्।

ननु *निरयं ते गमिष्यन्ति ये द्विषन्ति महेश्वरम्* इति पद्मपुराणवचनात् रुद्रद्वेषे नरकप्राप्तिश्रवणात् कथं सर्वोत्तमत्वं विष्णोरिति चेन्न । प्रत्युत तत्रैव पद्मपुराणे उत्तरखण्डे सप्तविंशत्यधिकविंशततमेऽध्याये -

हरेः पदं वर्णयितुं न शक्यं मया च धात्रा च मुनीन्द्रसङ्घैः ।

तत्र त्रिपाद्विभूतेस्तु रूपं वक्ष्यामि विस्तरात् । इत्यादिवचनैः विष्णुज्ञानेनैव मोक्षस्य श्रवणात् ।

अपि च *मानस्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रूपवोऽन्नेषु जागृधुः* इति वेदवाक्ये विष्णुद्वेषेण तमःप्राप्तिः श्रूयते । अयं च मंत्रः वायुं प्रति विद्यादेवतानां प्रार्थनारूपः । हे ब्रहस्पते । ये निरामिणः रामो रमणं भावे घनन्तः । तदस्यस्तीति रामी, तस्मात् निष्क्रान्ताः भगवदुत्तमत्वाज्ञानिनः, अत एव रिपवः, शत्रवः, अन्नेषु बाह्यभोग्यपदार्थेषु, जागृष्वधुः आकाङ्क्षां चक्रुः । गृधुः अभिकाङ्क्षायां इत्यस्य लिटि प्रथमापुरुषबहुवचनम् ।अभ्यासदीर्घस्तु छांदसः ।ते अभिद्रुहपदे अभितो द्रोहस्य पदे स्थातुं योग्याः , नित्यं अन्धे तमसि स्थातुं योग्याः इति यावत् ।यतो अतः तेभ्यह् स्तेनेभ्यो ब्रह्मस्तेनेभ्यः कदाचित् अपि, नः अस्मान् मा ब्रूहि मावोचः इति ।अस्मिन् वाक्ये विष्णुद्वेषिणः नित्यनरकप्राप्तिः श्रूयते ।

अवजानन्ति मां मूढाः मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ।
मोघाशा मोघकर्माणः मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः । इति च

इह गीताव्याख्याने शांकरभाष्येऽपि कृष्णद्वेषिणां अनर्थप्राप्तिरुक्तैव ।

किञ्च *नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् । कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्* । इति भागवतव्याख्यानेऽपि श्रीधरस्वामिना । *एवं भूतमपि ज्ञानं अच्युते भावः भक्तिः तद्वर्जितं चेत् अलं अत्यर्थं न शोभते । सम्यगपरोक्षाय न कल्पते इत्यर्थः* इति उक्तम् ।

हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ।
विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः ॥
यदनिन्दत्पिता मह्यं त्वदभक्ते मयि चाघवान् ।
तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादधात् ॥
निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य च ।
ततो नापैति यः सोऽपि यात्यधः सुकृताच्युतः ॥
ममात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
आसुरीं योनिमापन्नाः मूढाः जन्मनि जन्मनि ॥
मामप्राप्यैव कौन्तेय ततो यान्ति अधमां गतिम् ।
यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं प्रभुम् ॥

कथं न संभवेदद्रेष्यः आलोकान्तस्य कस्य चित् ।
यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं प्रभुम् ॥
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।

इत्यादिस्मृतिवाक्येषु विष्णुद्वेषस्य अनर्थफलत्वम् श्रूयते । विष्णुद्वेषस्य अनर्थकारणत्वं च श्रुतिमूलस्मृतिसिद्धत्वात् पद्म-पुराणवचनात् इमानि वचनानि प्रबलानि भवन्ति । तस्मात् पद्मपुराणवचनस्य अर्थान्तरं कल्पनीयम् ।

द्वेषो नाम शत्रुभावः । न हि माध्वाः रुद्रद्वेषिणः । *प-रिवारतया ग्राह्याः अपि हेयाः प्रधानतः ।* इति वचनात् रुद्रस्यापि विष्णुपरिवारत्वेन पूजार्हत्वाङ्गीकार्यम् । *अङ्गीक्रि-यत एव शिवाद्यनुग्रहे भगवत्प्रसादसाधनभूतो मोक्षहेतुः* इति टीकावचनात् अस्माभिरपि रुद्रानुग्रहः अपेक्षितः एव । त-स्मात् कथं माध्वाः रुद्रद्वेषिणः भवन्ति ?

ननु द्रोणपर्वणि रात्रिकर्तव्यनित्यशिवपूजार्थं क्लृप्तः सर्वोऽप्यु-पहारः समागताय कृष्णायार्जुनेन समर्पितं इत्यभिहितम् । त-दपि कृष्णमूर्तौ शिवाविर्भावोऽस्तीति शिवार्चनबुध्यासमर्पित-मित्यवधेयम् । न च शिवादप्युत्तमः समायात इति कृष्णाय पूजाद्रव्यमर्जुनेन समर्पितम् । न शिवार्चनबुध्येति भ्रमितव्यम् । तस्यामेव निशायां जयद्रथवधार्थं विज्ञातविस्मृतपाशुपतास्त्रस-न्धानप्रकारविशेषपरिज्ञानाय कृष्णेन सह कृतकैलासगमनेनार्जु-नेन कृष्णाय पूर्वं समर्पितः सर्वोऽप्युपाहारः स्वप्ने शिवसन्निधाने दृष्ट इति । तत्रैव -

तं चोपाहारं सततं नैशं नैत्यकमात्मनः ।
ददर्श त्र्यंबकाभ्याशे वासुदेवे समर्पितम्
- 3305 । (द्रो-81-2) नैशं=निशिभवं=नैशम्, नैत्य-

कं=नित्यस्य अयं=नैत्यकः

इति अभिधानेन वासुदेवे शिवांशत्वागमात् इति चेन्न । अस्याध्यायस्य पूर्वत्र -

एको वीरसहस्राक्षः दैत्यदानवदर्पहा ।
सोऽपि तं नोत्सहेनाजौ हन्तुं द्रोणेन रक्षितम् ॥
सोऽहं श्वस्तत् करिष्यामि यथा कुन्तीसुतोऽर्जुनः ।
अप्राप्तेऽस्तं दिवाकरे हनिष्यति जयद्रथम् ॥
न हि दारा न मित्राणि ज्ञातयो न च बान्धवाः ।
कश्चिदन्यः प्रियतरः कुन्तीपुत्रात्ममार्जुनात् ॥
अनर्जुनमिमं लोकं मुहूर्तमपि दारुक ।
उदीक्षितं न शक्तोहं भविता न च तत् तथा ॥
अहं विजित्य तान् सर्वान् सहसा सह यद्विपान् ।
अर्जुनार्थे हनिष्यामि सकर्णान् ससुमोदनान् ॥
श्वो निरीक्षन्तु मे वीर्यं त्रयो लोका महाहवे ।
धनंजयार्थे समरे पराक्रान्तस्य दारुक ॥

इत्यादि वचनैः स्वस्य तेषां सर्वेषां हननसामर्थ्यं अस्ति इति वदन् कृष्णः पुनः रुद्रसमीपे नयनेन इदं ज्ञापयति । *आचार्यवान् पुरुषो वेदः ।* भगवांस्त्वेव मे कामे ब्रूयाच्छ्रुतं ह्येव मे भगवद्वेषेभ्यः आचार्यादेव विदिता विद्या सादिष्टं प्रापयति इति वचनात् गुरुद्वारा प्राप्तमेव अस्त्रं परभंजकं भवति । तस्मात् अर्जुनस्तावत् इन्द्रावतारपुंसः । तस्येन्द्रस्य गुरुः तावत् उमापतिः रुद्रः । तस्मात् तं अर्जुनं श्रीकृष्णः रुद्रसमीपे नीतवान् । तदुक्तं श्रीमध्वाचार्यैः -

स्वयमेवाखिलजगद्रक्षाद्यमितशक्तिमान् ।
अपि अज्युतो गुरु द्वारा प्रसाद्कृदहं त्विति ॥
ज्ञापयन्फालुमस्यास्त्रगुरुं गिरीशमञ्जसा ।
प्रापयित्वैनमेवेतत्प्रसादादस्त्रमुल्बणम् ॥ इति
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥

इति गीतावचनात् रुद्रस्थित्वा भोक्ताऽहमेवेति सूचयितुं रुद्रोपाहारः श्रीकृष्णेन स्वीकृतः । कैलासे च रुद्रसमीपे प्रक्षिप्तः । अहमेव रुद्रंप्रति ददामीति सूचयति इमानि वाक्यानि । तस्मात् इदं वाक्यं कृष्णस्य रुद्रांशत्वं ज्ञापकं भवितुं नार्हति ॥

सर्ववेदोदितो देवः हयग्रीवः सुरोत्तमः ।
रुद्र तत्पूजनो नित्यं उत्तमः स कथं भवेत् ।

# तत्त्वमसि वाक्यार्थ विचारः

ननु *उपक्रमे येनाश्रुतं श्रुतं भवति* इत्यादौ अनन्यलभ्याद्वैततत्त्वविषयकः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च जीवब्रह्मणो ब्रह्मजीवयोश्च वास्तविकभेदस्वीकारे अनुपपद्यमानमृदादिदृष्टान्तमनिरुद्ध्य विवर्ताभिप्रायेणैव समर्थनीया न तु परिणामाभिप्रायेण । न च मृदः शरावादयोः भिद्यन्ते । न च अभिन्नाः, न वा भिन्नाभिन्नाः किन्तु अनिर्वचनीय एव । तथा च उपादानस्वरूपे ज्ञाते तदात्मनोपादेयं ज्ञातं भवत्येवमभिप्रायबोधनाय मृदादिदृष्टान्तप्रदर्शनमस्ति न तु परिणामाभिप्रायकमिति बोध्यम् । सत्येवं दार्ष्टान्तिकं ब्रह्माऽविकृतम् समर्थितं भवति इति चेन्न । अभेदपरत्वे च दृष्टान्तकदार्ष्टान्तिकभावानुपपत्तेः । न हि मृदः घटं प्रति जगति विवर्तोपादानत्वं लोके प्रसिद्धम् । न हि मृद्घटः इति सामानाधिकर्ण्येन भ्रान्तिर्वा *मृन्न घटः* इति बाधो वा दृश्यते । येन तयोः एकस्य आरोपाधिष्ठानत्वं विवर्तोपादानत्वं वा घटेत । अपरस्य आरोप्यत्वं उपादेयत्वं वा सिद्ध्येत् । न चपरिणामाभिप्रायेण एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा समर्थने भेदस्य, अभेदस्य, भेदाभेदस्य वाऽयोगः उक्तः इति वाच्यम् पक्षत्रयेऽपि दोषाभावात् । तथाहि मृदः जलानयनरूपघटकार्यकारित्वाभावात् । न हि स्वस्थत्मना केनापि मृदं दृष्ट्वा *अयं घटः* इति व्यवह्रियते । मृदेव घटो जातः इति व्यवहारात् तयोः अभेदोऽप्यस्ति । आत्यन्तिकभेदाभेदयोरेव विरोधात् । भेदाभेदपक्षोऽपि उपपद्यते । मृदो वा घटस्य वाऽनिर्वचनीयत्वस्याप्रसिद्धेश्च । दार्ष्टान्तिके भवदभिमतस्य मिथ्यात्वाद्युपपादकस्य एकविज्ञानेनापरविज्ञानप्रयोजकस्य दृष्टान्तेऽनुपलम्भात् । यदि विलक्षणत्वेऽपि तयोः धर्मान्तरमवलम्ब्य एकविज्ञानेनापरवि-

ज्ञानं तद्दृष्टान्तश्चोपपद्यते तर्हि परिणामवादेऽपि समःसमाधिः । मृद्घटयोः विवर्तोपादानोपादेयभावाङ्गीकारेऽपि, परिणामपरिणामिभावस्यावर्जनीयत्वेन दृष्टान्तानुपपत्तेरपरिहार्यत्वात् । न च दृष्टान्ते सम्भवनीयाः यावन्तो भावाः दार्ष्टान्तिकेऽपि अनुवर्तनीया इति नियमः येन दृष्टान्तानुपपत्तिरिति वाच्यम् । परिणामाङ्गीकारेऽपि दार्ष्टान्तिकवृत्तिधर्मान्तरनिमित्तस्य एकविज्ञानेन सर्वविज्ञानस्योपपत्तेः तत्खण्डनप्रयासावैय्यर्थ्यापत्तेः । ( इदं च वैय्यात्येनाभिहितम् )

वस्तुतस्तु सादृश्यप्राधान्यालम्बनोयं दृष्टान्तदार्ष्टान्तिकभावः । एकविज्ञानेन अपरविज्ञानयोगश्च । तदुक्तं छान्दोग्यभाष्ये-

यथा मृत्पिण्डविज्ञानानात्सादृश्यादेव मृन्मयाः ।
विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च ।
यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा ।
प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा ।
अल्पेपि हि विज्ञाते सदृशे तादृशं बहु ।
ज्ञायते नखकृन्तन्या यथा सर्वं अयोमयम् ।
किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् ।
अनन्याधीनविज्ञानादन्याधीनं तथैव च ।
मदयोलोहनाम्नां हि ज्ञानात्संकेतिकं यथा । इत्यादिसामसंहितायाम् (6-1-9)

अयमाशयः । एकविज्ञानेन सर्वविज्ञानं न विवर्तपादं नापि परिणामवादं आश्रयति । अधिष्ठानज्ञानेन आरोप्यज्ञानस्यादर्शनात् । तदुक्तं तत्त्वनिर्णये -

न हि शुक्तिज्ञो रजतज्ञ इत्युच्यते । विरोधात् तयोर्ज्ञानयोरिति दृष्टान्तानुपपत्तेश्च । निर्विशेषे ब्रह्मणि सर्वाभेदांगीकारे उक्तविधानयोगाच्च । परिणामवादस्य निर्विकारत्वश्रुतिविरोधः । न हि क्षीरे ज्ञाते दधि ज्ञातं भवति । न वा घृतादि । एक तारणवह्निव्यक्त्यौष्ण्यज्ञानेन सर्वासामपि वह्निव्यक्तीनां उष्णत्वज्ञानाच्च । न च तदनुमेयम् । व्याप्त्यादिस्मरणं विनाऽपि झटित्येव निवृत्यादिदर्शनात् ।

किन्तु सादृश्यं प्राधान्यमल्पत्वादि वा अवलम्ब्य एकविज्ञानेन सर्वविज्ञानमङ्गीकर्तव्यम् । एकस्यां स्त्रीव्यक्तौ स्त्रीशब्दवाच्यत्वेन रूपेण ज्ञातायां, स्तनकेशवती स्त्री स्यादित्युक्तसादृश्यादन्याऽन्याऽपि स्त्रीव्यक्तिः विनैवोपदेशेन ज्ञायते । श्रुत्युक्तप्रथमदृष्टान्ते तु उपादानोपादेयभावोऽपि अस्ति । इह तु नेति विशेषः । सादृश्यञ्च असाधारणधर्माद्यभिव्यंग्य बोध्यम् ।

प्राधान्यं तु प्रधानपुरुषाणां ज्ञानावहनानाशनैः ग्रामो ज्ञात आहूतेः नाशित इति व्यपदेशात् ज्ञेयम् । श्रुत्युक्तद्वितीयदृष्टान्ते क्वचित् उपादानोपादेयभावोऽस्तीति विशेषः । एकपदेन उपादानोपादेयभावोऽपि न सार्वत्रिक इति सूचितम् ।

ननु इदमयुक्तम् । सदृशप्रधानज्ञानेन सर्वज्ञाननियमाभावेन तादृशार्थस्यासम्मतत्वात् । न हि गोज्ञाने तत्सदृशस्य गवयादेः राजज्ञाने च तदधीनस्य प्रज्ञादेः नियतं ज्ञानं सम्भवति । तस्मात् अनियतज्ञाने तत्सदृशादेः कल्पनं प्रामादिकमेवेति चेत् मैवम् । दत्तोत्तरत्वात् । असाधारणधर्मादेरेव सादृश्य-

प्रयोजकत्वस्याभ्युपगमात् । प्राधान्यस्य प्रयोजकत्वं तु फलभिसन्धिद्वारेति अदोषाच्च । यत् अमुख्यात् सेत्स्यमानं फलं तन्मुख्यादवश्यं भावि । मुख्यामुख्यभावश्च एकफलप्रयोजकत्व एवेति ज्ञेयम् । अत एव काण्डशाखादिभ्यः निष्पद्यमानं फलं पुष्पादिना जन्यम् । तदुक्तं आथर्वणवाक्यव्याख्यानसमये श्रीमन्त्रालयस्वामिपादैः *स ब्रह्मा सर्वविद्याप्रतिष्टां सर्वा विद्याः प्रतितिष्ठन्ति यस्यां तां यज्ज्ञाने सर्वविद्या विदितफलाः भवन्ति तादृशीं ब्रह्मविद्यामिति ॥ इति*

ननु एवं तर्हि उपचारः प्रसज्येत । विज्ञातशब्दस्य विज्ञाते सति यत्फलं तदर्थत्वाऽङ्गीकारादिति चेन्न । मुख्यार्थानुपपत्तौ उपचाराऽङ्गीकारस्य न्यायत्वात् । अत एव प्रकारान्तरस्यासम्भवः प्रागेवोपपादितः । ननु उपचारप्रयोगे प्रयोजनं वाच्यमिति चेन्न निरूढत्वादस्य प्रयोगस्य न प्रयोजनापेक्षा इति भावः । ब्रह्मज्ञानेन सर्वज्ञानफलसिद्धिरित्यत्र किं प्रमाणमिति चेन्न ज्ञानादेव सर्वे कामाः सम्पद्यन्ते इति श्रुतिसद्भावात् । तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानत इति स्मृतेश्च । सर्वेषु वेदेषु प्रतिपाद्यत्वेन ब्रह्म विजानतो ब्राह्मणस्य ब्रह्मणोऽणनयोग्यस्य जगद्ज्ञानेन यावानर्थः तावान् ततोऽधिकश्च भवतीति स्मृत्यर्थः । तस्मात् न कोऽपि दोषः अस्मत्पक्षे वर्तते । श्रुत्युक्त तृतीयदृष्टान्ते तु अल्पभूतसादृश्यज्ञानान्महासदृशज्ञानमिति ज्ञेयम् । तथा च सादृश्यं वा प्राधान्यं वा भेदमात्रसापेक्षमिति अस्य महाप्रकरणस्योपक्रमे नाभेदतात्पर्यकत्वमिति सिद्धम् ।

एवं तत्त्वमसिवाक्यस्य भेदबोधकत्वाङ्गीकारे नूतनः कश्चित् एवमाह - *अनन्यलभ्यो हि शास्त्रार्थः* इति न्यायेन शास्त्रा-

दतिरिक्तेन प्रमाणेन यन्न लभ्यते तत्रैवस्ति शास्त्रस्य तात्पर्यम् । जीवब्रह्मणोः भेदस्य प्रत्यक्षादिप्रमाणेभ्यः सिद्धत्वेन पुनः तस्यैव शास्त्राणां तात्पर्यतः प्रतिपादनं कथं युज्यते इति । तन्न । अस्य न्यायस्य को वार्थः । यत् प्रत्यक्षादिप्रमाणैः वेद्यं तन्न शास्त्रे प्रतिपादनीयम् इति वा प्रत्यक्षादि वेद्यार्थ विरुद्धमेव प्रतिपादनीयम् इति वा । नाद्यः *अहं अज्ञः* इत्यादिप्रत्यक्षेण तथा अनुमाननेन च सिद्धे अज्ञाने अद्वैतसिद्ध्यादिग्रन्थेषु *अनृतेन हि प्रत्यूढाः नीहारेण प्रावृताः, तम आसीत् मायां तु प्रकृतिं विद्यात्* इत्यादि श्रुत्युपन्यासस्य अयुक्तत्वापत्तेः ।

न च संवादार्थं प्रमाणान्तरोपन्यासमिति चेन्न । सममस्मत्पक्षेऽपि । अनुमानसिद्धजगत्मिथ्यात्वविषये वाचारम्भणश्रुत्युपन्यासानुपपत्तेश्च । न द्वितीयः । स्फीतालोकमध्यवर्तिघटप्रत्यक्षान्तरजातेन *अयं घटः* इति प्रत्यक्षेण विरुद्धस्यार्थस्य प्रतिपादकस्य नायं घटः इत्यस्य आगमस्य प्रामाण्यापत्तेः ।

ननु तर्हि वेदवाक्यनां कथं अपूर्वता इति चेत् श्रुणु । अपूर्वत्वं नाम स्वबोधनीयपुरुषगताज्ञानादिविरोधिना स्वानुपजीविमानान्तरेणाग्राह्यत्वम् । यस्य वाक्यस्यापूर्वतोच्यते तद्वाक्यं स्वपदेन गृह्यते इति एतादृशापूर्वत्वं तावत् वेदवाक्यानां भेदबोधकत्वे एव संगच्छते । अस्यार्थस्तु - स्वं शब्दः तेन बोधनीयो यः पुरुषः तद्गतम् यदज्ञानादि, तद्विरोधिना, स्वानुपजीविमानान्तरेणाग्राह्यत्वमिति । यथेश्वरसार्वज्ञप्रतिपादकं *यः सर्वज्ञः* इत्यादि वाक्यम् । ईश्वरसार्वज्ञस्य स्मृतिभिः कार्यत्वानुमानेन च प्राप्तत्वेऽपि स्मृतिवाक्यकार्यत्वानुमानयोः वेदोपजीवित्वात् स्वानुपजीविमानान्तरेणाग्राह्यत्वाभावात् तच्छ्रुतेः

अपूर्वतम् स्वानुपजीविमानान्तरेणाग्राह्यत्वमात्रोक्तौ सार्वज्ञादिरूपवेदार्थस्य शब्दानुपजीवीश्वरप्रत्यक्षग्राह्यत्वात् असम्भवः । अतः स्वबोधनीयपुरुषगताज्ञानविरोधिनेति । ईश्वरस्य वेदबोधनीयत्वाभावात् वेदबोधनीयास्मदादिगताज्ञानादिकं प्रतीश्वरप्रत्यक्षस्य विरोधित्वासंभवात् असम्भवपरिहारः ।

ननु जीवेश्वरभेदस्य प्रत्यक्षप्राप्तत्वात् कथं अपूर्वता इति चेन्न । ईश्वरस्य केवलप्रत्यक्षाग्राह्यत्वेन तद्धर्मिकस्य, तत्प्रतियोगिकस्य वा भेदस्य ग्रहणे प्रत्यक्षस्य वेदोपजीवित्वावश्यंभावात् । तथा च स्वं तत्त्वमसीति वाक्यं । तद्बोधनीयदेवदत्तगतं यद् जीवेश्वरभेदविषयकं अज्ञानादि, तद्विरोधि यत् स्वानुपजीवि मानान्तरं इत्युक्ते न जीवेश्वरभेदप्रत्यक्षादि । तस्य ईश्वरविषये वेदोपजीवित्वात् । तदग्राह्यत्वं जीवेष्वरभेदस्य सुगममिति अपूर्वत्वम् । न च जीवस्य प्रत्यक्षेणैव प्राप्तिरस्तीति तद्भेदबोधकश्रुतेः कथं अपूर्वत्वमिति वाच्यम् । कस्यापि वेदवाक्यस्यापूर्वत्वाभावापत्तेः । आम्शिक प्रमाणान्तरसिद्धेः सार्वत्रिकत्वात् ।

अङ्गीकृत्यचेदमुदिनम् । वस्तुतस्तु जीवधर्मिकभेदेऽप्यपूर्वता अस्त्येव । शास्त्रनिरपेक्षप्रमाणान्तरप्राप्तेरभावात् । अन्यथा ऐक्यस्यापि शास्त्रसापेक्षानुमानग्राह्यत्वेनापूर्वत्वाभावापत्तेः । यद्वा श्रुतिप्रतिपाद्यः भेदः कालत्रयाबाध्यः । न हि प्रत्यक्षेण तादृशो भेदः सिद्धः । त्वया प्रत्यक्षस्य वर्तमानमात्रग्राहित्वाभ्युपगमात् । तथा चापूर्वता त्वन्मतानुसारेण सिद्धा । तदुक्तं न्यायामृते *कालत्रयाबाध्यभेदस्य शास्त्रं विनाऽप्राप्तेरपूर्वतां* इति । (Vol-III, Page 490 )

ननु उपक्रमादितात्पर्यलिङ्गैः अभेदपरत्वावगमात् तत्कथं

भेदपरत्वमिति चेन्न । अभिप्रायसद्भावात् तथाहि - महाप्रकरणस्यास्य उपक्रमे तावत् श्वेतकेतुं स्वपुत्रं गुरुकुलात् सर्वान् वेदान् अधीत्य गृहमागतं, स्तब्धं मानिनं प्रति पितुरुद्दालकस्य तत्स्तब्धतानिवारणाय् अयं उपदेशः इति सर्वैः अङ्गीकृतः । उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति इति हि प्रश्नः । अत्र विजातीयद्वितीयपदार्थाभावे *येनाश्रुतं श्रुतं भवति* इत्यादिविशेषणं च व्यर्थं भवति ।

ननु जीवब्रह्मणोः जगत्ब्रह्मणोश्च वास्तविकभेदाङ्गीकारे कथं एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा इति चेन्न लोके तावत् प्रधानभूतपदार्थज्ञानेन यत्फलं तत् अप्रधानभूतपदार्थज्ञानेन भवतीति सिद्धम् । अप्रधानभृत्यज्ञानेन यत्फलं तत्फलं च मन्त्र्यादिज्ञानेन भवति । तद्वत् अप्रधानभूतजगद्ज्ञानेन वा जीवज्ञानेन यत्फलं तद्फलं च श्रीहरिज्ञानेन भवति । एतेन राजज्ञाने तदधीनस्य प्रजादेः नियतं ज्ञानं न सम्भवतीति निरस्तम् । तदुक्तम् *स ब्रह्मविद्यं सर्वविद्याप्रतिष्ठाम्* इति आथर्वणवाक्यव्याख्यानसमये श्रीमन्त्रालयस्वामिपादैः -

*स ब्रह्मा सर्वविद्याप्रतिष्ठां सर्वा विद्याः प्रतितिष्ठन्ति यस्यां तां यज्ज्ञाने सर्वविद्या विदितफलाः भवन्ति तादृशीं ब्रह्मविद्यामिति ।*

ननु उत्तरत्र दीयमान मृदादिदृष्टान्तमनुरुध्य एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च विवर्ताभिप्रायेणैव समर्थनीया । एवं च दार्ष्टान्तिकं ब्रह्मापि अविकृतं समर्थितं भवति । न खलु नित्यस्य निष्कलस्य ब्रह्मणः सर्वात्मनैकदेशेन वा परिणामः सम्भवति । नित्यत्वादविकृतत्वादनेकदेशत्वाच्च । यदाहुः सर्वज्ञात्ममुनयः - कृपणधीः परिणाममुदीक्ष्यते क्षपितकल्मषधीस्तु विवर्ततामिति । तन्न । अधिष्ठानभूतशुक्तिज्ञानेन आरोप्यमानरजतज्ञानस्या-

योगात् । न हि शुक्तिज्ञः रजतज्ञः इति केनापि उच्यते । न वा कश्चित् विद्यमानज्ञः अविद्यमानज्ञः इत्युच्यते । प्रत्युत अधिष्ठानज्ञानेन रजतभ्रमस्य निवृत्तिरेव दृष्टा । एतेन रज्वां ज्ञातायां भुजंगत्वं ज्ञातं भवति । इत्युक्तं निरस्तं वेदितव्यम् । यच्चोक्तं विवर्तवादे अधिष्ठानज्ञानेनारोपितस्य तत्त्वतो ज्ञातत्त्वं सम्प्रतिपन्नमिति । तदयुक्तम् । आरोपितत्त्वे तस्य मिथ्यात्वात् तत्वतो ज्ञातत्वायोगात् । एतावन्तं कालं शुक्तिकामेव रजतत्वेन प्रतिपन्नोहमिति रजतं न सत्यमिति बाधोत्तरकालीनानुभवात् रजतस्य तत्त्वतो ज्ञातत्वं न सम्प्रतिपन्नम् ।

ननु रज्जुसाक्षात्कारानन्तरं यत्प्राग् भुजंगतत्वमभात् सा रज्जुरिति प्रत्ययात् भुजंगो रज्जात्मकज्ञातस्वीयतत्त्वकत्वात्मकं रज्जुज्ञातेन तत्त्वतो ज्ञातत्वमक्षतमेवेति । तदसत् । तादात्म्यस्यापि आरोपितत्वेन अतत्त्वत्वात् मिथ्याभूतस्य सत्यात्मकत्वायोगात् । न हि कालत्रयेऽपि बाध्यमानः रज्जुसर्पः रज्ज्वात्मकः भवितुं अर्हति । अन्यथा ज्ञातस्वीयतत्त्वकरूप रज्ज्वात्मकसर्पस्य रज्जुवत् व्यावहारिकत्वापत्तेः । रज्ज्वाः सर्पत्वानुपपत्तेश्च । विवर्तवादस्तु विस्तरेण अनुव्याख्याने प्रथमाध्यायस्य चतुर्थपादे निराकृतः इति तत्रैव द्रष्टव्यः ।

ननु *वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्* इति वाक्यशेषे प्रदर्शितो दृष्टान्तोऽप्यनुकूल एव स्यात् । स च मृद्विकारस्य घटशरवादेरनृततां बोधयति । वाचायाः आरम्भणं आलम्बनमात्रमेव, विकारः घटशरवादिः नामधेयं नाममात्रं, न तु तस्य मृदः स्वकारणात् पृथग्भूता वस्तुसत्ताऽस्तीति द्योतयति । घटादीनां मिथ्यात्वे घटः सन्नित्यादिव्यवहारस्तर्हि कथमुपपाद्यते इत्यत आह मृत्तिकेत्येव सत्यम् इति । मृत्तिकात्मनैव घटादिकं सत्यं न तु स्वरूपेण इति अभिप्रायः । इति

चेन्न । वाचारम्भशब्दस्य अनृतत्त्वात्मक मिथ्यात्वरूपोऽर्थः रुढिमाश्रित्य उच्यते किं वा योगम् । नाद्यः रूढेरभावात् । रूढिज्ञापक व्याकरणकोशादेरभावात् । आरभ्यत इत्या-रम्भणं वाचां आरम्भणं वाचारंभणं योगपक्षोऽपि अयुक्तः । कर्तृकर्मणोरिति षष्ठ्या बाधात् । न च कृत्यल्युटो बहुलमिति बहुलग्रहणात् कर्मण्यपि सम्भवतीति वाच्यम् । प्रबलकार-णमन्तरेण बहुलग्रहणस्य कर्मणि व्याख्यातुमशक्यत्वात् । न च वाचायाः आरम्भणं वाचारम्भणम् इति एकपदाश्रयणेऽपि मिथ्यात्वरूपार्थलाभाऽसम्भवात् । न च आलम्बनमात्रमिति मिथ्यात्वसिद्धिरिति वाच्यम् । मात्रमित्यस्य अश्रुतकल्पनात् । कथमपि अनेन पदेन मिथ्यात्वसिद्धिः न सम्भवति ।

अस्मिन्पक्षे वाचारम्भकाव्यादेरिव मिथ्यात्वस्यालाभाच्च । ब्रह्मणोऽपि मिथ्यात्व प्रसंगाच्च । वाचा केवलमारभ्यते विका-रो न तु वस्तुवृत्तेनास्तीति व्याख्याने मिथ्यात्वं लभ्यते इति चेन्न - यतः श्रुत्या वाचारम्भणमित्युक्ते केवलपदप्रक्षेपेण मि-थ्येति व्याख्यानेऽश्रुतकल्पनमेवेति । नामधेयं नामधेयमात्रं इति व्याख्याने तस्मात् तस्य मिथ्यात्वबोधने तात्पर्यमिति चेत् पूर्ववाचारम्भणशब्देनैव मिथ्यात्वरूपार्थस्य लाभात् पुन-रुक्तिः । इति शब्दस्य तु निरर्थकत्वमेव । विवर्तविवक्षायां एकमणिपिण्डशब्दानां वैय्यर्थ्यमेव । जगतः ब्रह्मणि आरो-पितत्वेन चैकविज्ञानेन सर्वविज्ञाने विवक्षिते मृदा विज्ञातया मृन्मयं विज्ञातं स्यात् । लोहेन विज्ञातेन लोहमयं विज्ञा-तं स्यात् । कार्ष्णायसविज्ञातेन कृष्णायसं विज्ञातं स्यादिति एतावता पूर्णत्वात् सर्वशब्दानां त्रयाणामेकशब्दानां लोहमणि-पिण्डनखनिकृंतनशब्दानां विकारत्वाभावात् च वैय्यर्थ्यं स्यात् । सर्वस्यापि मृन्मयस्यैकमृत्पिण्ड दृष्टान्तायोगापत्तेश्च ।

ननु वाचाया आरंभणं वाचारम्भणं आलंबनमात्रमेव विकारो घटशरावादिः नामधेयं नाममात्रं न तु तस्य मृदः स्वकारणात् पृथग्भुता वस्तुसत्ता अस्तीति नामधेयपदं द्योतयति इति चेन्मैवम् शांकरभाष्ये तद्व्याख्याने च तृतीयायाः आश्रयणात् तद्विरोधात् ।वागालंबनमात्रत्वस्य असद्विषयेऽपि समानत्वात् मिथ्यात्वाप्रयोजकत्वात् ॥ मृत्तिकाया अपि विकृतत्वाविशेषात् तस्याः स्वकारणात् पृथग्भूता वस्तुसत्ता नास्तीति दृष्टान्तानुपपत्तेश्च ।

केचित्तु तदुपपादनायैव सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयमित्यभिहितम् । अत्र इदं शब्दोदितस्य जगतः सद्ब्रह्माभेदेन सत्वमभिधायार्थात् सद्व्यतिरेकेनाविद्यकनामरूपात्मकस्य भेदस्य मिथ्यात्वं स्पष्टं प्रतिपाद्यते । *एकमेवाद्वितीयम्* इत्यनेन भेदत्रयनिषेधद्वारा अभेदमेव समर्थ्यते । एवं *अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि* इत्यनेन मध्येऽपि जीवब्रह्मणोरभेदं उक्त्वा उक्तरीत्या निष्प्रपंचाद्वितीय ब्रह्मापरोक्षमेव परामृश्यते । एवं *ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो* इत्युपसंहारोऽपि उपक्रमानुगुण एव *इदं सर्वं यदयात्मा* इत्यादिश्रुत्यन्तराच्च । *सदेव सोम्येदमग्र आसीत्* इत्युपक्रमानुसाराच्च । एतत्= सत्, आत्मा अभिन्नं स्वरूपं अस्य सर्वस्य तदेतदात्म इति बहुव्रीहिं कृत्वा ततो भावप्रत्यये कृते, भावप्रत्ययस्य प्रकारीभूतप्रकृत्यर्थपरत्वात् बहुव्रीह्यर्थे विशेषणीभूतात्मपरामर्शकत्वेन *एष आत्मेदं सर्वं* इति प्रतिपादयति । *एष आत्मेदं सर्वं* इत्येव वक्तव्ये सामानाधिकरण्यामात्मात्मीयभावेनौपचारिकमिति शंकानिवारणाय बहुव्रीहिभावप्रत्यययोरुपादानम् । तथा सति बहुव्रीहिणैव मुख्यया वृत्यात्मात्मीयभावे लब्धे पुनर्भावप्रत्यय-

रूपप्रयत्नान्तरकरणं व्यर्थं स्यादिति सा शङ्का निराकृता भवति । तच्च सामानाधिकरण्यं रजतं शुक्तिरिवारोपितबाधाभिप्रायेणैवाभ्युपेयम् । तन्निर्धारणार्थमस्ति *तत्सत्यं* इति वाक्यम् । तत्र तच्छब्दः प्रकृतमात्मानं परामृशति । तस्यैव तात्पर्यविषयतयाऽस्मिन् सन्दर्भे प्राधान्यात् । स आत्मा इति वाक्ये तस्यैव परामर्शेन तदैकार्थ्यानुसाराच्च । ततश्च तच्छब्देनात्मानं परामृश्य तस्य विशिष्य सत्यता प्रतिपादनं, अनात्मनोः द्वैतप्रपंचस्यानृततामबोधयत् पूर्वपक्षिप्तं सामानाधिकरण्यं बाधायामेवेति व्यवस्थापयति । तस्मात् *तत्त्वमसीति* महावाक्यमपि स्वस्वारस्यानुसारेण यथाश्रुतं जीवब्रह्मणोरभेदार्थबोधकमेव साधु इति ।

तन्न समीचीनम् - अस्मिन् प्रकरणे पठितानां श्रुतीनां जगतः ब्रह्माभेदबोधनद्वारा मिथ्यात्वाप्रतिपादकत्वाभावात् । तथाहि - *सदेव सौम्येदमग्र आसीत्* इति वचने हे सौम्य इति कस्यचित्सम्बोधनम् । इदमग्रे इति एकं पदम् । अस्य अग्रं इदमग्रं । इदं अस्य जगतः, अग्रे आदिभागे, सदेव सच्छब्दवाच्यः श्रीमन्नारायण एव आसीत् इत्यर्थः । अस्मिन् वाक्ये *इदम्* इति किन्चिन्निरूपित सामानाधिकरण्येन अनिर्देशात् तदर्थस्य जगतः सत्यत्वमपि सेत्स्यति । नेह इदं सदिति सामानाधिकरण्यं अस्ति येन क्वचिन्मिथ्यात्वामपि भवेत् । अन्यथा अग्रे इत्यत्र विधेरध्याहार्यत्वापत्तेः अस्य अग्रं इंदमग्रं तस्मिन्निति समस्तपदग्रहणे तु नायं दोषः । शंकरभाष्येऽपि अस्य इति अश्रौतं पदं अध्याहृतं दृष्टव्यम् ।

ननु अस्मात् वाक्यात् कालादयः आविद्यकद्वैतविषयाः इति ज्ञायन्त तस्मात् न वास्तवाद्वैतविषयाः इति चेन्न । विपरीतमेव कुतो न स्यात् । अद्वैतस्य अतात्विकविषयत्वं द्वैतस्य

पारमार्थिकत्वं च स्यात् । *अग्रे जगतः प्रागुत्पत्तेः* इति शांकरभाष्ये उत्पन्नस्य जगतः मिथ्यात्वेऽपि तदुत्पत्तेः प्राग्विद्यमानस्य कालस्य पारमार्थिकत्वं अङ्गीकृतं स्यात् । कालस्य जगदन्तपातित्वाभावात् प्रागेव विद्यमानत्वादिति भावः । ननु इदं शब्देनोदितस्य विश्वस्य सद्ब्रह्माभेदेन सत्वमाभिधायार्थात् सद्व्यतिरेकेणाविद्यकनामरूपात्मकस्य द्वैतस्य मिथ्यात्वं प्रतिपाद्यते इति चेन्न । सद्व्यतिरेकेण नासीदिति तात्पर्ये च *सविशेषणौ हि विधिनिषेधौ विशेष्ये सति बाधे विशेषणमुप्संक्रामत* इति न्यायेन, यथा स्वर्गी ध्वस्त इत्यत्र विशिष्टध्वंसासम्भवे विशेषणीभूतस्वमात्रपरत्वम् । एवमेव इहापि विशिष्टासत्वासम्भवे विशेषणीभूतसद्व्यतिरेकेणासत्वे सदात्मकत्वमेव सम्भवतीति द्वैतस्य मिथ्यात्वाबोधकत्वात् ।

किंच *एकमेवाद्वितीयम्* इत्यत्र मिथ्यात्वबोधक शब्दः कः । न तावत् एकशब्दः । तस्य संख्याबहुत्वासहायकत्वप्राधान्यादिबोधकत्वेन लोके प्रयोगदर्शनात् । भवताऽपि -

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात् सजातीयः विजातीयशिलादितः ॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
ऐक्यावधारणाद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥

इति वदता स्वगतभेदनिषेधपरत्वेन व्याख्यातत्वात् न तेन पदेन मिथ्यात्वसिद्धिः । नापि अद्वितीयशब्देन मिथ्यात्वसिद्धिः । अत्र कर्मधारयसमासो वा बहुव्रीहिर्वा । आद्ये ब्रह्म न द्वितीयं चेत् तृतीयं वा प्रथमं वा स्यात् । अन्त्ये तु अन्यपदार्थप्राधान्यकात् बहुव्रीहेः वृत्तिघटकपदार्थप्रधानकत्वेन कर्मधारयस्य शीघ्रोपस्थितिजनकत्वेन तत्सम्भवे बहुव्रीहेरयोगात्

। अद्वितीयमित्यत्र द्वितीयं नास्तीत्यर्थकत्वे प्रसज्यप्रतिषेधे तु भगवत्विशेषणत्वाभावेन एकमेवेत्येतद्भगवत्परत्वम् अद्वितीयमित्येतज्जगदभावप्रतिपादकमिति वाक्यभेदप्रसंगात्, अतः पर्युदासार्थत्वं अङ्गीकरणीयम् । तथा च द्वितीयभिन्नं ब्रह्म इति बोधात् न जगतः मिथ्यात्वसिद्धिः । *आत्मा वा* , *इदमेक अग्रे आसीन्नान्यत्किञ्चनमितिषदिति* , वाक्यानुसारेण जगतः मिषत्वेनैव स्वतन्त्रप्रवृत्तिमत्वेन निषेधः न तु स्वरूपतया । छागो वा मन्त्रवर्णादिति न्यायादिति भावः । किं च नञ्शब्देन द्वितीयात्यन्ताभावोक्तौ अत्यन्ताभावस्य नित्यत्वात् सदा सत्वात् *अग्रे* इति विशिष्योक्तिः व्यर्थस्स्यादिति । नञा प्रागभावस्योक्तौ *चाग्रे* इति पदस्य सार्थकत्वेऽपि जगतः प्राग्भावप्रतियोगित्वेन मिथ्यात्वासिद्धेः । शांकरभाष्येऽपि *अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्वेष्यते नाश्वः पुरुषो वा* इत्युक्तत्वेन प्रकृतसमाने एव द्वितीयशब्दव्युत्पत्तेः, जगत् ब्रह्मवत् नास्ति, अपि तु तदधीनं वर्तते इति अर्थः इति ज्ञायते ।

एवशब्देनापि न जगतः मिथ्यात्वसिद्धिः भवति । तस्य एकशब्देन समभिव्यवहारे च ब्रह्मणः प्राधान्यार्थत्वं स्यात् । अद्वितीयशब्देन योगे तु तत्सदृशः द्वितीयो नास्तीति न मिथ्यात्वसिद्धिः भवति । तस्मादिदं वाक्यं कथमपि मिथ्यात्वबोधकं न भवति ।

यदीदं वाक्यं जगत्मिथ्यात्वपरं स्यात्, तर्हि -

कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा

। 10-129-4

तथाहि तद्व्याख्यानं - अग्रे अस्य, विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि, कामः सारभूतं, परमेश्वरस्य सिसृक्षाऽजायत इत्यर्थः । मनसः रेतः सारभूतं, प्राणिभिः मनसा क्रियमाणं, प्रथमं पूर्वकल्पोपार्जितं कर्म यत् तदप्यसीत् । एवं स्वेच्छयानादिकर्मादिवशात् सतः सत्यभूतस्य प्रपन्चस्य बन्धुं बन्धकं, निर्मातरं सर्वेश्वरं, कवयः अतिक्रान्तदर्शिनः अतीतवर्तमानानागताभिज्ञाः योगिनः, मनीषा मनीषया, बुध्या सुपां सुलुकिति तृतीयायाः लुक् । प्रतीष्य विचार्य, अन्येषामपि दृश्यत इति संहितायां दीर्घः । असति दीनरूपे, हृदि हृदये, निरविन्दन् अजानन् इति । तद्वाक्यव्याख्यानसमये सायणमाधवेन जगतः सत्यत्वाङ्गीकारात् इदानीं अस्य वाक्यस्य येन केनापि प्रकारेण मिथ्यात्वपरत्वाङ्गीकारे तद्विरोधापत्तेः ।

ननु अस्मिन् वाक्ये प्रतिपाद्यं सत्यत्वं व्यावहारिकमिति चेन्न । अतीतादिज्ञानिनः स्वहृदये तथा विचार्य ज्ञानवन्तः इत्युक्त्या तत्परत्वानुपपत्तेः । मिथ्यापदार्थस्य विचारानन्तरं सत्यत्वव्यवहारो वा ज्ञानं वा न भवति । मिथ्यैव रजतं प्रत्यभात्इति उत्तरकालीनव्यवहारात् ज्ञानाद्वा । तस्मादिदं वाक्यं कथमपि मिथ्यात्वबोधकं न संभवति ।

ननु जीवेनात्मनेति सामानाधिकरण्यात् तयोरभेदः सूचित इति चेन्न । नात्र जीवशब्दः संसारिपरः किन्तु विष्णुपरः । जीवपरत्वे प्रविष्टस्य पुनःप्रवेशानुपपत्तेः ।

विष्णुः जीव इति प्रोक्तः सततं प्राणधारणात् ।
स प्रविश्य शरीरं च स्थावर जंगमं तथा ॥
महाभूतानि च विभुस्त्रिवृत्करणपूर्वकम् ।
संसारिणं भ्रामयति सदैवान्यत्वलक्षणं ॥
तेनायं मोदते नित्यं वृक्षावस्थां गतोऽपि सन् । - तत्त्वनिर्णये ।

इति वचनात् जीवशब्दस्य विष्णुपरत्वात् । तदुक्तमनुव्याख्याने -

आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत् ।
स्वशब्दात् प्राणभृच्चैव नोक्त इत्येव वेदराट् ॥ इति ॥

नापि ऐतदात्म्यमिदं सर्वमिति वाक्यमपि मिथ्यात्वविषये प्रमाणम् । ऐतदात्म्यशब्देन जगतः सदभेदबोधकत्वे च जगतः सत्वमापतति । भावप्रत्ययश्च औपचारिकार्थनिराकारणायेत्युक्त्वा पुनः बाधायां सामानाधिकरण्यम् इति वचनम् व्याहतम् । तस्यापि अशुद्धसामानाधिकरण्याविशेषात् । आत्मात्मीयभावस्य बहुव्रीहिणैव वारणसंभवे भावप्रत्ययवैय्यर्थ्याविस्तारात् । अभेदबोधक स्वरूपशब्दघटितवृत्त्या सदनुयोगिकाभेदप्रतियोगि इति बोधात् आत्मात्मीयभावस्य बहुव्रीहिणालाभात् नित्या परमाणुरूपा इतिवत् ।

नापि *इदं सर्वं यदयमात्मा* इति वचनम् प्रमाणम् । ननु अत्र सर्वत्वेन यत्प्रतीतं तद् आत्मा आत्मान्यध्यस्तमिति मिथ्यात्वं प्रतिपाद्यतेति चेन्न । आत्माधीनत्वार्थेनैव विरोधपरिहारसंभ-

वात् । सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेदेति पूर्वेण स यथा दुन्दुभेरित्यादिना उत्तरेण च विरोधात् ।

यत्तु सामानाधिकरण्यात् तत्त्वमसीति वत् ऐक्यपरतयैव किं न स्यात् किमध्यस्तत्ववर्णनेन इति चेत् जडाजडयोः विरुद्धधर्मादिकरणत्वेनैक्ष्यासम्भवात् लक्षणया मिथ्यात्वपरत्वमिति तदपि न युक्तम् एकपदस्य लक्षणया प्रमाणाविरुद्धार्थपरत्वसम्भवे पदद्वयलक्षणया प्रमाणविरुद्धार्थमिथ्यात्वपरत्वाङ्गीकारायोगादित्युक्तत्वात् । सर्वशब्दस्य व्याप्त्या वा, आधारत्वेन वा, निमित्तत्वेन, सारूप्येण वा सामानाधिकरण्यस्योपपत्तौ किं पदद्वयलक्षणया । एतादृशरीत्या प्रयोगे *सर्वेषु भूतेष्वेतम्*, *राजा राष्ट्रं*, *ब्राह्मणो वै सर्वे देवता*, इत्यादिसम्प्रतिपन्नप्रयोगसद्भावात् न कोऽपि दोषः । एतेन अत्र सामानाधिकरण्यम्

रजतं शुक्तिरिवारोपितबाधाभिप्रायेणेति निरस्तम् । रजतं शुक्तिरिति क्वापि सामानाधिकरण्यस्य अनुभवाभावात् । ब्रह्मणि जगदारोपस्य मूलग्रन्थेषु निरस्तत्वात् । तस्मत् *तत्त्वमसि* इति वाक्यम् पूर्वोक्तरीत्या भेदपरमेवेति ज्ञेयम् ।

ननु *अतत्* इति पदच्छेदस्तु एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात् जीवब्रह्मैक्यस्याप्रसक्तत्वेन निषेधानुपपत्तेश्च अनुपपन्नः इति चेन्न - एकविज्ञानेन सर्वविज्ञानस्य सादृश्यादिप्रकारान्तरेणोपपादितत्वात् तादृशप्रतिज्ञाविरोधाभावात् । अप्रसक्तस्य निषेधायोगात्, इत्यस्य प्रमाणप्रसक्तस्य निषेधो वा प्रमाणाभासप्रसक्तस्य वा । नाद्यः प्रमाणप्रसक्तस्य निषेधायोगात् । तस्माद्द्वितीयपक्ष एव स्वीकर्तव्यः । परवाद्युदितानुमानाभासादिभिः प्रसक्तस्य, अथवा *अहं ब्रह्मास्मि* इत्यागमतात्पर्याभासात् प्र-

सक्तस्य वा निषेधात् न अप्रसक्तस्य निषेधः । त्वन्मतेऽपि तत्कथं स्वगतभेदस्य प्रसक्तिः । यथा शब्दोऽनित्य इत्यत्रानित्यघटदृष्टान्तं अनुसृत्य अनित्यमिति पदच्छेदः तथा अत्रापि भिन्नशकुनिसूत्रादिदृष्टान्तमनुसृत्यातदिति पदच्छेदः ।

ननु तस्य त्वं तत्त्वमिति समस्तपदम् इत्यङ्गीकारे असमासेनैव षष्ठ्यर्थलक्षणादिरहितेन उपपत्तौ षष्टीसमासस्यान्याय्यत्वात् । अन्यथा पूर्वमीमांसास्थितस्थपत्याधिकरणविरोधापत्तेः । तत्र हि संबन्धिलक्षणापत्त्या निषादस्य सङ्करजातिविशेषस्य स्थपतिरीश्वरस्त्रैवर्णिक इति षष्टीसमासमनादृत्य निषादाभिन्नस्यपतिरित्यर्थककर्मधारयसमास एव अभ्युपगत इति चेन्न - असमस्तपक्षेऽपि गरीयस्याः पदद्वय लक्षणाया अभावात् । समस्तपक्षे तु सम्बन्धस्यान्वय प्रकारतया लुप्तस्मृतषष्ठ्या वा शक्त्यैव बोधसम्भवात् लक्षणाया अभावाच्च । ननु समासे लुप्ता षष्टी संबन्धिनं नाभिधास्यति कुतः ? व्याघातात् । नहि लुप्ता षष्टी शक्नोति अभिधातुं । अविद्यमानत्वात् । एतेन षष्टी लोप एव अभिधास्यतीत्यपि निरस्तम् । लोपस्याभावात्मकत्वेन तस्याभिधायकत्वासंभवात् - इति चेन्मैवम् । प्रसक्तस्य अदर्शनं लोपः इत्युक्तत्वेन बुद्धौ प्रसक्तत्वेन प्रयोगेऽविद्यमानत्वेऽपि बुद्धौविद्यमानत्वादभिधानशक्तेरक्षतत्वात् । अन्यथा लुप्तेन क्विबादिना कर्तृत्वादिना अभिहितमिति केवलक्रियायाः तदन्तार्थत्वापत्तेः । प्रातिपदिकत्वानुपपत्तेश्च । अत एव लुप्तस्मृतेति उक्तम् । लोपस्य प्रयुक्तावाभावरूपत्वेऽपि प्रसक्तत्वाभावरूपत्वाभावान्नोक्तदोषः ।

स्थपत्यधिकरणस्य सति सामानाधिकरण्ये वैयधिकरण्यम-

न्यास्यम् इत्येवंपरत्वात् न विरोधः । अत्र हि कर्मधारयषष्टी समासयोरिह समासासमासयोर्विचार इति वैषम्याच्च ।

ननु एकस्याः एव जातेः सर्वव्यक्तिवृत्तित्वानभ्युपगमात् । अनयोः समं ब्राह्मण्यं इत्यपि अनेनैव व्याख्यातम् । ब्राह्मण्यस्य बहुत्वात् क्वचिदेकशब्दप्रयोगस्तु सादृश्याद्गौणः ।

यत्तु *निरञ्जनः परमं साम्यमुपैति* , *मुक्तः शिवसमो भवेत्* इत्यादिश्रुतिस्मृतिभिः जीवात्मनो ब्रह्मसादृश्यं मुक्तिदशायां प्रतिबन्धकनिवृत्तौ अभिव्यक्तं उत्पद्यमानं वा रूपान्तरम् ।

तस्मात् तत्पदस्य तस्मिन् तत्सदृशे गौणीवृत्तिरभ्युपगम्यताम् । इत्थं च त्वम् तत् ब्रह्मसदृशोऽस्तीति महावाक्यार्थो भवतु इति चेत् मैवम् । परमसाम्यस्यात्यन्तिकाभेदार्थकत्वाभ्युपगमात् । भेदे प्रमाणाभावात् । प्रत्युत *नान्योटोऽस्ति दृष्टा नान्योऽतोऽस्ति श्रोता, स एव इष्ट प्रविष्टः , नात्र काचन भिदाऽस्ति , योऽन्यां देवतामुपास्ते न स वेद* । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति । इत्यादिश्रुतिस्मृतिसहस्रस्य भेदप्रतिषेधकत्वाच्च साम्यस्य भेदघटितसादृश्यार्थः सर्वथाऽनुचित एव । अत एव ब्रह्मगीतासु -

सर्वाकारतया साम्यं परमाद्वैतलक्षणम् ।
अतः साम्यं तयोः साक्षात् ऐक्यमेव न चेतरत् । इति

न च साम्यपदस्यैक्ष्ये प्रयोगाभावात् साम्यं सादृश्यमेव स्यादिति वाच्यम् ज्ञानसमकालमुक्तः, समसमयवर्ती, समानोदये शयितः, समानं वृक्षं परिषिष्वजाते, समानग्रामः, अनयोः

समाजातिः, समानं कुलं, इत्यादि लौकिकवैदिकोदाहरणव्यवहारेषु समशब्दस्य, तत्पर्यायस्य समानशब्दस्य चैक्ष्य एव प्रयोगदर्शनात् साम्यमिहैक्यमेव मन्तव्यम् न सादृश्यमिति तन्न युक्तम् । तथाहि -

यदुक्तं समपदस्य ऐक्ये प्रयोगदर्शनादिति तदसत् । कोशव्याकरणादिषु कुत्रापि समपदस्य एकपर्यायत्वेन अनुशासनाभावात् । समान पदस्य एकपर्यायत्वेऽपि प्रकृतानुपयोगात् तदुदाहरणं असङ्गतम् । न च समपर्यायः समानशब्दः एकपर्याय इति समपदं एकार्थकं किं न स्यादिति वाच्यम् । चक्षुःपदपर्यायस्य अक्षशब्दस्य चक्रपर्यायत्वस्यापि सद्भावात् चक्रं प्रमाणं इति प्रयोगापत्तेः । ज्ञानसमकालमुक्तः समसमयवर्ती इत्यादिप्रयोगस्तु सादृश्यसमानाधिकृतैकत्वार्थे लाक्षणिक न दोषः । ज्ञानस्यौन्नत्यज्ञापनादि तत्र प्रयोजनम् । अन्यथा एको घटः इत्यर्थे समो घटः प्रयोगस्य साधुत्वापत्तेः । अविविशेषात् । अतः साम्यशब्दस्य ऐक्यार्थकत्ववर्णनमयुक्तमेव । घटपटयोः समा जातिः इत्यादिस्थलेषु साम्यशब्दस्य ऐक्यवाचित्वं नैय्यायिककुसृष्टिमूलमिति परमं साम्यमुपैति इत्यत्र तावत् न ऐक्यवाचि भवति । तथाहि - *यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति* इति हि वाक्यम् । यदा यस्मिन् काले, पश्यः जीवः ब्रह्मयोनिं हिरण्यगर्भस्य कारणं कर्तारं जगतः कर्तारं, ईशं सर्वनियामकं, पुरुषं नारायणं पश्यते । पश्यति । तदा विद्वान् असौ ज्ञानी, पुण्यपापे विधूय अनिष्टपुण्यानि, सर्वाणि पापानि परित्यज्य, निरञ्जनः दोषरहितः सन् परमं साम्यं नारायणेन अत्यन्तसाम्यं,

उपैति प्राप्नोति इति श्रुत्यर्थः, अत्र तु जीवब्रह्मणोः कर्तृकर्मभावस्य विवक्षितत्त्वात् तयोः भेदस्य आवश्यकत्वात् । *कर्तारं ब्रह्मयोनिम्* इत्यादि विशेषणैः ब्रह्मणो जीवात् भेदः तावत् ज्ञापितो भवति । जीववृत्तिधर्मविरुद्धधर्मत्वात् ब्रह्मणः किन्च पुण्यपापे विधूयेति पापादिपरित्यागपूर्वकं जीवस्य मुक्तिश्रवणेन पापादिसंबंधसद्भावात् न ब्रह्म साम्यं अभिव्यज्यते इति अवश्यमङ्गीकार्यत्वात् । पापादिसंबन्धरहितशुद्धब्रह्मणः स्फुटो भेदः । तस्मात् परमंसाम्यमिति न तयोरभेदसाधकं भवति ।

ननु साम्यस्य भेदघटितत्वेऽपि *परमं साम्यं* इति वचनं भेदासमानाधिकरणाभेदमेव प्रतिपादयति इति चेत् मैवम् । परमशब्दस्य पूर्वापेक्षयोत्कर्षपरत्वेनाप्युपपत्या ऐक्यपरत्वज्ञापकत्वायोगात् । यथा *परमः धार्मिकः* इत्युक्तेः अन्यपुरुषापेक्षया अस्य पुरुषस्य धर्माद्यनुष्ठानं उत्तममिति च अत्रापि साम्ये अन्वितं परमत्वं भेदघटितसादृश्यं एव ज्ञापयति । एवमेव निरञ्जनेति पदम् साम्यप्रयोजकतावच्छेदकं धर्मं सूचयति । स च धर्मः अञ्जनशब्दवाच्यदोषाभावत्वेनैव । अन्जनाख्यदोषहीन इति सुधोक्तेः । परमं साम्यं नाम निर्दुःखपूर्णानन्दत्वादिना ब्रह्मसाम्यं इत्यर्थः । ननु साम्यस्य पूर्वमेव विद्यमानत्वात् तत्कथं तत्प्राप्तिरिति चेन्न - पुंस्त्वादिवत्वस्य सतोऽभिव्यक्त्योगादिति सूत्रोक्तदिशा अप्राप्तभोगप्राप्त्यभिप्रायेण इति भावः । *विद्वान्* इति पदमपि भेदं ज्ञापयति । तत्कथमिति चेत् श्रुणु । ज्ञानप्राप्त्यनन्तरमेव भोगप्राप्तिः न तु अज्ञानदशायामिति सूचनेन, विद्यमानस्यैव साम्यस्य अभिव्यक्तिरिति सूचनात् विद्वानिति पदम् ज्ञान्यज्ञानिनोः भेदं ज्ञापयति । अतः एव उत्तरत्र ज्ञानिप्रवृत्तिप्रकारं च वदति श्रुतिः ।

भेदे प्रमाणाभावादिति यदुक्तं तन्न युक्तं । *द्वासुपर्णा ०००* *तयोरन्य !* इति, *नित्यो नित्यानां* इति, *भिन्नोऽस्थिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः* इत्यादि बहुप्रमाणानां आकरे उदाहृतत्वात् । नान्योऽतोऽस्ति दृष्टा इति श्रुतेः भगवतः सर्वकर्तृत्वाभिप्रायत्वात् । स एव इहेति श्रुतेः भगवतः सर्वान्तर्यामित्वतात्पर्यकत्वात् । नात्र काचन भिदाऽस्ति इति श्रुतेः भगवति स्वगतभेदनिरासपरत्वात् योऽन्यामिति श्रुतेः रुद्राद्यन्यदेवतानां अमुख्यताप्रतिपादनस्य तात्पर्यात् । भेदमसन्तं इत्यपि स्वगतभेदनिषेधपरत्वात् । ब्रह्मगीता तु न प्रमाणतया परिगृहीतेति यत्किञ्चिदेतत् ।

तस्मात् अस्मिन् वाक्ये विद्यमानस्य साम्यशब्दस्य अभेदपरत्वं कथमपि न संगच्छते । न च *यथा नद्यः स्यन्दमानाः समुद्रेऽस्तंगच्छन्ति नामरूपे विहाय* इति प्रागुपन्यस्तदृष्टान्तानुसारात् परमं साम्यमित्यस्य अद्वैतपरत्वमेवेति वाच्यम् । अत्र अस्तशब्दस्य अदर्शनार्थकत्वात् । समुद्रजलान्तप्रविष्टनदीजलानां परस्परमेलनेन क्षीरमिलितनीरवत् अदर्शनमात्रसंभवे सर्वथा नाशस्यायोगात् । नामरूपे अविहाय इति पदच्छेदः च शक्यः अन्यथा समुद्रपत्नीगङ्गादिदेवीनामप्यभावप्रसङ्गात् । एवमेव *नामरूपाद्विमुक्तः* इत्यत्रापि विप्रियः इत्यस्य अप्रियः इत्यर्थः इतिवत्, *विर्निषेधे पृथग्भावे* इति वचनात् अमुक्त इत्येवार्थः । अन्यथा *यत्र ब्रह्मा पवमानः* इति यत्र पूर्वे साध्याः सन्ति देवः - पुरुष सूक्त । इत्यादिवचनविरोधः स्यात् । अथवा अल्पजीवैरज्ञकनामरूपत्वान्नामरूपे विहाय इति युक्तम् । अस्मिन् विषये पुराणकथाऽपि वर्तते । अस्य वाक्यस्य अभेद-

परत्वे तु *परात् परमुपैति* इत्यनेन विरोधापत्तेः । प्रवेशस्य भेदसापेक्षत्वात् ।

ननु *निर्दोषं हि समं ब्रह्म* ( गी - 5 - 19 ), *पण्डिताः समदर्शिनः* इत्यादि गीतावचनेषु समं=सदृशं ब्रह्म, सदृशदर्शिनः इत्यर्थो न कथमपि सङ्गततया अभ्युपेयते विद्वद्भिः । न च ब्रह्मणः केनचित् कथंचित् सादृश्यमस्ति । न तस्य प्रतिमा अस्ति इत्यादिना तत्प्रतिमायाः सादृश्यस्य प्रतिषेधात् । अतः परमं साम्यं इत्यत्रापि सर्वात्मनाऽखण्डैकरसाद्वैतपूर्णत्वलक्षणमैक्यमेव साम्यमिति सिद्धम् इति चेन्मैवम् । श्वपाकादिषु साम्यस्य बाधितत्वेन समविषयकदर्शनस्यैव पाण्डित्यप्रयोजकत्वेन विधानात् समत्वविशिष्टव्यक्तेरज्ञाने विधेर्वैय्यर्थ्यं स्यादिति उत्तरश्लोके समशब्दवाच्यस्य परब्रह्मणः निर्देशः कृत इति जीवब्रह्मैक्यस्येहायोगात् । क्वापि समशब्दस्य ऐक्यार्थकत्वादर्शानात् । सादृश्यार्थकत्वे बाधकाभावात् अविद्यादिभिः अनादित्वादिना असद्विलक्षणत्वादिना सादृश्यस्य ब्रह्मणोऽपि अवश्यं अङ्गीकार्यत्वात् ।

न तस्य प्रतिमा अस्तीत्यत्र तु भगवतः अन्यजीवाद्यपेक्षया अतिमहत्त्वं वा अतिविलक्षणत्वं वा अपरिमिताधिकगुणवत्वं विवक्षितमिति न विरोधः ।

अन्तर्यामितया सर्वजीवेषु भगवतः सद्भावाङ्गीकारात् तद्रूपाणां विशेषबलात् सादृश्यस्य सङ्गतत्वात् । अन्यथा *समं ब्रह्म* इत्यस्य वैयर्थ्यापत्तेः । न हि अभेदबोधोत्तरं ब्रह्मणः समत्वस्य वा समस्य ब्रह्मत्वस्य वा विधानं प्रयोजनवत् । परमत्वविशेष-

णवैय्यर्थ्याच्च ।नच सौषिप्तिकसदैक्यव्यावृत्त्यर्थं तदिति वाच्यम् । तस्य त्वन्मते ब्रह्मैक्यावश्यंभावात् अव्यावर्त्यत्वात् व्यावर्त्यत्वेऽपि परमत्वविषेषणेन तदलाभात् प्रत्युत सर्वाकारतया परमाद्वैतं हि अनेन प्राप्स्यते ।तस्मात् साम्यं नैक्यलक्षणमिति सिद्धम् ।

यच्च प्रकारान्तरभिधानं अथवा समशब्दस्य सर्वपर्यायत्वोपगमात् साम्यमिह सर्वत्वलक्षणमभ्युपेयताम् । *यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति* (बृ-1-1-10) इत्यादिश्रुतेः । तत्रत्यं सर्वात्मभाववचनं हि विज्ञास्य ब्रह्मभावं विहाय न शक्यं सार्थकयितुम् । उक्तं च गीतायां मद्भावं सोधिगच्छति (गी-14-19) सयोगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति (गी-5-24) इति तदसत् । श्वादौ सर्वदर्शनस्य मूर्खलक्षणत्वात् । सर्वकार्यस्य तत्र प्रत्यक्ष बाधितत्वात् । परमशब्दवैय्यर्थ्यानिस्तारात् ।ब्रह्मेतरमिथ्याभूतसर्वत्वप्राप्तेस्त्वनिष्टत्वात् ।बाधायां सामानाधिकरण्यं तु सत्यांभ्रान्तौ निर्वाहकं न तु भवतीति विधेयम् ।न हि कश्चन स्वस्थात्मा शुक्तिरेवेदं रजतं भवेदिति विधत्ते ।किन्तु इयं शुक्तिः न रजतं इत्येव किल प्रतिपाद्यते ।प्रतिपादयति वा ।तर्हि सर्वश्रुतीनां का गतिः ? इति चेत् "अस्मिन् ग्रामे स एव सर्वं" इतिवदुपपत्तेः अधिकारविशेषं प्राप्नोतीत्यर्थः ।सर्वात्मवचनमपि सर्वत्र अन्तर्यामितया स्थित्यभिप्रायेण सार्थकमिति न दोषः । मद्भावप्राप्तिरपि "मम साधर्म्यमागताः", "अहं त्वा मोक्षयिष्यामि", "सर्वस्य चाहं हृदि सन्निविष्टः", "मामप्राप्यैव ततो यान्त्यधमां गतिं", इति वाक्यान्तरातिरोधितया ब्रह्मवत् मुक्तत्वप्राप्तिरूपैवोररीकर्तव्या ।

न च सर्वत्वरूपे साम्ये आपेक्षितलक्षणं सङ्कोचं व्यावर्तयितुं निरतिशयत्वन्च विज्ञापयितुं परममिति विशेषणमिति वाच्यम् । असद्विलक्षणत्वान्मुक्तस्य असतः सर्वान्तर्भावव्यावृत्तये आपेक्षितलक्षण सङ्कोचस्यापरिहार्यत्वात् । जगतः सद्रूपब्रह्मविलक्षणत्वेन तद्भिन्नस्य मुक्तस्य जगदात्मकसर्वत्वायोगात् । सत्यभूतसामानाधिकरण्यस्य बाधायां सामानाधिकरण्यापेक्षया अतिशयत्वेन निरतिशयत्वविलक्षणस्य त्वद्गलप्रपेषित्वात् । न ह्यसर्वः सर्वोः भवति । विकाराद्यापत्तेः । नापि सर्वः । ब्रह्मणोमिथ्यात्वापत्तेः । ज्ञानलभ्यत्वानुपपत्तेश्च । अथः पूर्णानन्दत्व, दुःखादिराहित्याद्यभिव्यङ्ग्यसादृश्यप्राप्तिरेवात्र परमसाम्यमिति । सामान्यसादृश्यस्यामुक्तेऽपि भावात्परमेति सार्थकम् । अतः तत्सदृशस्त्वमसीति महावाक्यार्थवर्णनं श्रीमदाचार्यकृतं एव साधु अन्यश्रुतिस्मृतिप्रत्यक्षानुगुणं सङ्गतं चेति सुधियो विभावयन्तु ॥

किन्च तत्पदं लुप्तषष्टीकं । तेन तस्य सर्वज्ञस्य परब्रह्मणः त्वमसि । तत्संबन्धी असि तदधीनोऽसीत्यर्थः । न च वैय्यधिकरण्यं तु न मुख्यवृत्त्या भेदं प्रतिपादयति किन्तु लक्षणया जन्यजनकभाव नियन्तृनियम्यादिभावमेव प्रतिपादयति । स च भेदपूर्वक इति मत्वा तदन्यथानुपपत्त्या तयोर्भेदमाक्षिपति । तथा च भेदस्य आर्थिकत्वेनामुख्यत्वात्कल्पितत्वं, अभेदस्य शाब्दत्वेन मुख्यत्वात् तस्यैव बलिष्ठत्वेन पारमार्थिकत्वमिति वाच्यम् । विभक्तिलोपाङ्गीकारे षष्ठ्यर्थ जन्यजनकभावादि संबन्धस्य शाब्दत्वात् । लाक्षणिकार्थस्वीकाराभावात् । भेदस्य आर्थिकत्वं तु नानिष्टम् । न हि कस्यापि वाक्यस्य भेदबो-

धकत्वे एव प्रामाण्यं इति अभ्युपगच्छामः । येनोक्तापत्तिः घटेत ॥ नापि अभेदबोधने शाब्दार्थस्वीकारो भवतीति बाधितोऽपि स स्वीकर्तव्य इति । तस्य त्वं इति ( तत्संबन्धी त्वं ) इति व्युत्पत्पत्तिस्वीकारे को दोषः? इति वर्ण्यताम्। भेदबोधकत्वं तस्य वाक्यस्य साक्षान्नस्यातदिति चेन्माभूत्। उक्तासंबन्धस्यान्यथानुपपत्त्या भेदस्याक्षिप्तार्थत्वेऽपि मुख्यतात्पर्यविषयत्वापरिहारात् । आर्थिकत्वेन अमुख्यत्वे कल्पितत्वाभ्युपगतिः स्वकपोल कल्पितैव । ज्ञाननिवर्त्यत्वान्यथानुपपत्त्या सिद्धस्य आर्थिकस्य हि मिथ्यात्वस्य जिज्ञासासूत्रार्थत्वं त्वदभिमतम् ।

किन्च जहदजहल्लक्षणास्वीकारात् मुख्यार्थपरित्यागेन अमुख्यार्थस्याभेदस्य त्वया स्वीकारात् उक्तदोषाणां त्वय्येवापातात् अपहसनीयमेतत् । तस्मात् यत्प्रत्यक्षविरोधपरिहाराय विरुद्धाकारत्यागेन शुद्धस्वरूपार्थता लक्षणया त्वया स्वीक्रियते तत्प्रत्यक्षाविरोधायैव अभेद तात्पर्यकता जगन्मिथ्यात्वादिकं अपि त्याज्यमिति अलं पल्लवितेन । एतत्सर्वं न्यायामृतादौ सम्यङ्निरूपितमेवेति विस्तरः तत्रैव द्रष्टव्यः ।

# केनचिदद्वैतिना[1] कृताः आक्षेपाः तेषां समाधानं च

अत्र केचित् *आत्मातिरिक्तस्य सर्वस्यापि मिथ्यात्वेन हेयत्वात् अद्वितीयात्मविषयक ज्ञानमेवाशास्यमिति रहस्यम् । ननु प्रत्यक्षसिद्धद्वैतप्रतिपादक द्वासुपर्णा सयुजा सखाय इत्यादिश्रुतिप्रामाण्यात् द्वैतमेव परमार्थः इति चेन्न - स एष नेति नेत्यात्मा, नेहनानास्ति किञ्चन, तत्त्वमसि त्वं तदसि, मायामात्रमिदं द्वैतमद्वैतं परमार्थतः, इत्यादि श्रुतिनाम्, अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिवेदना । आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा इत्यादिस्मृतीनां च कण्ठतस्त्वभेदं जल्पन्तीनां व्याकोपप्रसंगात् । न च द्वैतश्रुतीनामानर्थ्यक्यमिति वाच्यम् । व्यवहारदशायां तासां चरितार्थत्वात् । अपक्वकषायविषयक-सुगुणोपासनायाम् अन्तःकरणशुद्धिसंपादिकायां, भेदस्यापरमार्थस्याऽङ्गीकर्तव्यत्वात् । न च प्रबलद्वैतश्रुत्यनुगुण्याय अद्वैतश्रुतीनामुपचारार्थत्वकल्पना, अद्वैतश्रुतीनमपूर्वार्थत्वेन प्रत्यक्षप्रमाणप्रतिपन्नार्थबोधक द्वैतश्रुत्यपेक्षया प्राबल्यस्योक्तत्वात् । अपूर्वार्थकल्पनायाः वैयर्थ्यमूलकत्वस्य शास्त्रज्ञसमयसिद्धतया द्वैतश्रुतीनामुक्तरीत्या वैयर्थ्याभावात् । न चैवं प्रत्यक्षसिद्धत्वेन द्वैतस्यापलपितुमशक्यतया परमार्थदशायामपि द्वैतस्यैव प्राबल्यमिति वाच्यम् । अविदितार्थवेदकत्वरूपश्रुतिधर्माभावेन द्वैतश्रुतीनामनुवादकत्वे पर्यवसानात् । अतः एवानुभव-*

---

[1]पञ्चदशी भूमिकायां, महेश्वरानन्दो मण्डलेश्वरः, (सन्न्यासाश्रम्, विलेपार्ले पश्चिम् मुंबइ)

*सिद्धार्थानुवादकत्वेन अग्निः हिमस्य भेषजम् इत्यादिवाक्यानां नापूर्वार्थत्वमित्यभिहितमाकरे । तस्मात्प्रत्यक्षादिभिरनवगम्य-मानत्वेनाज्ञातं दुःखासंवलितमेवाद्वैतं श्रुतयः प्रतिपादयन्ति । अज्ञातवस्तुतत्वनिरूपणस्य श्रुतिधर्मत्वादिति गृहाण । एवं वेद-लोकसिद्धार्थकानुवादक द्वैतश्रुतीनां कथं प्रामाण्यं घटतामित्य-नुसन्धेयमायुष्मतैव भवति । द्वैतश्रुतयस्तु अपक्वकषायविषया इत्यवोचाम । तस्मान्निरवकाशिभिः अद्वैतश्रुतिभिः द्वैतश्रुतीनां परमार्थदशायां बाध एव न्याय इति फलितम् । ततश्चोपा-धिकत्वेनातात्विकस्सर्वोऽपि द्वैतप्रपञ्चः, सत्यं परमद्वितीयम-खण्डैकरत्वं ब्रह्म इति सिद्धम्* । इति ।

तन्न युक्तम् । आत्मातिरिक्तस्य सर्वस्यापि त्वद्रीत्या मि-थ्यात्वे, अद्वैतबोधिकानां श्रुतीनामपि ब्रह्मस्वरूपातिरिक्तत्वात् तासामपि मिथ्यात्वाऽविशेषात् हेयत्वापत्तेः । न हि लोके हेयोक्तं केनापि गृह्यते । नेहनानास्ति किंचनेति श्रुतिः अद्वैतं जल्पतीति । तन्न । अस्य वाक्यस्य न इह, नाना, आस्ति, किञ्चन इति पदच्छेदः । अस्मिन् वाक्ये न केनापि शब्देन अद्वैतं गम्यते । न च इह शब्दार्थे ब्रह्मणि, प्रतिपन्नोपाधौ नाना किञ्चनशाब्दितभेदविशिष्टप्रपञ्चमात्रस्य, नास्तीति निषे-धावगमात्, ब्रह्मव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वे परिशेषात् अद्वैतमेव बोधयति इति वाच्यम् । अत्र विद्यमाननानाशब्द-स्य, *द्वयेकयोर्द्विवचनैक्कचने* इत्यत्र इव भावप्रधानत्वात् ना-नात्वमर्थः, तस्मादिदं वाक्यं स्वगतभेदनिषेधं बोधयति न तु जगन्निषेधम् । ननु इदं वाक्यं तावत् निषेधं बोधयति । न तु ब्रह्मगतभेदनिषेधं । तथात्वे श्रुतेः संकोचापत्तेः । अतः सर्वकार्यकारणजगन्निषेधपरमेव ज्ञातव्यमिति चेन्न । सर्वपदा-

र्थनिषेधकत्वे च *यदेवेह तदमुत्र, यदमुत्र तदनु इह* इति पूर्ववाक्यस्थानां इदं चादश्चेति शब्दानां वैयर्थ्यापत्तेः । पूर्ववाक्यानुसारात् ब्रह्मगतभेदनिषेध एव वाक्यार्थः इति यावत् ।

ननु यदि नाना शब्दः भेदार्थश्चेत् प्रतियोगिविशेषानुपादानात् भेदमात्रप्रतिभानात् भेदमात्रनिषेधकपरम् इदं वाक्यं भवति इति अस्मन्मनोरथसिद्धिरिति चेन्न अस्मिन् वाक्ये इदं शब्दस्यैव प्रतियोगिविशेषोपस्थापकत्वात् । ननु सप्तम्यन्तेदंशब्दस्य अधिकरणपरत्वात् न तस्य प्रतियोग्युपस्थापकत्वमिति चेन्न, *अस्मिन् ग्रामे न विरोधः* , इत्यादिवत्, सप्तम्यन्तस्यापि प्रतियोग्युपस्थापकत्वोपपत्तेः । इमौ स्निग्धो इत्यत्र च एकाधिकरणैकस्नेहः प्रतीयते न तु इदंशब्दनिर्दिष्टपुरुषद्वयभिन्नपुरुषप्रतियोगिकः । अस्मिन् ग्रामे न विरोध इत्यत्रापि एतद्ग्रामाधिकरणैतद्ग्रामस्थपुरुषप्रतियोगिक एव भेदः निषिध्यते तद्वत् अत्रापि इहशब्दवाच्यस्य ब्रह्मण एव प्रतियोगित्वं ज्ञायतेति ब्रह्मप्रतियोगिकभेदनिषेदपरत्वं वर्तते अस्य वाक्यस्य इति न अद्वैतपरत्वमिति ज्ञेयम् । विस्तरस्तु आकरग्रन्थेषु द्रष्टव्यः । तत्त्वमसि वाक्यार्थस्तु पूर्वमेव उपपादितः ।

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतं अद्वैतं परमार्थतः ।
विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ इति

वाक्यमपि न अद्वैतपरम् भवति । तथाहि अस्मिन् वाक्ये विद्यमानप्रपञ्चशब्दस्य न विश्ववाचित्वं अपि तु भेदपञ्चकवाचि-

त्वम् । पञ्च परिमाणस्येति पञ्च । *पञ्चदशतो वर्गे वा* इति वाशब्देन पञ्चशब्दस्यापि निपातनात् साधु । प्रकृष्टः पञ्चः प्रपञ्चः । प्रकृष्टता च मोक्षांगज्ञानतया भवति । सा च भेदसंबन्धिनः एव पञ्चकस्योपपन्ना । तदुक्तमनुव्याख्याने *प्रपञ्चो भेदपञ्चकः* । इति । इदं च वाक्य प्रसङ्गरूपम् । यदि पर्वतः वह्न्यभाववान् तर्हि धूमाभाववान् स्यादितिवत् । एवं च यदि भेदपञ्चकः विद्येत उत्पद्येत तर्हि निवर्तेत अत्र संशयः नास्ति । न निवर्तते तस्मात् अयं भेदः अनादिनित्य इति । अत्र विद्धातोः उत्पत्त्यर्थकत्वे व्याप्त्युपपत्तिः भवति । सत्ताकर्थत्वे तु मम मते नित्येषु गगनादिषु व्यभिचारः । तव मते च ब्रह्मणि इति उत्पत्त्यर्थत्वमेवाङ्गीकरणीयम् । *विदोत्पत्तौ* इति धातुपाठश्च वर्तते ।

जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥
मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्योऽनादिश्च सादिश्चेन्नाशमाप्नुयात् ।
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ।

इति श्रुत्यन्तरसंवादोऽपि वर्तते ।

अत्र च विद्यमानः मायाशब्दः तावत् भगवत्प्रज्ञा वाचको भवति । *मायेत्युक्ता प्रकृष्टत्वात्प्रकृष्टं हि मयाऽभिधम् । विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते ।* इति प्रमाणात् इति भावः । मायैव मानत्राणकर्त्री यस्य तन्मायामात्रम् । नारायणेन ज्ञाततत्वात् रक्षिततत्वाच्च । न द्वैतं भ्रान्तिकल्पितं भवति इत्यर्थः ।

*माङ् माने* । *त्रैङ् फालने* इति धातुद्वयाभ्यां मूलविभुजादित्वात् कः । गणपाठे पदाभावेऽपि घनर्थे कविधानमिति रूपस्य सिद्धिः भवति । द्वैतस्य ईश्वरेण ज्ञातत्वात् रक्षितत्त्वाच्च कथं तत् मिथ्याभवितुमर्हति । न हि कोऽपि ऐंद्रजालकर्ता पुरुषः स्वेन सृष्टस्य पदार्थस्य रक्षणार्थं प्रवृत्तः भवति । एवमेवेश्वरस्य अविद्यमानप्रपञ्च दर्शने च भ्रान्तित्वापत्तेः । परमार्थापेक्षया ह्यद्वैतं सर्वस्मादुत्तमोऽर्थः स एक एवेत्यर्थः इति *अद्वैतं परमार्थतः* इत्यर्थस्य अर्थ उच्यते । अत्र विद्यमानाद्वैतशब्दः भावप्रधानः अद्वितीयत्वबोधकः भवति । *परमार्थतः* इत्यत्र पञ्चमीतावत् ल्यब्लोपनिमित्ता ।

विकल्पो यदि केनचिद् ज्ञानादिना कल्पितः स्यात् तदा निवर्तेत बाध्येत । न च बाध्यते तस्मात् अयं भेदः सत्यः । अयं वादः गुरूपदेशात् ज्ञातः भवति । यदा गुरूपदेशात् ज्ञानं समुत्पन्नं तदा द्वैतं मिथ्याज्ञानं न विद्यते न भवति इत्यर्थः । अथवा उपदेशादयं वादोऽज्ञाते एव द्वैतं न विद्यते । अज्ञानिनां पक्षे एव द्वैतं न विद्यत इत्यर्थः ।

ननु अस्य तर्कपरत्वमङ्गीकृत्य व्याख्यानापेक्षया वस्तुकथनपरतया व्याख्यायताम् । तदा जगन्मिथ्यात्वं लभ्यते इति चेन्न । यदीदं वाक्यं स्वरूपकथनपरंस्यात् तदा लिङ् प्रत्ययः तथा यदिशब्दौ च न युज्यते । विद्यतेत्यस्य चोत्पत्त्यर्थानङ्गीकारे यद्यदस्ति तत्तन्निवर्तत इति व्याप्त्याभावात् निवर्ततेति न युज्यते । पैङ्गीश्रुतिविरोधश्च भवति ।

° ° ° सादिश्चेन्नाशमाप्नुयात् ।

न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः ।
कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते ।
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ।
मतं हि ज्ञानिनमेतन्मितं त्रातं च विष्णुना ।
तस्मात्सत्यमिति प्रोक्तं परमो हरिरेव तु ।इति

*अथ ये चान्ये मिथ्यातर्कैः दृष्टान्तैः कुहकेन्द्रजालैः वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत् प्राकाश्या ह्येते तस्कराः अस्वर्ग्याः* इति मैत्रीयीशाखायं । ये चान्ये प्रागुक्तेभ्यः कापालिकादिभ्यो मिथ्यातर्कैः प्रपञ्चमिथ्यात्वसाधकैर्दृश्यत्वादिहेतुभिः, कुहकेन्द्रजालैः दृष्टान्तैः कुहकं छद्मना प्रदर्शितं, ये वैदिकेषु परिस्थातुं इच्छन्ति वेदभाष्यादिरचनेन वैदिकं स्थानं इच्छन्ति । तैः सह तेषां न संवसेत् सहवासं न कुर्यात् । एते हि प्रकाश्याः प्रकाशे भवाः, तस्कराः चोराः, अस्वर्ग्याः परमार्थप्रतिबन्धकाः इति प्रपञ्चमिथ्यात्ववादिनां निन्दनात् नेदं वाक्यम् मिथ्यात्वपरम् भवति ।विस्तरस्तु मूले ।तस्मात् कथं इमा श्रुतयः कण्ठतः अभेदं जल्पन्ति । *अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।अव्यक्तनिधनान्येव तत्र का परिवेदना* इति गीतावचनमपि न अद्वैतपरम् भवति । इदं वाक्यम् च भूतानां मध्यकाले व्यक्तत्वं, आदिकालेऽन्तकाले च अव्यक्तत्वं गमयति । न तावन्मात्रेण मिथ्यात्वम् । तथात्वे च ग्रहे प्रातःकाले देवदत्तो नास्ति । मध्यकाले वर्तते, सायं काले नास्तीत्येतावता तस्यापि मिथ्यात्वसिद्धिः स्यात् । *इदानीं* नास्ति गृहे देवदत्त *इत्येव प्रयोगः न तु सदा नास्तीति ।ननु देवदत्तस्य मया मिथ्यात्वाऽङ्गीकारात् इष्टमेवेति चेन्न ।तस्यैव विप्रतिपन्नत्वात् ।एतेन* आदावन्ते च यन्नास्ति वर्तमानेऽपि

तत्तथेति वचनमपि परास्तम् ।

सगुणद्वैतोपासनाया अन्तकरणशुद्धिसम्पादकत्वे च तेन च भेदस्य सुदृढत्वात् तत्कथं तदनन्तरमद्वैतोपासना कर्तुं अर्हति । अपूर्वता तु पूर्वमेव व्यवस्थापिता । भेदवाक्यानां अनुवादकत्वे तु प्रमाणसिद्धस्यानुवादकत्वं वा असिद्धस्य वा । नाद्यः तस्य पुनः निराकरणे पूर्वोक्त प्रमाणानां व्याकोपापत्तेः । न द्वितीयः अनुवादकत्वायोगात् । सिद्धस्यैवानुवाद इति नियमः । ननु निराकरणार्थं अनुवादः इति चेन्न परस्परश्रुतीनां विरुद्धार्थत्वापत्तेः । *गतिसामान्यात्* इति न्यायविरोधश्च स्यात् । तस्मात् सर्वेषां वेदानां भेदबोधनद्वारा श्रीहरेः सर्वोत्तमत्वबोधकत्वेनैव सार्थक्यम् बोध्यम् ।

ननु अज्ञातवस्तुतत्त्वनिरूपणस्य श्रुतिधर्मत्वात् श्रुतीनां प्रत्यक्षादिसिद्धभेदबोधकत्वं कथमिति चेन्न । अज्ञाततत्त्वनिरूपणं नाम किं सर्वथा अज्ञातस्यैव निरूपणम् अथवा सामान्यतः ज्ञातस्य, विशेषतः अज्ञातस्य निरूपणम् । नाद्यः सर्वथा अज्ञातस्य पुनः निरूपणे व्याघातापत्तेः । न हि शशविषाणं ज्ञातुं प्रयत्नः केनापि क्रियते । द्वितीये इष्टापत्तेः । सामन्यस्य सर्वोत्तमत्वादिगुणविशिष्टतया ज्ञातस्य नारायणस्य विशेषतः ज्ञातुं तावत् अस्माभिः जिज्ञासा क्रियते । न हि अविदिते जिज्ञासा उपपद्यते । तस्मात् अज्ञातवस्तुतत्त्वनिरूपणं भेदमते एव संगच्छते । पूर्वोक्तरीत्या वेदानामभेदपरत्वे प्रत्यक्षादिविरुद्धार्थत्वे च सर्वथा तस्याप्रामाण्यापत्तेश्च ।

# श्रीमध्वजननविषयः

कश्चित् -

यं मद्यगेहं प्रवदन्ति तस्मिन्
स्मार्ते रुजा दैववशे द्विजातौ।
चिरानुभूतां व्यभिचारिणीतां
भार्या विहातुं न शशाक तस्य।

इत्युक्त्वा मद्यगेहपदं एवं व्याख्याति । मद्यस्य गेहं यस्य तम् । मद्यसम्बन्धिगृहशालिनमिति । यद्वा मद्यं गता मद्यगा ईहा इच्छा यस्य तम् । मद्याभिलाषिणमिति व्याख्याय श्रीमध्वस्य माता जारा इत्युक्तम् । विभर्तृका सा । तस्मिन् विषये च सौरपुराणादिवाक्यानि च दत्तानि । तन्न युक्तम् । एवं बहुवेदप्रतिपाद्यस्य श्रीमध्वाचार्यस्य माता जारा भवितुं नार्हति । *आदिन्मातॄराविशद्यास्वाशुचिरहिंस्यमान उर्विया विवावृधे* इति वेदवाक्यं तावत् मध्वाचार्यः श्री लक्ष्मीनारायणप्रेरणया मातॄरविशत् इत्यर्थत्वात् । कथं तस्य माता जारा भवितुं अर्हति । सौरपुराणे च *तदान्ध्रदेशे विकले दाक्षिणात्यो भविष्यति* इति वचनं वर्तते । श्रीमध्वाचार्य आन्ध्रदेशे उत्पन्न इति देवानां प्रियैरेव वक्तव्यम् । तस्य उत्पत्तिस्तु पाजकक्षेत्रे वर्तते इति प्रसिद्धम् तस्मात् सौरपुराणस्थ वचनमन्यपरमेव नास्मद्गुरुवर्यश्रीमध्वाचार्यपरमिति ज्ञेयम् ।

किंच तस्य जन्म आषाढस्य कृष्णपक्षे चतुर्थ्यां भवति इति यदुक्तं तन्न समीचीनम् । वायुपुराणे तस्य जन्म रथसप्तम्यां

भवतीति वचनात् ।

तथैव स्कान्दपुराणे -

प्रादुरासीत् विप्रकुले क्षेत्रे भार्गवसंज्ञिके ।
आनन्दतीर्थनामेति गुरुणा स्थापितो भुवि ।

इति वचनाच्च । सौरपुराणोक्तं मध्व अन्य एवेति सुधियः विजानन्तु ।

रामाधिवेशितहरिस्वसृमौलिमाला
राजद्विमानगिरिशोभितमध्युवास
क्षेत्रं स पाजकपदं त्रिकुलैककेतुः कं
यद्दधाति सततं खलु विश्ववपाजात् । 2-11

इति च मध्वविजयवचनात् । श्रीमध्वाचार्यशिष्यश्रीहृषीकेश-तीर्थविरचितसम्प्रदायपद्धतौ च -

ईशेन्द्रादिसुरेन्द्राणामीशः श्रीरमणप्रियः ।
यत्र प्रादुरभूद्वायुः क्षेत्रं तत् पाजकं शुभं ।

इति वचनात् । श्रीमध्वाचार्यदर्शिश्रीत्रिविक्रमपण्डिताचार्य विरचितवायुस्तुतौ च -

भूत्वा क्षेत्रे विशुद्धे द्विजगणनिलये रौप्यपीठाभिधाने
तत्रापि ब्रह्मजातिः त्रिभुवनविशदे मध्यगेहाख्यगेहे
पारिव्राज्याधिरजः पुनरपि बदरीं प्राप्य कृष्णं च नत्वा
कृत्वा भाष्याणि सम्यक् व्यतनुत च भवान् भारतार्थप्रका-

शम् ॥ 39 ॥

इत्यादि प्रमाणवचनैश्च श्रीमध्वाचार्यस्य जन्म रजतपीठस्थ-पाजकक्षेत्रे एव न तु आन्ध्रदेशे इति ज्ञेयम् ।

# भगवद्गीतायाः विष्णुपरत्वं

ननु कृष्णेनार्जुनाय भगवद्गीतायां शिवतत्त्वमेवाभिहितम् ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥18-61॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥15-17॥

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥11-3॥

इति शिवप्रतिपादकेश्वरशब्द श्रवणात् । आख्याहि मे को भवानुग्ररूपः इति पृष्टे, तदुत्तरत्वेन -

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥11-32॥

इत्यादिवा सकललोकसंहारकरुद्ररूपस्यैव निरूपणाच्च । तस्माद्गीता रुद्रपरेति चेन्न -

तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥15-4॥

अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥15-18॥

इत्यादिश्लोकेषु पुरुषशब्दप्रयोगात् । तस्य च *श्रीपतिः पुरुषोत्तम* इति कोशे विष्णुपरत्वोक्तेश्च ।

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥13-22॥

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥13-23॥

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥13-24॥

इति त्रयोदशेऽध्याये उपद्रष्टरनुमंतृभर्तृभोक्तृमहेश्वरपरमात्मशब्दानां परमपुरुषश्रीहरिवाचकत्वेन अभिधानम् ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ 15-17

इति श्रीहरिणा क्षराक्षरातीते स्वात्मन्येव परमपुरुषत्वरूपोत्तमपुरुषत्ववर्णनात् ।

सृष्टिस्थित्यन्तकारणीं ब्रह्मविष्णुशिवात्मकाम् ।
स संज्ञां याति भगवान् एक एव जनार्दनः ॥

इति विष्णुपुराणे, एकस्मिन् पुरुषे प्रवृत्तिनिमित्तोपन्यास-

पूर्वकं विष्णुब्रह्मशिवपर्यायाणां विष्णुब्रह्मशिवपर्यायमुख्यार्थत्वज्ञापनाच्च । जनार्दनशब्दस्य कयाऽपि वृत्या रुद्रपरत्वाभावाच्च । *पीतांबरेऽच्युतः शार्ङ्गि विश्वक्सेनो जनार्दनः* इत् कोशात् जनार्दनपदस्य अन्यपरत्वाभावाच्च ।

अथ त्रयी वाव प्रकृतिः सत्यं रजस्तम इति तां नारायणः।
परिपश्यत्याननयप्रतिष्ठस्तं वा एतमाहुः पुरुष इति पूर्णो ।
ह्येष भवति स त्रेधा बभूर्वेषां गुणानामुपादानाय ।
विष्णुर्वाव सत्वस्य रजसो ब्रह्मशो नाम तमसः ।
स आ विवेश ब्रह्मा ब्रह्माणं चतुर्मुखमीश ईशानं
पञ्चमुखं यो वा ईश ईशानमाविवेश तं वा एतं काल
इत्याचक्षते काल इत्याचक्षते - इति सौकरायणश्रुतिः ॥
भा-ता 3-22-22 श्लोकतात्पर्य इत्याचक्षते इति ।

वामनवाराहवचनेन च -
ब्रह्मविष्णवीशरूपाणि त्रीणिविष्णोः महात्मनः ।
ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवेस्थितः ।
पृथगेव स्थितो देवो विष्णुरूपी जनार्दनः ।
हिरण्यगर्भे शर्वे च विष्णुस्तत्सदृशाकृतिः ।
स्थित्वा जगत्सृष्टिलयान् करोति पुरुषोत्तमः ॥ इति ।

स वै ममाशेषविशेषमायानिषेधनिर्वाण सुखानुभूतिः ।
स सर्वनामा स च विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः ॥
भा 6-4-25

इति भागवते ब्रह्मणा सर्वशब्दवाच्यत्ववर्णनात् ।

पाद्मे -

श्रुणु नामानि वक्ष्यामि रामचन्द्रस्यपार्वति ।
लौकिकाः वैदिकाः शब्दाः ये केचित्सन्ति पार्वति ।
नामानि रामचन्द्रस्य सहस्रं तेषु चाधिकम् ।

इति शिवेन लौकिकवैदिकसर्वशब्दवाच्यत्ववर्णनात् । *कार्याणां कारणं पूर्वं वाच्यानां वाच्यमुत्तमम्* इति जितंतेस्तोत्रे ब्रह्मण सर्वशब्दवाच्यत्ववर्णनाच्च ।

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते
त्वां विस्मिताश्चैव सर्वे ॥ 11-22 ॥

इति उत्तरत्र रुद्रादयः सर्वे विस्मिताः सन्तः तादृशं रूपं पश्यतीत्युक्त्या न कृष्णस्य रुद्ररूपत्वं शक्यम् । अत्र गीतायं विद्यमानः ईश्वरशब्दः विष्णुपरमेवेति सर्वमवदातम् । तस्मात् कूर्मपुराणवचनानां अन्यथा योजना कार्या ।

ननु आश्वमेधिके पर्वणि उत्तरगीतायामपि शिवतत्वं पृष्टवते अर्जुनाय तदेव कृष्ण आचख्यौ उक्तम् ।
आद्यन्तरहितं सूक्ष्मं शिवमद्वैतमव्ययम् । यज्ज्ञात्वा मुक्तिमानृच्छेत्तज्ज्ञानं ब्रूहिकेशवः ॥

भगवान् उवाच -
स्वयं सञ्चरिते देहे देही कृत्वा समाधिना । निष्कलं तद्विजा-

नीयात् संसाररहितं शिवम् । इति

अत एवाजन्मं पार्थः शिवपूजायामेवासक्तो न विष्णुपूजायां अत एव च शिवः कृष्णाद्यपेक्षया अर्जुनस्याधिकतरं साहाय्यमाचरितवानिति - मैवम् । उदाहृत्प्रमाणे शिवपदस्य सौमङ्गल्यपरत्वात् ।

यतश्च अद्वैतपदमपि स्वतन्त्राद्वैतरूपभगवत्परमिति । स्वयमर्जुनेन श्रीकृष्णसाहाय्यस्य सर्वाधिकत्वेन वर्णनात् । अर्जुन उवाच -

पञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा ००० । 1-14-5
यत्संश्रया ००० ०००० नृहरिदासभिदासुराणि । 1-14-5

इत्याद्युक्तेः । अर्जुनस्येन्द्रावतारत्वेन शिवेन कृतोपकारित्वोपपत्तेः कृष्णस्य शिवांशत्वं तु अपसिद्धान्तपरीतं । पश्यशांकरभाष्यं -

> जगतः स्थितिं परिपिपालयिषुः सः आदिकर्ता नारायणाख्यो विष्णुः भौमस्य ब्रह्मणो ब्राह्मणो ब्राह्मणत्वस्य चाभिरक्षणार्थं देवक्यां वसुदेवाद्द्शेन कृष्णः किल संबभूव ००० स स्वप्रयोजनाभावेऽपि शोकमोहमहोदधौ *निमग्नायोपदिदेश* इति । तत्कथं कृष्णस्य शिवांशत्वं ? अन्यपुराणादिवचनान्यपि प्रतिबिंबबिंबभावपरतया योजनीयानि । किञ्च यत्र शिवपूजादीनां विष्णुपूजादित्वोपपर्यकमिति ॥

पराणि वचनानि तत्र सर्वत्र सर्वान्तर्यामित्वात् श्रीहरेः उ-

पपादनीयानि *सर्वदेवनमस्कारः केशवं प्रतिगच्छतीति यतः ।*
*प्रपद्यन्तेऽन्यदेवता इत्यस्य वासुदेवादात्मनोऽन्या देवता* इति
व्याख्याय मयैष विहितान् तानित्यत्र सर्वदेवतायाजिनां कार्यः
अपि कृष्णपूरिता इति शांकरभाष्येऽप्युक्तत्वात् ।

# असिनातत्त्वमसिना इति श्लोकार्थविचारः

यच्चोक्तं -

अ॑सिना तत्वमसिनाऽपरजीवप्रभेदिना ।
विद्यारण्य महारण्यमक्षोभ्यमुनिरच्छिनत् ।

इति प्राचिनश्लोकेन श्रीपूज्याक्षोभ्यतीर्थस्य जयः प्रकाशीति चेन्न । अस्मिन् पद्ये उत्तरार्धस्य एवं पदच्छेदः वर्तते । हे विद्यारण्य, महारण्यम् अक्षोभ्यम् उ, निरच्छिनत् इति । हे विद्यारण्य, भवान् अपर्जीवप्रभेदिना, परश्च जीवश्च, परजीवौ, परजीवयोः प्रभेदः, परजीवप्रभेदः, अविद्यमानश्चासौ परजीवप्रभेदश्च परजीवप्रभेदः, सोऽ अस्मीति अपरजीवप्रभेदी, तेन अपरजीवप्रभेदिना । वाच्यत्वसंबन्धेन जीवब्रह्मणोः भेदाप्रतिपादनेन लक्षणावृत्या जीवब्रह्मैक्यप्रतिपादनेन इति यावत् । तत्त्वमसिना असिना महारण्यम् महारण्यमिव दुरासदत्वात् महारण्यत्वोक्तिः । सिंहो माणवकः इति वत् । अक्षोभ्यम् उ अक्षोभ्यमेव निरच्छिनत् नितरां चिच्छेद इति । तेन विद्यारण्यमुनेः जयः ज्ञायते । तस्मादिदं प्राचीनश्लोकं प्रमाणं भवितुं नार्हतीति ।

तन्न समीचीनम् । निरच्छिनत् इति तावत् *छिदिर द्वैधीकरणे* इति धातोःरूपम् द्वैधीकरणं नाम स्वसमवेतवृत्तिस्वाभाविकभेदकरणत्वम् । यथा रामः कुठारेण वृक्षं छिन्नति इत्यत्र वृक्षे विद्यमानस्वाभाविकमेव भेदम् कुठारः अभिव्यञ्जयति । न तु अविद्यमानं भेदम् । तथात्वे तार्किकमते परमाणुं छिनत्तीति प्रयोगापत्तेः । अत्र च कथं असिना द्वैधीकरणम् । स्वाभावि-

कभेदाभावात् जीवब्रह्मणोः ।



मुब्बरिप्पडिगुरुपरंपरावैभवग्रंथे पृ 140

ग्रन्थकारः - ब्रह्मतन्त्रस्वतन्त्रजीर

गद्यानुवादः - तस्मिन्समये विजयनगरे तत्ववादिनः अक्षोभ्यमुनेः मायावादिनः विद्यारण्यस्य च मध्ये वेदान्तविषये वादप्रवृत्ते, उभयोरपि अभिप्रायान्

राजपत्रिकामुलकं वेदान्तदेशिकानां सन्निधौ अंप्रेष्य याथार्थ्यं वेदयितुं प्रार्थना कृता । वेदान्तदेशिकैश्च (*असिनातत्वमसिना पर्जीवप्रभेदिना विद्यारण्यमहारण्यं अक्ष्योभ्यमुनिरच्छिनत्*)इति विलिख्य प्रेषिते, राजाऽपि वेदान्तदेशिकानां श्रीचरणेषु नमश्चकार । विद्यारण्यस्तु इदं असहमानः "*शतदूष्णीं दूषयामः*" इत्यवादीत् । तदानीं देशिकाः अपि शतदूषणीं प्रषयामासुः । ततो विद्यारण्योऽपि तां दृष्ट्वा एकस्य चकारस्योपरि बिन्दुं (चिह्नं) निधाय प्रतिप्रेषयामास । देशिका अपि तद्दृष्ट्वा कटाक्षीकृत्य *चकारसमर्थन* नामकं ग्रन्थमेकं विलिख्य तद्बिन्दोरुपरि अपरं बिन्दुं निधाय प्रेषितवन्तः । विद्यारण्यो तद् दृष्ट्वा विष्णुघण्टत्वताररूपानेतान् अहं जेतुमसमर्थः इत्युक्त्वा तान् ववन्दे । राजापि वेदान्तदेशिकानां अत्यन्तभक्तोऽभवत् ।

ननु द्वैधीकरणम् नाम स्वाभिमतस्य अभिप्रायस्य निराकरणमित्यर्थः । रामः रावणस्य भावं छिन्नतीति साधुप्रयोगात् । तद्वत् अत्रापि द्वैतिभिः अंगीकृत्य भेदस्य *निराकरणं अकरोत्* इत्यर्थाङ्गीकारात् न दोषः इति चेन्न । असि शब्दस्य अपरजीवप्रभेदिशब्दस्य च विशेष्यविशेषणभावायोगात् असि शब्दः तावत् असु क्षेपणे इति धातोः *सर्वधातुभ्यः इन्* इति इन् प्रत्यये जातं रूपम् । तत्र भेदकार्थकत्वावगमात् भेदनिषेधकेन पूर्वपदेन कथं सामानाधिकरण्यं - अभेदो वा ? न हि परस्परं विरुद्धयोः पदयोः विशेष्यविशेषणता क्वापि दृष्टा । तस्मादिदं पद्यं विद्यारण्यजयप्रकाशनपरं न भवतीति ज्ञेयम् ।

---

अस्य प्राचीनग्रन्थस्य परिशीलनेन च विद्यारण्येन साकमेव वाक्यार्थः प्रवृत्तः । न तु सायणमाधवेनेति ज्ञेयम् । एतेन वाक्यार्थसमये विद्यारण्येति नामैव तस्य नासीदिति यदुक्तम् तन्निरस्तं भवति ॥

# पुराणानां सात्विकत्वादिव्यवस्था

यत्तु वैष्णवं नारदीयं च तथा भागवतं शुभम् ।
गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥
षडेतानि पुराणानि सात्विकानि निबोध मे ।
ब्रह्माणं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ॥
भाविष्यम् वामनं ब्राह्मां राजसानि निबोध मे ॥
मात्स्यं कौर्म्यं तथा लैंग्यं शैवं स्कान्दम् तथैव च ॥
आग्नेयं च षाडेतानि तामसानि निबोध मे ।इति ।

वाक्यानि परिकल्प्य स्कान्दादेह् अप्रामाण्यं कल्पयन्ति । तत्तुच्छम् ।नानादेशेभ्यो समानीतपुस्तकेषु तद्वचनस्य अदर्शनात् । पुराणेषु तद्विरुद्धगणनायाः तत्प्रतिकूलगुणशालित्वस्य चोपलम्भाच्च ।तथा हि प्रभासखाण्डे -

चतुर्भिर्भगवान् विष्णुः द्वाभ्यां ब्रह्मा तथा रविः ।
अष्टादशपुराणेषु शेषेषु भगवान् शिवः ।इति

शिवरहस्ये -

दशशैवपुराणानि सात्विकानि विदुः बुधाः ।
वैष्णवानि च चत्वारि तामसानि विदुः बुधा ॥
ब्राह्मे द्वे राजसे वैश्यसेव्ये सर्वसम्मते ।
गुणत्रयसमायुक्तं आग्नेयं सौरमेव च इति ॥

तदसत् । इमानि पुराणवाक्यानि पद्मपुराणेषु उपलभ्यन्ते । मोहशास्त्रकरणस्य कारणं च सविस्तारं निरूपितम् । तत्र रुद्रस्य तारकमन्त्रजपस्य कारणं उपपादितम् न च इमानि वाक्यानि मोहकानि इति वाच्यम् । स्वीभार्यां प्रति इमानि

वाक्यानि महारुद्रेणैव निरूपितानि । एकान्ते रहस्यं वदामि इत्यादि वचनैः तेषां वाक्यानां मोहकत्वं वक्तुं नैव शक्यते ।

पुराणानां विभागः कुतः ? ननु सौरपुराणस्य पुराणेषु गणनाभावात् कम्बरामायणादिवत् अप्रमाणमिति चेन्न । गरुडपुराणे तस्य उपपुराणत्वेन समाख्यातम् । कंबरामायणादीनां न तथात्वमिति । तस्य प्रामाण्यमंगीकरणीयमिति चेन्न तस्य पुराणस्य उपपुराणत्वेऽपि तामसत्वादप्रामाण्यम् अंगीकरणीयम् ।

ननु सर्वपुराणानां प्रामाण्यव्यवस्थापकसिद्धान्तः प्रस्तूयते । तथाहि इत्यादिना कल्पभेदेन तदुपपत्तेः इति । तन्न । प्रामाण्यं तावत् कालत्रयेऽपि अबाध्यत्वं रूपम् याथार्थ्यमेव मानत्वमित्युक्तेः । एकस्मिन् काले यथार्थरूपम् वस्तु तत्कथं कालान्तरे अन्यथा उपनीयते । नहि घटः शतशः प्रयत्नेऽपि पटो भवति । तस्मात् कल्पभेदेन व्यवस्था न युक्ता । भिन्नभिन्नार्थबोधकानां च वचनानां एकप्रकारेणैव प्रामाण्यं व्यवस्थापयितुं न शक्यमेव । तस्मादेव अद्वैतिभिरपि भेदबोधकानां वाक्यानां अनुवादकत्वं, व्यावहारिकत्वं च व्यवस्थापितं स्वीयग्रन्थेषु । *जीवस्य तु न परस्मादन्यत्वं प्रतिपिपादयिष्यति किन्तु अनुवदत्येव अविद्याकल्पितं लोकप्रसिद्धं जीवभेदम्* इति श्रीभाष्ये । *अविद्याकल्पितं कर्तृत्वाद्याश्रित्य कर्मविधयः प्रवृत्ता इत्यत्र हेतुमाह अविद्यावदिति* । इति कल्पतरौ । अविद्याकल्पितं च कर्तृत्वभोक्तृत्वं यथा लोकसिद्धं उपाश्रित्य कर्मविधयः प्रवृत्ताः, श्येनादि विधयः इव निषिद्धेऽपि-

*न हिंस्यात् सर्वभूतानि इति साध्यांशे अभिचारातिक्रान्तनिषेधं पुरुषं आश्रित्य, अविद्यावत् पुरुषाश्रयत्वात् शास्त्रस्य* इति भामत्यां च सर्वेषां वचनानां प्रामाण्यं *पारमार्थिकत्व* तात्पर्येनैव निरूपितम् । तस्मात् सर्वपुराणानां प्रामाण्यव्यवस्था तावत् स्वमतविरुद्धम् । श्रीशंकराचार्यैः स्वीयशांकरभाष्ये - *प्रतिपाद्यं तु शास्त्रार्थमात्मैकत्वमेव दर्शयति शास्त्रदृष्ट्या तूपदेशो वामदेववत् इत्यादिना* इति सर्वाणि सूत्राणि न अद्वैतबोधकानि इति सूचयति । तदैवं अवतारितं आनन्दगिरिमहोदयेन स्वीय व्याख्याने - *जीवब्रह्मणोरैक्यं न क्वापि सूत्रकारो मुखतो वदति । किन्तु सर्वत्र भेदमेवातो नैक्यमिष्टं तत्राह* ***प्रतिपाद्यन्तु*** *इति । सूत्रेषु अभेदो नोक्त इति भ्रान्तिं निवारयति ।* ***प्रतिपाद्यं तु*** *इति । इति रत्नप्रभायां व्याख्यातं । अत्र आदिपदं आत्मेति तूपगच्छन्तीत्यादिसूत्रसंग्रहार्थः* इति रत्नप्रभायां च उपपादितम् । तेन सर्वस्यापि एकार्थप्रतिपादकत्वमविरुद्धत्वं च न सिद्धम् । दशश्लोक्याम् श्रीशंकराचार्यैरेव -

न वर्णा न वर्णाश्रमाचारधर्माः ।
न मे धरणाध्यानयोगादयोऽपि ॥
अनात्माश्रयं ममाध्यासहानात् ।
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥
न माता पिता वा न देवा न श्लोकाः ।
न वेदा न यज्ञा न तीर्थं ब्रुवन्ति ॥
सुषुप्तौ निरस्तातिशून्यात्मकत्वात् ।
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥
न शास्ता न शास्त्रं न शिष्यो न शिक्षा ।
न चत्वं न चाहं न चायं प्रपञ्चः ॥

स्वरूपावबोधो विकल्पासहिष्णुः ।
तदेकोवशिष्टः शिवः केवलोऽहम् ॥

इत्यादिवचनैः वेदानां शास्त्राणां च नास्तीत्वबोधनात् कुतः सकलपुराणप्रामाण्यम् व्यवस्थापनम् ।

अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ।
राजसेषु तु माहात्म्यमधिकं ब्राह्मणो विदुः ॥
संकीर्णेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः।
संकीर्णेषु सरस्वत्याः पितृणां च निगद्यते॥
संकीर्णेषु सरस्वत्याः पितृणां च निगद्यते।
सात्विकेष्वेव कल्पेषु माहात्म्यमधिकं हरेः ॥
तेष्वेव योगसंसिद्धाः गमिष्यन्ति परांगतिम् ।

-इत्यादिपुराणवचनात् सात्विकपुराणेषु एव योगिनः सन्तः परां गतिं मोक्षमाप्नुवन्ति, अनेनैव वाक्येन पुराणानां सात्विकत्वादिकं च निर्वचनं कृतम् । विष्णुमाहात्म्याधिकबोधकत्वं सात्विकत्वम् इत्यादि ।

ननु श्रीमध्वाचार्यैरपि तामसत्वेन परिगणितेषु स्कान्दादिषु पुराणेषु स्वमतसंस्थापनाय कानिचित्वाक्यानि उदाहृतानि । तेन तस्य सर्वेषां तामसत्वात् अप्रामाण्यं व्यवस्थापयितुं न शक्यमिति चेन्न । अस्माभिः सात्विकत्वस्य निर्वचनम् कृतम् । तद्रीत्या तादृशतादृशभागस्य सात्विकत्वादि व्यवस्थाप्यते न तु समग्रस्य तामसत्वमिति ज्ञेयम् । अथवा तादृश पुराणेषु तामसत्वेन गणितेषु अपि अस्मत्सम्मतस्य विषयः वर्तते इति

सूचयति भगवान् आचार्याः। तथैव वादिप्रतिवादसमये प-
रांगीकारप्रमाणप्रदर्शनेनापि स्वसिद्धान्तसंस्थापनम् च दृश्यते।

ननु शान्तिपर्ववचनानि उदाहृत्य -
भयः स भगवान् ध्यात्वा चिरं शूलवरायुधः ।
असृजत् सर्वशास्त्राणि महादेवो महेश्वरः ।
अङ्गानि वेदाः चत्वारः मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येनाश्चतुर्दशः । इति ।

शिवस्य सर्वपुराणानां आदिकर्तृत्वम् उक्तम् । तन्न । अ-
सृजत् सर्वशास्त्राणि इत्यादिवाक्यस्य बहुपुस्तकानां पर्यालो-
चनेऽपि न दृश्यते । व्यासकर्तृत्वस्य जगति सर्वत्र श्रूयते ।
तथाहि विष्णुपुराणे -

वेदमेकं चतुर्भेदं कृत्वा शाखाशतैः विभुः ।
करोति बहुलं भूयो वेदव्यासस्वरूपधृक् ।
द्वापरे तु युगे विष्णु व्यासरूपी महामुने ।
वेदमेकं च बहुधा कुरुते जगतो हितः ।
यथा च कुरुते तन्वा वेदमेकं पृथक्प्रभुः ।
वेदव्यासाभिधाना तु सा सा मूर्तिः मधुद्विषः ।
इत्यादिवचनैः वेदव्यासकर्तृत्वमेव ज्ञायते ।

ब्रह्मोवाच -
श्रुणु वत्स प्रवक्ष्यामि पुराणानां समुच्चये ।
यस्मिन् ज्ञाते भवेत् ज्ञातं वाङ्मयं सचराचरम् ।
पुरानमेकमेवासीत् सर्वकल्पेषु मानद ।

चतुर्वर्गस्य बीजं च शतकोटिप्रविस्तरम् ।
प्रवृत्तिः सर्वशास्त्राणां पुराणादभवद्ततः ।
कालेनाग्रहणं दृष्ट्वा पुराणस्य महामुनिः ।
हरिः व्यासस्वरूपेण जायते च युगे युगे ।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।
तदष्टादशधाकृत्वा भूलोके निर्दिशत्यपि ।
अद्यापि देवलोके तु शतकोटि प्रविस्तरम् ॥

इत्यादि नारदीयवाक्यैरपि श्रीव्यासकर्तृत्वं पुराणानां ज्ञायते ।

मात्स्यवचनानि श्रीमध्वतन्त्रमुखभूषणग्रन्थे प्रदर्शितानि । एतेन वाक्येन शिवप्रोक्तत्वं ज्ञायते इति चेन्न । तत्र विद्यमान-शिवशब्दस्य विष्णुपरत्वं ज्ञेयम् । अनेकनिरवकाशपुराणवचनैः व्यासस्यैव कर्तृत्वस्य सिद्धत्वात् । अग्रे मत्स्यरूपेन तु पुनः कल्पादावुदकार्णवे इत्यत्र पुनः शब्दः वर्तते ।

तस्मात् एकस्मिन्नपि सात्विकपुराणे श्रीमध्वाचार्यस्य दैत्य-रूपत्वं नोक्तम् प्रत्युत वाय्ववतारस्वरूपत्वं उक्तम् । वैपरीत्येन श्रीशंकराचार्यस्यैव दैत्यरूपत्वं उपपादितम् एतेषु वाक्येषु ।

श्रीमध्वाचार्यस्य वाय्ववतारत्वे वेदानां विद्यमानत्वात् तथैव पुराणेषु अपि निरूपितत्वात् तद्वैपरीत्यवर्णनम् तन्मोहकरत्वमेव । सूत्रकारैरपि *इयदामननात्* इति तृतीयपादीयसूत्रे वायोः उत्तमत्वं प्रतिपादितम् । श्रीमद्भागवतेऽपि -

वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्टया ।

वायौ मुख्याधिया तोये द्रव्यैः तोयपुरस्कृतैः ॥

इत्यत्र वायौ मुख्याधिया इत्यत्र श्रीधरस्वामिभिरपि *मुख्यधिया प्राणदृष्ट्या* इति व्यख्यातम् । श्रीसुदर्शनसूरिभिरपि *मुख्याधिया मुख्यप्राण इति बुध्या* इति निरूपितम् । उपनिषद्भाष्यादिषु श्रीशंकराचार्यैरपि प्राणोपसनायाः विधानात् तादृश प्राणावतारस्य श्रीमध्वाचार्यस्य दैत्यत्ववर्णनम् तेषामेव भूषणम् न तु सात्विकानाम् । तस्मादेव श्रीमध्वाचार्यः स्वीयजीवनसमये एव स्वस्य वाय्ववताररूपत्वं सप्रमाणेन उपपादितम् । स्वव्यापारैश्च निरूपितम् । यथा श्रीमध्वाचार्यः स्ववचनैः स्वरूपम् उक्तवान् न तथा शंकराचार्यः क्वापि स्वग्रन्थेषु उक्तवान् । न च स्वीयव्यापारैश्च प्रकटितवान् । उभयसम्मतज्योतिष्यग्रन्थेऽपि श्रीमध्वाचार्यस्य प्राणावताररूपत्वं उक्तम् । उक्तम् हि द्वैततत्वप्रदीपने - *एतेषां सर्वेषां पर्यालोचनया श्रीमध्वाचार्यस्य वाय्ववतारत्वं निष्टंकितम् ।*

एतेनैव श्रीनारायणपण्डिताचार्यस्य दैत्यत्वनिरूपणमपि निरस्तं वेदितव्यम् । तस्य दैत्यस्वरूपत्वे केनापि प्रमाणस्य अनुदाहरणात् । सोऽपि उद्घोषयति श्रीमध्वाचार्यस्य वेदप्रतिपादितत्त्वम् -

तां मन्त्रवर्णैः अनुवर्णनीयाम् शर्वेन्द्रपूर्वैरपि वक्तुकामे ।
संक्षिप्तुवाक्ये मयि मन्दबुद्धौ सन्तो गुणाढ्याः करुणां क्रियासुः॥
इति ॥

# उपसंहारः

आपादमौळिपर्यन्तं गुरुणां आकृतिं स्मरेत् ।
तेनविघ्नाः प्रणश्यन्ति सिद्ध्यन्ति च मनोरथाः ॥

एवं माणिक्यमञ्जरीनामकस्य ग्रन्थस्य विमर्शः यथा मति अस्मद्गुरुवर्याणां अनुग्रहेण कृतः । अस्मिन् काले माध्वजनाः माणिक्यमञ्जरीग्रन्थस्य दर्शनेन क्षुब्धाः न स्युरिति अभिप्रायेण अयं ग्रन्थः प्रवृत्तः । एतादृशकाले परस्परगुरुचारित्रनिंदाकरणात्मकस्य ग्रन्थस्य प्रकटनादिकं न प्राज्ञैः कार्यं । तेन सामान्यजनसमाजे बुद्धेः क्षोभः संभवति । तथापि परवादिभिः कृतं चेत् न केवलतद्ग्रन्थस्य निराकरणार्थं किन्तु सत्यांशस्य पुनःस्थापनार्थं अवश्यं सर्वमाध्वैः प्रवृत्तैः भाव्यम् अत इयं नो प्रवृत्तिरिति सुधियो विभावयन्तु । अस्य ग्रन्थस्य परिशीलनेन ज्ञानिनः जानन्ति च विशेषतः । अस्मिन् ग्रन्थे मध्वमतस्योपरि ये दोषाः उद्भृताः परैः तेषां आभासत्वं निरूपितम् । श्रुतिस्मृतीनां पर्यालोचनया च ज्ञायते वायोरवतारः श्रीमध्वाचार्यः इति । तस्मात् तस्य दैत्यत्ववर्णनं न साधुजनानाम् शोभनम् । तस्मादेव तेषामेव श्रीमध्वाचार्यस्य द्वेषः युक्तः न सज्जनानामिति ज्ञानिनः विभावयन्तु ।

इतिहासज्ञैः तथा प्राचीनग्रन्थकारैः विद्यारण्यस्वामिनः जीवितकालः शतंसंवत्सरसमीपे इति निरूपितम् । न तु माणिक्यमञ्जरीरीत्या 158 वर्षाणि । सः चत्वारिंशत्वर्षीयः आश्रमम् स्वीकृत्य विद्यारण्येति नाम लब्धवान् । तस्य जीवनस्य तुरीयभागे नाम सप्ततिवर्षकाले श्रीमदक्षोभ्यतीर्थैः साकं वाक्यार्थः

प्रवृत्तः इति ज्ञायते इतिहासानां पर्यालोचने । तस्मिन् समये विद्यारण्येति नाम्नः प्रसिद्धत्वात् तस्य श्लोकस्यासंगतत्वं न शंकनीयम् । पन्चादशशतमानीय गुरुपरंपरवैभवं नामके ग्रन्थेऽपि अयं विषयः निरुपितः । वेदान्तदेशिकचम्पूकाव्येऽपि विचारितश्चायं विषयः । तस्मात् कालाज्ञानात् औद्धत्येन माणिक्यमञ्जरी प्रवृत्तेति ज्ञायते । नूतनेतिहासज्ञैरपि अस्य जिवितकालः चतुराशीतिवर्षः इति अङ्गीकृतः । तस्मात् अयं श्लोकः प्रामाणिक इत्येवं विद्वद्भिः ज्ञातव्यम् ।

बहुप्रमाणविरुद्धत्वात् अस्मिन् सूर्यादिपुराणेषु विद्यमानः मध्वः नास्मत्संमतवाय्ववतारश्रीमध्वाचार्यः किन्तु अन्यः इति ज्ञेयम् । अस्मत्मध्वाचार्यः मध्व + आचार्यः सवर्णदीर्घयुक्तपदवाच्यः, सौरपुराणे च श्रूयमाणमध्वाचार्यस्तु इको यणचि इति सूत्रप्राप्त मधु + आचार्यः यण् सन्धि युक्तेति ज्ञेयम् । तस्मात् पुराणोक्तमध्व अन्येवेति विद्वांसः जानन्तु ।

अनया सेवया अस्मद्गुरुवर्याणां अन्तर्यामि श्रीहरिः प्रीणातु ।

नारायणः सदानन्दो भक्तानमभयङ्करः ।
मयि स्थितो हयग्रीवः पातु मां सर्वदैव हि ।
श्रीमदान्दतीर्थार्यवन्दिता हरिवल्लभा ।
करोतु मङ्गलं नित्यं ज्ञानानन्दस्वरूपिणी ।
मयि स्थितो गुरुरेव कर्तास्य च भवेत् सदा ।
गुणाः सन्तिश्चेत् तस्यैव न दोषाश्चकथंचन ।
सत्यध्यानं यतिं वन्दे प्रतिवादिभयङ्करम् ।
यत्कृपालेशमात्रेण पापजातं प्रणश्यति ।

ॐ

यत्पादधूलिसङ्गेन ज्ञानं परमाप्तवान् ।
श्रीनिवासगुरुं वन्दे सर्वशास्त्रविशारदम् ।
एवं गुरोः प्रसादेन रचिता वज्र(गो)मञ्जरी ।
तेन प्रीतो भवेत्तद्वः हयग्रीवः हरिप्रियः ।

श्रीमत्परमपूज्यप्रातःस्मरणीयसत्यध्यानतीर्थश्रीचरणानां
प्रियान्तेवासिपरमपूज्यश्रीमज्जालिहाळश्रीनिवासाचार्य
अन्तेवासिद्वारकानाथेन विरचिता
माणिक्यमञ्जरीखण्डनात्मिका
श्रीगोमञ्जरी संपूर्णा ॥

श्रीहनुमद्भीममध्वात्मकभारतीरमणमुख्यप्राणान्तर्गतश्रीकृष्णार्पणमस्तु ॥



॥ ಶ್ರೀ ॥

# ಭೂಮಿಕಾ

ಆಪಾದಮೌಲಿಪರ್ಯಂತಂ ಗುರೂಣಾಂ ಆಕೃತಿಂ ಸ್ಮರೇತ್
ತೇನ ವಿಘ್ನಾಃ ಪ್ರಣಶ್ಯಂತಿ ಸಿದ್ಧ್ಯಂತಿ ಚ ಮನೋರಥಾಃ

ಕರೋತು ಮಮ ಕಲ್ಯಾಣಂ ಹರಿರ್ಹಯಮುಖಾಭಿದಃ
ಗುರುಶ್ಚ ಮಧ್ವನಾಮಾ ಮೇ ವರದೋಸ್ತು ನಿರಂತರಂ ॥

ಯತ್ಪಾದಾಬ್ಜ ವಿನಿಸ್ಸೃತಾ ಸುರನದೀ ನ್ಯೂನಾಪಿ ಮೂರ್ಧ್ನಾರ್ಧೃತಾ ।
ಯನ್ಮೂರ್ತೇರನುಚಿಂತನಾಯ ಚ ಜಟಾಧಾರೀ ಶಿವೋ ದೀಕ್ಷಿತಃ ॥
ಯತ್ಪ್ರೀತ್ಯೈ ಶಿರಸಾ ಧೃತಃ ಸ್ವಸಹಜಚಂದ್ರಃ ಶ್ರಿಯಃ ಸೋದರಃ ।
ತಂ ವಂದೇ ಗಿರಿಜಾಧವೇನ ಸತತಂ ಧ್ಯಾತಂ ಪರಂ ಶ್ರೀ ಹರಿಂ ॥

ಯಾರ ಪಾದಕಮಲಗಳಿಂದ ಹರಿದು ಬಂದ ದೇವನದಿ ಗಂಗೆಯನ್ನು ತನಗಿಂತ ನ್ಯೂನಳಾದರೂ ಶಿರಸ್ಸಿನಲ್ಲಿ ಧರಿಸಿದನೋ, ಯಾರ ಮೂರ್ತಿಯನ್ನು ಧ್ಯಾನ ಮಾಡುವುದಕ್ಕಾಗಿ ಜಟಾಧಾರಿಯಾಗಿ ದೀಕ್ಷಿತನಾದನೋ, ಯಾರ ಪ್ರೀತಿಗಾಗಿ ಮಹಾಲಕ್ಷ್ಮಿಯ ಸೋದರನಾದ ಚಂದ್ರನನ್ನು ತಲೆಯಲ್ಲಿ ಧರಿಸಿದನೋ, ಅಂತಹಾ ಪಾರ್ವತೀಪತಿಯಾದ ಶಿವನಿಂದ ನಿರಂತರ ಧ್ಯಾನಿಸಲ್ಪಟ್ಟ ಶ್ರೀಹರಿಯನ್ನು ವಂದಿಸುತ್ತೇನೆ.

ಕಾರ್ಯಸಿದ್ಧಿಗೆ ಪ್ರಯೋಜಕವಾದದ್ದು ಪ್ರತಿಬಂಧಕ ನಿವೃತ್ತಿಯೆಂದು ತಿಳಿದ ನಿಷ್ಪಕ್ಷವಾದಿಗಳು ಮನಸ್ಸಿಗೆ ಸಂತೋಷವೆಂದು ಹೇಳುವ ಸತ್ಪಕ್ಷ ರಕ್ಷಣಾತ್ಮಕ ಗ್ರಂಥವು, ಸಾತ್ವಿಕ ಪಕ್ಷಕ್ಕೆ ಜಯ ಶತಃಸಿದ್ಧವಾದದ್ದರಿಂದ ಈ ವಿಜಯೀ ಗ್ರಂಥ ಸಜ್ಜನರಾದ ಮಾಧ್ವರ ಮನಸ್ಸಿಗೆ ಮುದ ನೀಡಲಿದೆ. ಇಂದಿನ ವಿಜ್ಞಾನ ಯುಗದಲ್ಲಿ ಪ್ರಾಚೀನ ವೈದಿಕ ವಿಜ್ಞಾನ ಭಾಸ್ಕರನು ಅಸ್ತಂಗತನಾಗಿರುವಾಗಲೂ ಕೂಡ ಶಾಸ್ತ್ರೀಯ ಪರ್ಯಾಲೋಚನ ಪೂರ್ವಕ ಗ್ರಂಥಗಳು ರಚನೆಯಾಗುತ್ತಿದೆಯೆಂಬುದೇ ಹರ್ಷದ ಸಂಗತಿಯಾಗಿದೆ. ಇಂತಹ ಗ್ರಂಥಗಳ ಪೈಕಿ "ಗೋಮಂಜರಿ"ಯೂ ಒಂದು.

ಗೋ ಎಂದರೆ ವಜ್ರ, ವೇದವೆಂದು ಅರ್ಥ. ಅರ್ಥಾತ್ ದುರ್ಮತ ಭಂಜಕ ವೇದವೆಂಬ ವಜ್ರ. ಈ ರೀತಿಯಾದ ವಜ್ರಗಳ ಗೊಂಚಲು ಈ "ಗೋಮಂಜರಿ".

ಗೋ ಎಂದರೆ ಕಿರಣ. ಪವಿತ್ರ "ಮಣಿಮಂಜರಿ" ಮಂಡನ ಪರವಾಗಿಯೂ "ಮಾಣಿಕ್ಯಮಂಜರಿ" ಎಂಬ ಕತ್ತಲೆಯನ್ನು ಓಡಿಸುವ ವೈದಿಕ ಭಾಸ್ಕರನ ಪ್ರಖರ ಕಿರಣಗಳ ಮಾಲೆ ಈ "ಗೋಮಂಜರಿ".

ಪಂಡಿತರತ್ನ, ಪರಮಪೂಜ್ಯ ಪ್ರಾತಃಸ್ಮರಣೀಯರಾದ ಶ್ರೀ ಜಾಲಿಹಾಳ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರ ಪ್ರಿಯ ಶಿಷ್ಯರಾದ, ನಿತ್ಯ ಪಾಠ ಪ್ರವಚನರತರಾದ, ಸದಾಚಾರ ದೀಕ್ಷಾದಕ್ಷರಾದ ಶ್ರೀ ದ್ವಾರಕಾನಾಥಾಚಾರ್ಯರಿಂದ ರಚಿತವಾದ ಈ ಗ್ರಂಥವು ಅರ್ಥಪೂರ್ಣವಾಗಿ ವಿರಾಜಿಸುತ್ತಿದೆ ಎಂಬುದು ಮಹದಾನಂದದಾಯಕ ವಿಷಯವಾಗಿದೆ.

"ಮಾಣಿಕ್ಯಮಂಜರಿ" ಎಂಬ ಶಂಕರಾಚಾರ್ಯರ ಚಾರಿತ್ರ್ಯ ವರ್ಣನ ಹಾಗೂ ಶ್ರೀ ಮನ್ಮಧ್ವಮತ ಸಿದ್ಧಾಂತ ದೂಷಣೆಗಾಗಿಯೇ ಹೊರಟಿರುವ ಗ್ರಂಥವು "ಭಾವ ದೀಪಿಕಾ " ಎಂಬ ವ್ಯಾಖ್ಯಾನ ಸಹಿತ ರಘುನಾಥ ಸೂರಿ ಎಂಬ ಅಪರಿಚಿತ ಅದ್ವೈತ ಪಂಡಿತರಿಂದ ರಚಿತವಾಗಿ, ಕಳೆದ ವರ್ಷ ಮೈಸೂರಿನ ಸಂಪಾದಕರೊಬ್ಬರಿಂದ ಸಂಪಾದಿಸಲ್ಪಟ್ಟು ಬಿಡುಗಡೆಯಾಗಿರುವುದು ವಿದ್ವನ್ಮಣಿಗಳಿಗೆ ವಿದಿತವಾದ ವಿಷಯವಾಗಿದೆ. ಈ ಗ್ರಂಥದ ಭೂಮಿಕೆಯಲ್ಲಿ, ಗ್ರಂಥದಲ್ಲಿ ಹಾಗೂ ವ್ಯಾಖ್ಯಾನದಲ್ಲಿ ಬಹುಶಃ ಶಂಕರಾಚಾರ್ಯರ ನಿರ್ದುಷ್ಟತ್ವ ಪ್ರತಿಪಾದನೆಯನ್ನು, ಅದ್ವೈತ ಸಿದ್ಧಾಂತ ಮಂಡನೆಯನ್ನು, ಶ್ರೀ ಮಧ್ವಾಚಾರ್ಯರ ದಿವ್ಯ ಚರಿತ್ರೆಯಲ್ಲಿ ಇಲ್ಲದಿರುವ ದೋಷಗಳನ್ನು ಹೇಗಾದರೂ ತೋರಿಸಲೂ ಹಾಗೂ ದ್ವೈತಮತ ದೂಷಣೆಗಾಗಿ ಅಪಾರ ಪ್ರಯತ್ನವನ್ನು ಮಾಡಿ ನಿಷ್ಫಲವಾಗಿದೆ. ಮಾಣಿಕ್ಯಮಂಜರಿ ಗ್ರಂಥದ ವೈಫಲ್ಯತೆಯನ್ನು ತೋರಿಸುವ ಸಫಲವಾದ ಗ್ರಂಥವೇ "ಗೋಮಂಜರಿ". ಈ ಗ್ರಂಥಕ್ಕೆ ಪಂಡಿತರಾದ ಮ॥ಶಾ॥ಸಂ॥ ತಾಮ್ರಪರ್ಣಿ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರು ವಿದ್ವತ್ಪೂರ್ಣ ಭೂಮಿಕೆಯನ್ನು ರಚಿಸಿದ್ದಾರೆ. ಸಾಮಾನ್ಯ ಜನರ ಅನುಕೂಲಕ್ಕಾಗಿ ಅದರ ಸಂಕ್ಷಿಪ್ತ ಕನ್ನಡ ಸಾರಾಂಶವನ್ನು ಕೊಡಲಾಗಿದೆ.

ಮೊದಲು "ಮಾಣಿಕ್ಯಮಂಜರಿ"ಯ ಭೂಮಿಕೆಯನ್ನು ವಿಚಾರ ಮಾಡೋಣ. ಮೊದಲು ಮಂಗಳಾಚರಣೆಯನ್ನು ವಿವರಿಸಿ ಅದರ ಸಾರವನ್ನು ವರ್ಣಿಸಲಾಗಿದೆ. ಸಕಲ ಜಗತ್ತನ್ನು ನಾಶಗೊಳಿಸಲು ಹೊರಟ ಗಂಗಾನದಿಯ ದೋಷ ನಾಶ ಮಾಡುವಿಕೆ, ಫಾಲಲೋಚನ ಗ್ರಹಣದಿಂದ ಪರಮದಯಾಲುತ್ವ, ಮುನಿಜನ ಲಕ್ಷಣವಾದ ಜಟಾಧಾರಿತ್ವದಿಂದ

ಸತ್ವಸಂಪತ್ತಿ, ಪಾರ್ಥಪ್ರಹಾರದಿಂದ ಭಕ್ತಾಪರಾಧ ಸಹಿಷ್ಣುತೆ ಮೊದಲಾದವುಗಳು ರುದ್ರರ ಗುಣಗಳನ್ನು ತೋರಿಸುತ್ತವೆಯೆಂದು ಹೇಳಲಾಗಿದೆ. ಇದು ಸರಿಯಲ್ಲ.

1) ಗಂಗೆಯನ್ನು ತಡೆಯುವುದರಿಂದ ರುದ್ರನಿಗೆ ದುಷ್ಟ ಶಿಕ್ಷಕತ್ವ ಗುಣ ಬಂದರೆ, ಗಂಗೆ ದುಷ್ಟಳೆಂದು ಹೇಳಿದಂತಾಯಿತು. ಅಂತಹ ದುಷ್ಟಳನ್ನು ರುದ್ರದೇವರು ಹೇಗೆ ತಲೆಯಲ್ಲಿ ಧರಿಸಿದರು? ಇದು ಯಾವ ಬುದ್ಧಿವಂತರೂ ಮಾಡುವ ಕೆಲಸವಲ್ಲ.

2) ಪರಮದಯಾಲುತ್ವವೆಂದರೇನು? ಸಂಸಾರದಲ್ಲಿ ಬಿದ್ದು ದುಃಖವನ್ನು ಅನುಭವಿಸುತ್ತಿರುವ ಜನರನ್ನು ಸಂಸಾರ ದುಃಖದಿಂದ ಪಾರುಮಾಡಿ, ಅವರಿಗೆ ಪುನರಾವೃತ್ತಿ ರಹಿತ ಮೋಕ್ಷವನ್ನು ಕೊಡಿಸುವುದೇ ಪರಮದಯಾಲುತ್ವ. ಅದನ್ನು ಮಾಡದ ಶಿವ ಪರಮದಯಾಲುವಲ್ಲ. ಈ ವಿಶೇಷಣ ವ್ಯರ್ಥ. ನಿಮಿತ್ತಾಂತರವಿದ್ದರೆ, ಅದು ಯಾವುದು ?

3) ಮುನಿಗಳೂ ಕೂಡ ಜಟಾಧಾರಿಯಾಗಿ ದೇವತೆಗಳನ್ನು ಪೂಜಿಸುತ್ತಾರೆ. ಅವರನ್ನು ಒಲಿಸಲು ತಪಸ್ಸನ್ನು ಮಾಡುತ್ತಾರೆ. ಹಾಗೆಯೇ ರುದ್ರದೇವರ ಜಟಾಧಾರಿತ್ವವು ಕೂಡ ಸ್ವೋತ್ತಮದೇವತಾ ಪೂಜಾ ಸಾಧನವೆಂದು ಏಕೆ ಹೇಳಬಾರದು?

4) ಭಕ್ತಾಪರಾಧ ಸಹಿಷ್ಣುತ್ವವು ವ್ರಣ, ದುಃಖಾದಿಗಳಿಂದ ರಹಿತವಾಗಿರಬೇಕು. ಪಾರ್ಥನ ಪ್ರಹಾರದಿಂದ ಗಾಯಗೊಂಡಿದ್ದು ರುದ್ರನ ದುಃಖ ರಹಿತತ್ವಕ್ಕೆ ನಾಶ ತರುವಂತಹುದೆಂದು ಭಾವಿಸಬಹುದು.

5) ಭಕ್ತ ಜನರ ಶಾಶ್ವತ್ವ ಕೀರ್ತಿ ಸಂಪಾದನೆಯಲ್ಲಿ ದೀಕ್ಷಾಬದ್ಧನೆಂಬ ವಿಷಯದಲ್ಲಿ ಕಾರಣ ಸ್ಫುಟವಾಗಿಲ್ಲ.

ರುದ್ರದೇವರು ಪೂಜ್ಯರಾಗಿರುವುದು ಅವರು ಪರಮ ವೈಷ್ಣವರಾಗಿರುವುದರಿಂದಲೇ. ಅದೇ ಸರಿಯಾದ ಕಾರಣ, ಬೇರೆಲ್ಲ ವ್ಯರ್ಥ.

## ರುದ್ರರ ಸ್ಮಶಾನ ವಾಸಿತ್ವ

1) ಮಹಾಪ್ರಲಯವೂ ಒಂದು ಸ್ಮಶಾನವಾದ್ದರಿಂದ, ಪರವಸ್ತು ಎಂದವನಲ್ಲಿ ಸ್ಮಶಾನ ವಾಸಿತ್ವ ಶ್ಲಾಘನೀಯವೇ ಎಂದರೆ, ಇದು ಸರಿಯಲ್ಲ. ಏಕೆಂದರೆ ಅದ್ವೈತಿಗಳೂ

ಸೇರಿದಂತೆ ಯಾರೂ ಸ್ಮಶಾನವನ್ನು ಪವಿತ್ರ ಎಂದು ಒಪ್ಪಿಲ್ಲ. ಅಲ್ಲಿ ವಾಸಿಸುವುದೂ ಇಲ್ಲ. ಮಹಾಪ್ರಲಯವೆಂಬ ಸ್ಮಶಾನ ಮಾತ್ರ ದೋಷವಲ್ಲ, ಪ್ರಸಿದ್ಧಸ್ಮಶಾನಗಳು ದೋಷವೆಂದರೆ, ಪ್ರಸಿದ್ಧ ಸ್ಮಶಾನದಲ್ಲಿ ಶಿವನಿಲ್ಲವೆಂದು ಹೇಳುವಿರಾ ? ಹಾಗಾದರೆ ರುದ್ರಭೂಮಿ ಪದದ ಅರ್ಥವೇನು ? ಪುರಾಣಗಳು ಸಾಂಸಾರಿಕ ಅವಸ್ಥೆಯಲ್ಲೇ ರುದ್ರದೇವರಿಗೆ ಸ್ಮಶಾನವಾಸಿತ್ವವನ್ನು ಹೇಳಿದೆ.

2) ಸ್ಮಶಾನ ವಾಸಿತ್ವವು ರುದ್ರದೇವರ ಪರಮ ಕರುಣೆಗೆ ದ್ಯೋತಕವಾಗಿದೆ ಎಂದರೆ ಅದು ಸರಿಯಲ್ಲ. ಲೋಕದಲ್ಲಿ ಸಮರ್ಥನಾದವನು ತಾನು ದೋಷಭಾಗಿಯಾಗದೆ ಇನ್ನೊಬ್ಬರನ್ನು ಅನುಗ್ರಹಿಸುತ್ತಾನೆ. ಬೇರೆಯವರಿಗಾಗಿ ತಾನು ಸ್ವಯಂ ದೋಷವಂತನಾಗಿ ಪರರನ್ನು ಸಂರಕ್ಷಿಸುತ್ತಾನೆಂದರೆ ಅದು ಅವನ ಅಸಾಮರ್ಥ್ಯವನ್ನು ಸೂಚಿಸುತ್ತದೆ. ಆದ್ದರಿಂದ ಇದು ಸಮಾಧಾನ ವಿಷಯವಲ್ಲ.

3) ಶಿವನ ಅನುಚರರಾದ ಭೂತಗಣಗಳು ಶಿವಾಂಶರೆಂಬ ವಿಷಯದಲ್ಲಿ ಕೂರ್ಮ ಪುರಾಣವನ್ನು ಉದಾಹರಿಸಲಾಗಿದೆ.

ಹಾಗಾದರೆ, ಶಿವಾಂಶರಾಗಿರುವುದರಿಂದ ಭೂತಗಣಗಳು ಶಿವನಿಂದ ಅಭಿನ್ನವೇ? ಅಥವಾ ಅವನಿಂದ ಆವಿಷ್ಟರಾಗಿ ಭಿನ್ನವೇ? ಎಂದು ನಮ್ಮ ಪ್ರಶ್ನೆ. ಮೊದಲನೆಯದಲ್ಲ ಸರ್ವವೂ ಶಿವಾಭಿನ್ನವಾಗಿರುವುದರಿಂದ ಪ್ರತ್ಯೇಕವಾಗಿ ಭೂತಗಣಗಳಿಂದ ಅಭೇದವನ್ನು ಹೇಳುವುದು ವ್ಯರ್ಥ. ಪಿಶಾಚಿಗಳು ಮಾತ್ರ ಶಿವಾಭಿನ್ನವೆಂದರೇ, ಗುಣೋತ್ಕರ್ಷ ಪ್ರದರ್ಶಕ ರೂಪವನ್ನು ಬಿಟ್ಟು ಕ್ಷುಲಕ ರೂಪ ಗ್ರಹಣವೇಕೆ? ಅದು ಅನುಚಿತ. ಎರಡನೆಯದೂ ಅಲ್ಲ . ಶಿವನಿಂದ ಭಿನ್ನವೇ ಎಂದರೆ ಅದ್ವೈತ ಹಾನಿ ಎಂಬ ದೋಷ ಬರುತ್ತದೆ. ಆದ್ದರಿಂದ ಇದು ದುಷ್ಟಪಕ್ಷವಾಗಿದೆ.

4) ನಿತ್ಯನಾದ ಸದಾಶಿವನು ಅನಂತಕಲ್ಪೀಯ ಬ್ರಹ್ಮ ಕಪಾಲಮಾಲಾಧಾರಣವನ್ನು ಮಾಡಿರುವುದು ಅವನ ಪರಮೋತ್ತಮತ್ವವನ್ನು ತೋರಿಸುತ್ತದೆ ಎಂದು ಹೇಳಿರುವುದು ಸರಿಯಲ್ಲ.

ಒಂದು ಕಪಾಲ ಧಾರಣವೇ ಅಪವಿತ್ರವೆಂದ ಮೇಲೆ ಅನಂತ ಬ್ರಹ್ಮಕಪಾಲಗಳನ್ನು ಧರಿಸುವುದು ಅಪವಿತ್ರವಲ್ಲವೇ? ಸುತರಾಂ ದೋಷತಮವೇ. ಪ್ರಾಕೃತವಾದ ತಲೆಬರುಡೆಯು ಆಯಾಯ ಕಲ್ಪದಲ್ಲೇ ಲಯವಾಗುವುದರಿಂದ, ಉತ್ತರ ಕಲ್ಪದಲ್ಲಿ ಹಿಂದಿನ ಕಲ್ಪದ ಕಪಾಲ ಧಾರಣೆಯು ಅಸಾಧ್ಯ.

ಅದೂ ಅಲ್ಲದೆ, ತನ್ನ ಬೆರಳಿಗೆ ಅಂಟಿಕೊಂಡಿದ್ದ ಬ್ರಹ್ಮಕಪಾಲವನ್ನು ಬಿಡಿಸಿಕೊಳ್ಳಲು ಶಿವನು ಎಂತಹ ಕಠಿಣ ತಪಸ್ಸನ್ನು ಆಚರಿಸಿದನೆಂದು ಪುರಾಣಗಳಲ್ಲಿ ಸ್ಪಷ್ಟವಾಗಿದೆ. ಆದ್ದರಿಂದ ಬ್ರಹ್ಮಕಪಾಲಮಾಲಾಧಾರಣೆಯು ಶಿವನ ಪರಮೋತ್ತಮತ್ವ ದ್ಯೋತಕವಲ್ಲ.

## ಶಿವನ ವಿಷ್ಣ್ವೋತ್ತಮತ್ವ ನಿರಾಕರಣೆ

"ಮಾಣಿಕ್ಯಮಂಜರಿ"ಯಲ್ಲಿ ವಿಷ್ಣುವಿನ ನಿಗ್ರಹದಿಂದಲೂ ರುದ್ರನ ಉತ್ತಮತ್ವವನ್ನು ತಿಳಿಯಬಹುದು ಎಂದು ಹೇಳಿದೆ. ಅದಕ್ಕೆ ಸಂವಾದಿಯಾಗಿ ಸ್ಕಾಂದ ಪುರಾಣ ವಚನವನ್ನು ಉದಾಹರಿಸಲಾಗಿದೆ :

**ಯಸ್ಯಹಸ್ತೇ ಬ್ರಹ್ಮಶಿರಃ ಯಸ್ಯ ಹಸ್ತೇ ಹರೇ ಶವಃ ।**
**ಯಸ್ಯ ಹಾರೇ ಕೂರ್ಮಪೃಷ್ಠಂ ತಸ್ಯ ಕೋಧಿಕಃ ಸಮಃ ॥**

ಇದು ಅತ್ಯಂತ ಅಯುಕ್ತ

ಏಕೆಂದರೆ ಆ ಗ್ರಂಥದಲ್ಲೆ ಮಂದಿನ ಭಾಗದಲ್ಲಿ -

"**ಯೋ ವಿಷ್ಣುಸ್ಸ ಸ್ವಯಂ ಬ್ರಹ್ಮ**" ಎಂಬುದಾಗಿ ಶಿವ ವಿಷ್ಣುಗಳಿಗೆ ಅಭೇದವನ್ನು ಹೇಳಿದೆ. ಹಾಗೆಯೇ ವಿಷ್ಣುಭಕ್ತರು ಶಿವಾವಿರೋಧಿಗಳೆಂದು ಹೇಳಿದೆ. ಈಗ ಶಿವನು ವಿಷ್ಣುವಿನಿಗಿಂತ ಉತ್ತಮನೆಂದು ಹೇಳಿದರೆ ಸ್ವವ್ಯಾಹತವಾಗುತ್ತದೆ.

ಹಾಗಾದರೆ ಯಸ್ಯ ಹಸ್ತೇ..... ಎಂಬ ಶ್ಲೋಕದ ಅರ್ಥವೇನೆಂದರೆ,

ಯಾರ ಹಸ್ತದಲ್ಲಿ ಬ್ರಹ್ಮಶಿರಃ ಅಂದರೆ ಬ್ರಹ್ಮ ಎಂದರೆ ವೇದ, ಶಿರ ಎಂದರೆ ವೇದಗಳ ಶಿರಸ್ಥಾನೀಯವಾದ ಉಪನಿಷತ್ತುಗಳು. ಬ್ರಹ್ಮಶಿರಃ ಅಂದರೆ ಉಪನಿಷತ್ತುಗಳನ್ನು ಚೆನ್ನಾಗಿ ಅರಿತವನು ಎಂದರ್ಥ.

ಹರೇ ಶವಃ ಅಂದರೆ ಶಂ ಎಂದರೆ ಸುಖ. ಅದನ್ನು ಕೊಡುವುದು ವಃಜ್ಞಾನ ಹರಿಗುಣವಿಷಯಕವಾದ ಸುಖಪ್ರದ ಜ್ಞಾನ ಯಾರ ವಶವಾಗಿದೆಯೋ ಅರ್ಥಾತ್ ಹರಿವಿಷಯಕ ಜ್ಞಾನಿ ಎಂದರ್ಥ.

ಕೂರ್ಮ ಪೃಷ್ಠಂ ಎಂದರೆ ಯಾರ ಸಂಬಂಧಿಯಾದ ಕೂರ್ಮ ಪೃಷ್ಠವು ಸಮಾಧಿಯೇ ಮೊದಲಾದವುಗಳಿಗೆ ಸಾಧನವಾದ ಆಸನ. ಹಾರೇ ಎಂದರೆ ಹರಿ ಸಂಬಂಧಿನಿ ಭಕ್ತೇ. ಅಂದರೆ ಹರಿ ಸಂಬಂಧಿಯಾದ ಭಕ್ತನಲ್ಲಿ ಯಾವ ಕೂರ್ಮಾಸನವು

ಸಾಧನವಾಗಿದೆಯೋ ಅಂತಹ ವೇದಜ್ಞಾನಿಯಾದ ಹರಿಗುಣ ಪ್ರತಿಪಾದಕ ಶಿವನಿಗಿಂತ ಮನುಷ್ಯರಲ್ಲಿ ಯಾರು ಅಧಿಕರು ಅಥವಾ ಸಮರು ಇದ್ದಾರೆ? ಯಾರೂ ಇಲ್ಲ ಎಂದರ್ಥ. ಅರ್ಥಾತ್ ಸಾಧಕರಲ್ಲಿ ರುದ್ರದೇವರು ಉತ್ತಮರು ಎಂದರ್ಥ.

## ಭಸ್ಮಾಸುರ ವಧಾ ಪ್ರಸಂಗ

"ಶಿವನು ಭಸ್ಮಾಸುರನಿಗೆ ಹೆದರಿ ಪಲಾಯನ ಮಾಡಲಿಲ್ಲ. ಆದರೆ ಭಸ್ಮಾಸುರನ ವಧೆಗಾಗಿ ವಿಷ್ಣುವಿನಿಂದ ತಾಳಲ್ಪಟ್ಟ ಮೋಹಿನಿ ರೂಪದಲ್ಲಿ ಭೈರವನನ್ನು ಉತ್ಪಾದನೆ ಮಾಡಲೋಸುಗ ಭಸ್ಮಾಸುರನನ್ನು ವಿಷ್ಣು ಸಮೀಪ ಕಳುಹಿಸಲು ಈ ರೀತಿ ಮಾಡಿದನು. ಇದನ್ನು ಸ್ಕಾಂದ ಪುರಾಣದಲ್ಲಿ ಹೇಳಿದೆ" ಎಂದರೆ,

ಇಲ್ಲ. ಶಿವನು ವೃಕಾಸುರನ ಭಯದಿಂದ ಪಲಾಯನ ಮಾಡಿದ ಕಾರಣವನ್ನು ಬಿಟ್ಟು ಅನ್ಯ ಕಾರಣಗಳಿಲ್ಲದಿರುವುದರಿಂದ ಭೈರವನ ಉತ್ಪಾದನೆಗಾಗಿ ಈ ರೀತಿ ಮಾಡಿದನೆಂಬ ವಿಷಯದಲ್ಲಿ ಪ್ರಮಾಣವಿಲ್ಲ. ಉದಾಹರಿಸಿದ ಶ್ಲೋಕವು ಈ ಅರ್ಥವನ್ನು ಹೇಳುತ್ತಿಲ್ಲ.

ಭೈರವನ ಉತ್ಪಾದನೆಗೂ ಭಸ್ಮಾಸುರನ ವಧೆಗೂ ಏನು ಸಂಬಂಧ? ಭೈರವನ ಉತ್ಪಾದನೆಗಾಗಿ ತಾನು ವಿಷ್ಣುವಿನ ಬಳಿಗೆ ಹೋದರೆ ಸಾಕು, ಭಸ್ಮಾಸುರನನ್ನು ಕಳುಹಿಸುವುದು ವ್ಯರ್ಥ. ಮೋಹಿನಿಯನ್ನೇ ಭಸ್ಮಾಸುರನ ಬಳಿಗೆ ಕಳುಹಿಸುವುದರಿಂದಲೇ ಭಸ್ಮಾಸುರನ ವಧೆ ಶಕ್ಯವಾಗುತ್ತಿತ್ತು. ಆದರೆ ಶಿವ ಏಕೆ ಹೆದರಿಕೆಯಿಂದ ಪಲಾಯನ ಮಾಡಿದ ಎಂಬ ಶಂಕೆ ಬರುತ್ತದೆ. ಅಪ್ಪಯ್ಯದೀಕ್ಷಿತರ ಗ್ರಂಥದ ಉದಾಹರಣೆಯು ಸ್ವವ್ಯೂಹ ರಮಣೀಯ ಮಾತ್ರ.

ಮಾಧ್ವರು, ಶಿವನಿಗೆ ತಾಮಸತ್ವವನ್ನು ಹೇಳಿದೆ ಎಂಬ ಭ್ರಾಂತಿಯಿಂದ ಅವನನ್ನು ಖಂಡಿಸಲು ಹೊರಟಿದ್ದಾರೆ ಎಂಬುದು ತೀರಾ ಅಸಂಗಂತ. ಶ್ರೀ ಮಧ್ವಾಚಾರ್ಯರಾಗಲಿ ಅಥವಾ ಅವರ ಅನುಯಾಯಿಗಳಾಗಲಿ ಎಲ್ಲೂ ಶಿವ ನಿಂದನೆಯನ್ನು ಮಾಡಿಲ್ಲ ಅಥವಾ ಅವನ ತಾಮಸತ್ವವನ್ನು ಹೇಳಿಲ್ಲ.

## ಶಂಕರ ಚರಿತ್ರೆ ವಿಚಾರ

"ಮಾಣಿಕ್ಯಮಂಜರಿ"ಯಲ್ಲಿ 2ನೇ ಅಧ್ಯಾಯದಲ್ಲಿ , ಶಂಕರರ ಚರಿತ್ರೆ ಶುದ್ಧ ಎಂದು 7ವರ್ಣಿಸಲು ಹೊರಟು ಅವರು ಶ್ರೀ ರುದ್ರದೇವರ ಅವತಾರ ಎಂಬುದನ್ನು ನಿರೂಪಿಸಲು ಅನೇಕ ಪ್ರಮಾಣಗಳನ್ನು ಉದಾಹರಿಸಲಾಗಿದೆ. ಹಾಗೆಯೇ ಅವರು

